# श्रीकृष्णचन्द्राभ्युदयम् ।

म. म. श्रीमत्कविशङ्करलालप्रणीतम् ।

ॐ हरिः



श्रीमते शास्त्रिवर्याय
सत्यव्रताय धीमते।
प्रेम्णा समर्पितं इदं
पुस्तकं ज्येष्ठ शास्त्रिणा॥

# श्रीकृष्णचन्द्राभ्युदयम्

( छायानाटकम् )

श्रीमन्महामहोपाध्याय-कविशिरोमणि-

## शङ्करलालशास्त्रि-

निर्मितम्

## शास्त्रिहाथीभाईप्रणीतया

ज्योत्स्नाख्यया व्याख्यया समलङ्कृतम्

सह चीनुभाई माधवलालबारोनेटवितीर्णोदाराश्रयेण

म. म. कविशिरोमणिशङ्करलालतनुज-

खेलशङ्करेण प्रकाशितम्

मुम्बय्यां

फोर्टसर्कलाख्ये प्रविभागेऽष्टमसंख्याके सासूनभवने

'मणिलाल इच्छाराम देसाई' इत्यनेन स्वीये

'गुजराती' मुद्रणयन्त्रालये मुद्रितम् ।

---



---

विक्रमसंवत् १९७३. खिस्ताब्दः १९१७.

। मूल्यं सपादं रूप्यकम् ।

शब्दानां विविनक्ति गुम्फनविधीनामोदते सूक्तिभिः
सान्द्रं लेढि रसामृतं विचिनुते तात्पर्यमुद्रां च यः ॥
पुण्यैः सङ्घटते विवेक्तृविरहादन्तर्मुखं ताम्यतां
केषामेव कदाचिदेव सुधियां काव्यश्रमज्ञो जनः ॥

( राजशेखरः । )



सरदार सर चीनुभाई माधवलाल बारोनेट सी. आई. ई.

जन्म–सं. १९२० वैशाख वदि ७. विदेह–सं. १९७२ माह वदि १४.



महामहोपाध्याय शीघ्रकवि शङ्करलाल माहेश्वर.

जन्म–सं. १८९९ आषाढ वदि ४. विदेह–सं. १९७२ आषाढ सुदि १५.

# अर्पणपत्रम् ।

श्रीमद्भ्यो यदि वाऽर्पयामि विनयादेतं प्रबन्धं नवं
सैष स्याद् भवतां प्रियो ननु किमित्यापृच्छ्यते चेज्जनः ।
प्रायस्तस्य मुखं प्रसादविधुरं सञ्जायते ह्यञ्जसा
ग्रन्थान् कर्तुमयं प्रयोजयति मामित्याकलय्य स्वयम् ॥ १ ॥
तस्मात्तादृशदुर्मुखेक्षणभयं त्यक्त्वा, समासाद्य यन्
नाद्याप्यल्पमपीह कोपि भजते सङ्कोचलेशं जनः ।
तस्मै श्रीगिरिजाहृदीशपदयोर्युग्माय नाट्यं त्विदं
व्याख्यासंवलितं समर्प्य नितरामानन्दमाविन्दते ॥ २ ॥

श्रीशङ्करलालात्मजः
रेवाशङ्करशर्मा ।

# प्रस्तावना ।

श्रीमन्महामहिमजामकुलावतंस-
श्रीमन्नवानगरराज्यधुरन्धरस्य ॥
औदार्यधैर्यरणशौर्यनिधेः प्रताप-
कीर्त्याश्रयस्य रणजित्प्रभुसिंहनाम्नः ॥ १ ॥

श्रीमोरबीपुरनृपेण समं कदाचि-
दासीत् प्रवाससहवासविनोदलाभः ॥
वार्त्ताभिरेव किल वीरमगामवाँका-
नेरोभयान्तरमुभावपि नीतवन्तौ ॥ २ ॥

तत्राह मोरबिनृपो ननु जामभूप !
त्यक्तं कथं परिचयेन विलायतस्य ॥
प्रायः स्वधर्मचरणं भवतेति जाने
यस्मान्न कण्ठितिलकादि दधासि किञ्चित् ॥ ३ ॥

किं वा भवान् तिलकमेव हि धर्मचिह्नं
जानाति ! नैव तदिदं किल युक्तरूपम् ॥
इत्याह जामनृपतिस्तदनुप्रदिष्टं
श्रीमोरबीपुरवरस्य पुरन्दरेण ॥ ४ ॥

श्रीकृष्णवंशजनिता वयमेव तस्माद्
भक्तिर्विधातुमुचिता भवता तदीया ॥
तस्मिन् क्षणेऽथ रणजिन्नृपतिर्बभाषे
श्रीमोरबीनरपतिं प्रति वाचमेवम् ॥ ५ ॥

तत् सत्यमेव भवता यदभाणि कृष्ण-
वंशोद्भवा वयमितीह न कापि शङ्का ॥
श्रीकृष्णजन्म समभूद्यदुराजवंशे
जाता वयं तदनु तस्य परम्परायाम् ॥ ६ ॥

श्रीकृष्ण आदिपुरुषे मम पूज्यभावो
न्यूनस्तु नैव भवता परिकल्पनीयः ॥
ईशावतारमहमेनमतीव मान्यं
मन्ये तदीयवचनेष्वपि गौरवं मे ॥ ७ ॥

भक्तिं तु यस्य कुरुते स्म स कृष्णचन्द्र-
स्तस्येश्वरस्य परमादरतः करोमि ॥
बिल्वेश्वरं स तपसा समुपास्य लेभे
पुत्रानितीदमखिलं हरिवंश उक्तम् ॥ ८ ॥
गत्वाऽथ मोरविनृपो निजराजधानी-
माहूय शास्त्रिवरशङ्करलालमेतत् ॥
वृत्तं निवेद्य सनयं परिपृच्छतिस्म
'किं कृष्णचन्द्रभगवान् शिवभक्त आसीत् ?' ॥ ९ ॥
तं प्रश्नमुत्तरयितुं किल भारतीय-
माख्यानमुक्तमथ शङ्करलालविज्ञैः ॥
द्रौणिं यदाह युधि सत्यवतीतनूजः
श्रीशङ्करार्चनकृतोर्हरिपार्थयोस्तत् ॥ १० ॥
वृत्तान्त एष गदितो नगरागतेन
मह्यं यदा बुधवरेण तदा मयोक्तम् ॥
संशेरते हि बहवः शिवभक्तभावे
कृष्णस्य नाधिगतशास्त्ररहस्यतत्त्वाः ॥ ११ ॥
तत्तादृगज्ञजनसंशयभिन्निबन्धं
कश्चिद् भवन्त उचितं रचयन्तु येन ॥
लोके भवेद्धरिहरोभयभेदभाव-
उन्मूलितः सकललोकशिवावरोधी ॥ १२ ॥
"व्याख्या क्रियेत भवता यदि मत्कृतीनां
सम्यक् श्रुतिस्मृतिवचोनिचयेन युक्ता ॥
पौराणिकैश्च वचनैः सकलं मदुक्तं
सद्युक्तिभिश्च नितरामुपपाद्यते चेत् ॥ १३ ॥
कुर्यां निबन्धमनघं दशरूपकोक्त-
लक्ष्मानुसारिरचनं नचिरेण नूनम् ॥
श्रीपार्वतीहृदयवल्लभदेवसेवा-
हेवाकिकृष्णभगवच्चरितोपपन्नम् ॥ १४ ॥
यस्मान्मदुक्तिमपि साम्प्रतिका जना द्रा-
गापातदर्शिन इहापरथा नयेयुः ॥

क्रुद्ध्येयुरप्यभिमतागमवाक्यजात-
श्रद्धाभरा अनधिगम्य मदुक्तिमर्म " ॥ १५ ॥

इत्येवमुक्तवति गौरवभाजि बन्धा-
वुक्तं मया तदनु मित्रवशंवदेन ॥
कर्त्तास्मि युष्मदुदितोक्तिसमर्थनेन
टीकामहं गुरुवरस्मरणावलम्बः ॥ १६ ॥

एवं प्रतिश्रववचो मम संनिशम्य
सोत्साहमारभत रूपकवर्यमेतद् ॥
पूर्णं च तूर्णमकरोत्सकविप्रकाण्डः
संवत्सरेण सहजप्रतिभानुरूपम् ॥ १७ ॥

संश्रुत्य नाटकमिदं सरचीनुभाई-
सञ्ज्ञा महाशयशिरोमणयः प्रसन्नाः ॥
स्वैरं च मुद्रयितुमेतदुदारभावा-
ट्टीकायुतं समदिशन् सहसा तदानीम् ॥ १८ ॥

यातेषु तेषु दिवमप्यनघा तदीया
पत्नी पतिव्रतपरा हि सुलोचनाख्या ॥
तत्पुत्ररत्नमुदयी गिरिजाप्रसादः
सम्पूर्णमुद्रणमकारयतामुदारौ ॥ १९ ॥

तादृङ्महाशयवितीर्णसदाश्रयेण
सञ्जातमुद्रणमिदं जगतीह भूयात् ॥
ध्वन्यध्वनि प्रचरतां रसिकोत्तमाना-
मानन्ददं हरिहरोभयभक्तिभाजाम् ॥ २० ॥

मूलं तु रम्यमखिलं शिवभक्तियुक्तं
यस्मादसौ कवयिता शिवरूप आसीत् ॥
टीकासु यद् भवति रम्यमिदं गुरूणां
स्याच्चेदवद्यमिह यत्तदिदं ममैव ॥ २१ ॥

व्याख्यानमेतदसमञ्जसमित्युपेक्ष्य
दूरेऽस्यतीतरकृतिं तु नमोऽस्तु तस्मै ॥
जागर्त्तु कोपि वसुधावलयेऽनसूयः
सन्मार्मिकः प्रयतनं हि यदर्थमेतत् ॥ २२ ॥

यत्किञ्चिदत्र कविना ग्रथितं हि वस्तु
रम्यं च सम्यगभिनेयपथानुकूलम् ॥
यच्चापि भक्तिवशतोऽभिनिवेशितं वा
तत्सर्वमीश्वरगुणानुगुणं हि वेद्यम् ॥ २३ ॥

नो मे हरावपि हरे च विशेषभावो
नो वा कवेरिति तु तद्वचनैः प्रतीतम् ॥
उत्कर्षमाविरकरोद्यदिहेश्वरस्य
व्यासादिशिष्टवचसामनुवाद एषः ॥ २४ ॥

तस्मादमर्षपरिवर्जितहार्दभावा
भावाववोधनपुरस्सरदर्शनेन ॥
कुर्वन्तु मार्मिकबुधाः कृतिनः कृतित्वं
विद्वद्भिरादृतमुपैति हि धन्यभावम् ॥ २५ ॥

श्रीकृष्णचन्द्राभ्युदयं ह्युपेतं
सन्नाटकं पञ्चभिरेतदङ्कैः ॥
सटीकमभ्यावहतु प्रतिष्ठा-
माचन्द्रतारं कृपया शिवस्य ॥ २६ ॥

आशासान इति श्रीमद्रणजित्सिंहभूपतेः ॥
आस्थानपण्डितोऽस्त्येष सत्सौजन्यवशंवदः ॥ २७ ॥

शास्त्री हाथीभाईशर्म्मा.

## उपोद्घातः

इतिहासरत्नस्य श्रीमहाभारतस्य प्राशस्त्ये प्रामाण्ये च कः संशेते बुधः? 'भारतं पञ्चमो वेदः' 'वेदान् भारतपञ्चमान्' इत्यादीन्यार्षवचांसि यस्य वेदसमानकक्षत्वं सघोषमाघृणन्ति। तस्मिन्नेतस्मिन्नुक्तं वर्णितं च वस्तु अवष्टभ्य बहुभिः कविभी राजशेखरादिभी रचितानि बालभारतादीनि रूपकाणि लोकमानन्दयन्ति। अयमपि महाकविरदसीयमेव कथावस्तु सङ्गृह्य रूपकमेतत् प्रणीतवान्। प्रकरणस्य चास्य पञ्च सन्त्यङ्काः।

'पञ्चाङ्कमेतदपरं दशाङ्कं नाटकं परम्।'

इति दशरूपके दशाङ्कस्य परत्वं पञ्चाङ्कस्य चाऽपरत्वमाभाषितम्। उभयोरपि प्रकरणपदेन व्यवहारोपि प्राचीनसम्मतो यतः कविवर्यः कालिदासः शाकुन्तलारम्भे सूत्रधारमुखेन 'कतमत् प्रकरणमाश्रित्यैनमाराधयिष्यामः' इति रूपकसामान्यपरत्वेन प्रकरणपदं प्रयुञ्जानः प्रकरणपदं नाटकनाटिकादिसामान्यार्थबोधकं, न केवलं दशाङ्करूपकेष्वेव परिभाषितमिति स्पष्टीचकार।

अत्र नाटके श्रीद्वारकायां राज्यं पालयतः श्रीकृष्णचन्द्रप्रभोः षोडशसहस्रान्तःपुरविहरणपटोर्योगमायामधिष्ठाय प्रतिकलत्रमन्दिरं सर्वदा सममेव सांनिध्यमर्पयतः एकदा महति प्रत्यूष एवोत्थायाऽलक्षितमेव बहिर्गमनम्, त्यक्तनिद्राणां राज्ञीनां श्रीकृष्णादर्शनेन सम्भूय मिथः पृच्छा। सर्वाभिर्यथात्मसङ्कल्पं श्रीकृष्णगमनशङ्कोट्टङ्कनम्। श्रीराधायां श्रीकृष्णस्य सातिशयरागितया तत्समीपगमनं शङ्कितवत्या सत्यभामया सह रुक्मिण्याः सरलस्वभावायाः कश्चिद् वाग्व्ययः। तेन च सत्यभामायाः सरोषकल्पत्वमाशङ्क्य जाम्बवतीकर्तृको माध्यस्थ्येन प्रसङ्गान्तरापादनाय भित्तिस्थचित्रदर्शनोपक्षेपः। अत्रैव श्रीकृष्णनिर्मितशिवचरित्रचित्रदर्शनेन श्रीकृष्णस्य शिवभक्तत्वबोधकबीजोपन्यासः। अस्मिन्नवसरे लक्ष्मणया 'यदि कोपि मामिदानीं प्रभुं दर्शयेत् तस्मै हीरकहारं ददामि' इति स्वनिश्चये प्रकटितें, भगवद्दर्शनस्य हारादिसाधनसाध्यत्वाक्षेपपुरस्सरं तस्य केवलं प्रेमभक्तिलभ्यत्वव्यवस्थापनपरं नारदवचनम्। तदुक्तानुष्ठानेन च सद्य एव श्रीकृष्णस्य तत्रागमनं, सर्वासां राज्ञीनां तद्दर्शनलाभश्च।

अस्मिन्नेव क्षणे रुक्मिण्यादिभिः स्वस्वभावानुरूपप्रश्नपरम्परोपन्यासे भद्राप्रश्ने 'देवर्षिणा नारदेन' इत्यादिवचनश्रवणादेव अवसरासादनमुदितस्य नारदस्यागमनम्। बहुकलत्रतादोषमुद्भावयतो नारदस्य श्रीकृष्णेन साकं वाग्वि-

-नोदः । तदानीमेव राज्ञीप्रश्नोत्तरतया श्रीकृष्णेन—ब्राह्ममुहूर्त्तादारभ्य मध्यान्हप-र्यन्तमनुष्ठितस्य महाशिवरात्रिनिमित्तकस्य श्रीशिवाराधनस्य-निवेदनम् । अत्र शिवविष्ण्वोरभेदभावसाधकवचनोपन्यासः । श्रीकृष्णाज्ञया च राज्ञीनां महाशि-वरात्रिव्रतनियमग्रहणम् । नारदस्य सोल्लुण्ठवचनेन राज्ञीषु प्रेमवैषम्यपरिहारार्थं श्रीकृष्णकृतप्रश्नः, तदुत्तरतया जाम्बवतीमुखेन सर्वासां समानपुत्रप्राप्तिकामनावि-निवेदनम् । तत्सिद्धये च श्रीकृष्णस्य तपश्चरणाय वनगमनसङ्कल्पः । नारदानु-मत्या च प्रस्थानमिति प्रथमाङ्कवस्तुसङ्क्षेपः । अस्मिन्नङ्के श्रीकृष्णस्य शिवाराध-कत्ववर्णनं केवलमनुवाद एव भारतवचसाम् । आनुशासनिके पर्वणि अ० १४—

ब्रह्मविष्णुसुरेन्द्राणां रुद्रादित्याश्विनामपि ।
विश्वेषामपि देवानां वपुर्द्धारयते शिवः ॥

इत्यादि शिवस्य सर्वदेवाधिदेवत्वमुपक्रम्य
'न शुश्रुम यदन्येषां लिङ्गमभ्यर्चितं सुरैः । ' २३०
इति च व्यतिरेकेण महादेवत्वं प्रसाध्य—
'यस्य ब्रह्मा च विष्णुश्च त्वं चापि सह दैवतैः ।
अर्चयन्ति सदा लिङ्गं तस्माच् श्रेष्ठतमो हि कः । ? ' ॥२३२॥

इत्यादिवाक्यैः सूपपादितमेव शिवस्य सर्वाराध्यत्वमत्रानूद्यते ॥ शान्ति-पर्वणि राजधर्मे अ० ५३—

स ध्यानपथमाविश्य सर्वज्ञानानि माधवः ।
अवलोक्य ततः पश्चाद् दध्यौ ब्रह्म सनातनम् ॥ २

इत्यत्र स्पष्टमेव विष्णोः शिवाराधकत्वमुपवर्णितम् । ब्रह्मपदस्य शिव-प्रतिपादकत्वनैयत्यात् । सूतसंहितायां यज्ञवैभवखण्डे अ० १५

'त्वं ब्रह्म परमं गुह्यं सदासद्भावभावनः ।
नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः ॥ २४ ॥

इत्यत्र 'मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ' त्यत्र च ब्रह्मपदेन शिवस्यैव बोधनात् ॥ श्रीमद्भागवते च अष्टमस्कन्धे अ० ७—

'भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ' । १९-२८ अनेन शिवस्य सर्वेषां शरण्यत्वकथनेन सर्वाराध्यत्वस्य समर्थनात् ।

यदि वस्तत्र विश्रम्भो दानवेन्द्र जगद्गुरौ '

स्कं० १० उत. अ० ८८ श्लो. ३३

'क्षेमी स्यात् किमु विश्वेशे कृतागस्को जगद्गुरौ।'

स्कं० १० उत. अ० ८८ श्लो. ३९

इत्यादि श्रीमद्भागवते शिवस्य जगद्गुरुत्वस्य चतुर्विंशतिवारसुद्घोषणादु-न्नितमेव तस्य सर्वाराध्यत्वमिति।

यच्चाऽप्यस्मिन्नङ्के 'न शिवद्वेषिणे सत्यं परितुष्याम्यहं क्वचित्'। ४० इत्यादि श्रीकृष्णवचनं तदपि, लैङ्गे उत्तरार्द्धे षष्ठाध्याये—अलक्ष्म्या निवास-योग्यस्थानायाभ्यर्थितेन भगवता श्रीविष्णुना स्वयमेव—

ये रुद्रमनघं शान्तं शङ्करं नीललोहितम्।
अम्बां हैमवतीं वापि जनित्रीं जगतामपि॥ ८३॥
मद्भक्ता निन्दयन्त्यत्र तेषां वित्तं तवैव हि।
येपि चैव महादेवं विनिन्द्यैव यजन्ति माम्॥ ८४॥
मूढा ह्यभाग्या मद्भक्ता अपि, तेषां धनं तव।
यस्याज्ञया ह्यहं ब्रह्माऽन्ये च वर्त्तामहे सदा॥ ८५॥
ये यजन्ति विनिन्द्यैव मम विद्वेषकारकाः।
मद्भक्ता नैव ते भक्ता इव वर्त्तन्ति सर्वदा॥ ८६॥
तेषां गृहं धनं क्षेत्रमिष्टापूर्त्तं तवैव हि।
इत्युक्त्वा तां परित्यज्य लक्ष्म्याऽलक्ष्मीं जनार्दनः॥ ८७॥
जजाप भगवान् रुद्रमलक्ष्मीक्षयसिद्धये॥

इत्याद्यनेकवाक्योपबृंहितम्॥

द्वितीयाङ्के शिशुपालदन्तवक्त्रयोर्मिथ आलापेन श्रीकृष्णपुत्रहरणादि सङ्ख्यावेदनम्। तत्र शम्बरकृतमायिकप्रपञ्चेन श्रीकृष्णप्रवृत्त्यधिगमस्तेन च श्रीकृष्ण तपोभङ्गाय प्रयत्नारम्भ एव विष्कम्भकसमाप्तिः।

देवकीवसुदेवयोः श्रीकृष्णसन्तत्यर्थं चिन्तोपक्षेपस्ताभ्यामेव नारदोपदिष्ट-शिवाराधनाय श्रीकृष्णस्य तपोवनं प्रति प्रेषणम्। नारदेन सहैव श्रीसदाशिवा-राधनाय श्रीकृष्णस्य तपोवनगमनमिति द्वितीयाङ्कवस्तुसङ्क्षेपः॥

तृतीयाङ्कारम्भे रुक्मिण्यादीनां श्रीकृष्णवियोगप्रयुक्तचिन्ता, श्रीकृष्ण कुशलाय च सर्वासां सम्भूय तपोवनदेश्ये स्वस्वोपवने तपश्चरणसङ्कल्पपूर्विका शिवाराधनप्रतिज्ञा, शिवस्तुतौ लीनानां तासां मूर्च्छावेशस्तदैव श्रीराधादीना-मागमनं, राधाकृतभगवद्गुणगानेन सर्वासां मूर्च्छापगमः। ततो राधाकृतोपदेशे-

२

नापि अनवबुद्धकृष्णसतत्त्वाः सर्वाः, श्रीपार्वत्या आगत्य कृतसान्त्वनाः श्रीकृष्णस्य तपोवनवृत्तान्तमवगम्य मुदिता इति तृतीयाङ्कवस्तु ॥

चतुर्थाङ्के च पुनरपि श्रीकृष्णवृत्तान्तशेषमवगन्तुमातुराः सर्वा राज्ञ्यो मण्डपे मिलितास्तत्र श्रीपार्वती ताः सर्वाः, श्रीकृष्णस्य तपोवननिवासानुषक्तं तपश्चरणक्लेशं, तदन्तःपाति रैवताद्रौ उपमन्युसमागमादि, तदुपदिष्टप्रकारेण श्रीकृष्णस्य शैवदीक्षापुरस्सरं शिवाराधनमित्यादि सकलं दिव्यदृष्टिप्रदानेन दर्शयति । अत्र उपमन्युकृतपञ्चाक्षरीविद्योपदेशः सर्वार्थसिद्धिमूलमिति तदेव शास्त्रोक्तमनूदितम् ।

नमःशिवाय रुद्राय नमःशक्तिधराय च ।
सर्वविद्याधिपतये भूतानां पतयेनमः ॥ ३२ ॥

श्रीभा. स्कं. ८ अ. १६

नमःशिवाय शान्ताय सत्त्वाय प्रमृडाय च ।
रजोजुषेप्यघोराय नमस्तस्मै तमोजुषे ॥ १७ ॥

श्रीभा. स्कं. १२ अ. १०

इत्यादिविस्तरेण श्रीमद्भागवतादिषु महता गौरवेणास्या एव पञ्चाक्षरी विद्याया निरूपणात् ॥ अत्रान्तरे गजारूढस्य सुदाम्नः प्रवेशः । तदीयहेमवेश्मादि दृष्ट्वा श्रीरुक्मिण्यादयो विस्मयन्ते, श्रीपार्वती समृद्धेः श्रीकृष्णप्रसादप्रभवत्वमुक्त्वा तासां विस्मयमपाकरोति । प्रसङ्गादत्र मैत्रीमाहात्म्यकथनम् । श्रीकृष्णेन सुदाम्ने सालोक्यादिमुक्तित्रयदानम् । कैवल्यमुक्तेरसमर्पणे हेतुत्वेन कैवल्यमुक्ति दातृत्वं शम्भोरेवेति श्रीकृष्णमुखेनैव प्रतिपादितम् । तदर्पणाय च श्रीकेदारनाथस्य सुदामानुग्रहायैव हिमालयात् सुदामपुरागमनं तत्रैव चावस्थानमिति निरूपणम् ।

श्रीकृष्णस्य बिल्वेश्वराराधनाय बटुकाचलगमनम् । तत्र प्रतिदिनं श्रीशङ्करे सहस्रकमलार्पणवस्त्युपहारादि नानाविधोपचारपूजासमारम्भः । एकदा सहस्र कमलमध्यान्मायाविना शम्बरेणागत्यैकं कमलं हंसरूपेण हृतं तदानीमेव—श्रीकृष्णेन स्वं नेत्रकमलमुद्धृत्य सहस्रसङ्ख्यापूरणात् प्रसन्नेन शिवेन—प्रतिकलत्रमेका पुत्री पुत्रदशकं च भविष्यतीति वरं दत्त्वा स्वयमितरानष्टौ वरानम्बिका च षोडशवरान् ददाविति चतुर्थाङ्कवस्तु ॥

पञ्चमाङ्के पुनस्तपःप्रसन्नान्महेश्वरात् सुदामा तत्पत्नी सुशीला च श्रीकृष्णस्य सद्य इष्टसिद्धिं वृणुतस्तावदेव श्रीकृष्णः कृतकृत्यः सुदाम्नः पुरत आगच्छति, तं महेश्वरः सुदाम्ने कैवल्यमुक्तिदानाय प्रेरयति । श्रीकृष्णोपदिष्टं तत्त्वं

भक्त्यभिनिवेशभावितान्तःकरणाय सुदाम्ने नारोचत । ततः श्रीमहेश्वरः स्वयमेव सर्वात्मभावानुभवलक्षणां कैवल्यमुक्तिं दत्त्वा ताभ्यां स्तुत एव श्रीकेदारनाथलिङ्गेऽन्तर्हितः । ततः श्रीकृष्णस्य सुदामपुरप्रवेशः ।

सुधर्मासभायामुग्रसेनवसुदेवादीनामग्रे श्रीकृष्णराज्ञीमां सीमन्तोन्नयनप्रसङ्गेन वस्त्रालङ्कारादिदानायागता भीमसेनादयस्तिष्ठन्ति तावदेवागत्य दासीभिः पुत्रजन्मनिवेदनम् । ब्राह्मणाशीर्वादान्ते च भद्रशीलासुखेन रुक्मिण्याः पुत्रस्य साप्ताहिकस्यैव केनाप्यलक्ष्यभूतेनापहरणकथनम् । तत एव च भीमसेनादीनां तन्मार्गणाय दिगन्तेषु सम्प्रेषणम् । श्रीकृष्णस्यैतद्वृत्तान्तश्रवणेऽपि निष्कम्पहृदयतादर्शनेन बलभद्रविस्मयापनोदाय—शिवभक्तानामस्माकमनिष्टं कर्तुं न कोपि प्रभवतीति-दृढनिश्चयमेव स्वानुद्वेगकारणं पुरस्कुर्वन् श्रीकृष्णस्तदानीन्तनेऽनिष्टेपि भाविकल्याणमाशासानः स्वनिश्चयमतितरामचलयति । स्वेष्टदेवताविषयिणी निष्ठा हि वाञ्छितार्थस्य नैयत्येन सद्यः सिद्धिदा । तथा च मार्कण्डेयः—

पशुपतिवचनाद् भवामि सद्यः क्रिमिरथवा तरुरप्यनेकशाखः ।
अपशुपतिवरप्रसादजा मे त्रिभुवनराज्यविभूतिरप्यनिष्टा ॥८०॥

आनु. अ०

काममेष वरो मेऽस्तु शापो वाऽथ महेश्वरात् ।
न चान्यां देवतां काङ्क्षे सर्वकामफलामपि ॥ २३७ ॥

इति स्वोपास्यविश्रम्भ एव फलतीति तत्त्वविदां वादः ।

अतः परं मायावती ( भूमिकान्तरापन्ना रतिः ) शम्बरगृहपरिचरणप्रसङ्गे दासीव्याजेन निवसन्ती ततो मायाशतं विदितवती । एकदा उपायनतयोपागतं संस्करणार्थं राज्ञा प्रेषितं महामत्स्यं खण्डशः कल्पयन्त्या तया तन्मत्स्योदरात् कुमारो दिव्याकृतिरुपलब्धः । गगनगिरा च 'तवाऽयं पूर्वजन्मपति' रिति प्रतिबोधिता अचिरेणैव वृद्धिमापन्नायास्मै कुमाराय मायाशतमुपदिदेश । मायाशतज्ञानप्रभावान् मदनेन शम्बरमर्दनपूर्वकं तद्राज्यापहरणम् ।

अत्रानेहसि जाम्बवतीतनयस्य साम्बस्य कुरुराजकन्यापहरणकुपितकौरवैर्बन्धनम् । बलभद्रेण तत्र गत्वा बन्धनान्मोचितस्य द्वारकानयनम् । रुक्मिण्या सह श्रीकृष्णो जाम्बवतीभवनं साम्बमुखदर्शनार्थं गच्छति तावत्तत्र जाम्बवतीमुद्विग्नामालक्ष्य पृच्छति श्रीकृष्णः । जाम्बवती, केनाप्यपहृतस्य श्रीरुक्मिणीसुतस्य प्रद्युम्नस्य प्रवृत्त्यनधिगममेव स्वोद्वेगकारणं निगद्य तत्प्रवृत्त्युपलम्भाय

श्रीकृष्णमाग्रहाति । ततश्च श्रीकृष्णः श्रीमहेश्वरप्रार्थनमेव तल्लाभोपायमादिश्य राज्ञीभिः समेत एव श्रीशङ्करप्रार्थनां करोति, तावदेव श्रीशङ्करस्तत्कृतस्मरणमात्रसिद्धसांनिध्यः पुर एव मायावतीमदनाभ्यामन्वित आविर्भूय मायावतीं रतिं, मदनं च प्रद्युम्नमावबोध्य सर्वा राज्ञीः सान्त्वयन् श्रीकृष्णं 'किं ते भूयः प्रियं करोमी' ति यदोपच्छन्दयति तदाऽत्रैवाभ्युदयस्य पर्याप्तत्वमाभाष्य श्रीकृष्णमुखेनैव जगतः कल्याणाभ्यर्थना । प्रजायाः सुखित्वे राजभक्तेरात्यन्तिकहेतुत्वकथनेन राजभक्तिरूपमहामङ्गलाचारपर्यवसितत्वबोधनं प्रकरणापवर्गोत्कर्षः ।

कवेरस्य कृतिरूपाः सन्तीतरे बहवो निबन्धास्तानत्र केवलं नामग्राहमुपदिशामि— सावित्रीचरितम्, ध्रुवाभ्युदयम्, अमरमार्कण्डेयम्, गोपालचिन्तामणिविजयम्, भद्रायुर्विजयम्, एतच्च श्रीकृष्णचन्द्राभ्युदयमिति नाटकषट्कम्; चन्द्रप्रभाचरितमित्याख्या कादम्बरीकल्पा कथा; विद्वत्कृत्यविवेकः, विपन्मित्रमिति निबन्धद्वयम्; श्रीबालाचरितं नाम महाकाव्यमेकविंशतिसर्गात्मकम्; प्रयोगमणिमालाख्या लघुकौमुद्याः साधनक्रमदर्शिनी टीका, इत्येतानि गीर्वाणगीर्निर्माणानि; अध्यात्मरत्नावली—नामकश्चाध्यात्मविद्योपदेशरम्यो गुर्जरभाषानिबन्धः प्राकृतजनानुग्रहाय रचित इत्येवं द्वादश ग्रन्थाः अन्ये च बहवो लघुलेखाः । तत्र भद्रायुर्विजयममरमार्कण्डेयमिति च नाटकद्वयं विहाय सर्वे सञ्जातमुद्रणा लोकानामतीव श्रेयोहेतवः सर्वथा नीतिमया अनाघ्राताश्लीलगन्धतया स्त्रीभिरप्य सङ्कोचं परिशीलयितुमर्हा लोकोपकारमावहन्ति । कवेः प्रसादमधुराणां वाचामाचम्य रसं मोक्षमूलरादयो वैदेशिका अपि महाविद्वांसः सन्तोषमाविरकुर्वन् यतस्तैः प्रकटिताः स्वाभिप्रायास्तेषु तेषु मुद्रिताःसन्ति पुस्तकेषु । प्रश्नोरानागरज्ञातेयस्य कवेरस्ति विशालं जीवितवृत्तं परमतिप्रसङ्गभयादत्रानिरूप्य पृथगेव प्रकटयितुमिष्यते । संवत् १९०० आषाढशुक्लचतुर्थ्यां लब्धजन्मनः संवत् १९७३ आषाढपूर्णिमादिने कैलासं प्रस्थितस्य महामाहेश्वरभट्ट-माहेश्वरात्मजस्य जनिरुपनयनं महामहिमश्रीकेशवगुरोः सकाशाद् विद्याधिगमश्चेति सकलं जामनगरे एव, पैतृकं निवासस्थानं मोरबीपूरिति तत्रैवाऽऽप्रायणमवस्थितिर्महामहोपाध्यायपदवीलाभोपि तद्गुणगणमहिम्नैवेति शिवम् ।

श्रीमन्महामहिमहरिशङ्करात्मजः

**शास्त्री हाथीभाई-शर्मा**

**जामनगराभिजनः**

# अस्मिन् नाटके पात्राणि ।

| | |
|---|---|
| श्रीकृष्णचन्द्रः— | प्रधानपात्रं यस्यायमभ्युदयो वर्णितः । |
| रुक्मिणी— | |
| सत्यभामा— | |
| जाम्बवती— | |
| कालिन्दी— | |
| भद्रा— | श्रीकृष्णस्य पट्टराज्ञ्यः । |
| सत्या— | |
| मित्रविन्दा— | |
| लक्ष्मणा— | |
| रोहिणी— | |
| नाग्निजिती— | |
| नारदः— | देवर्षिः । |
| शिशुपालः— | श्रीकृष्णस्य पितृष्वस्रीयोऽसुरकल्पश्चेदिराजः । |
| दन्तवक्त्रः— | शिशुपालस्य सखा |
| ब्रह्मचारी— | वर्णिलिङ्गी शम्बरासुरः । |
| द्वारपालः | शिशुपालसेवकः । |
| देवकीवसुदेवौ— | श्रीकृष्णस्य मातापितरौ । |
| श्रीराधा— | श्रीकृष्णस्य परप्रेमास्पदं वृषभानुजा । |
| ललिता— | |
| चन्द्रावली— | श्रीराधायाः सख्यः । |
| विशाखा— | |
| लीलावती— | |
| श्रीपार्वतीमहादेवौ— | श्रीकृष्णाभ्युदयार्थमुपायातं देवयुग्मम् । |
| उपमन्युः— | श्रीकृष्णस्य शैवदीक्षाचार्यो व्याघ्रपादपुत्रो मुनिः। |
| शिष्याः— | उपमन्योरेव— |
| सुदामा— | श्रीकृष्णस्य परमः सखा विप्रः । |

| | |
|---|---|
| सुशीला— | सुदामपत्नी |
| भद्रसेन:— | सुदाम्नो मन्त्री |
| उग्रसेन:— | मथुरानरेश: |
| बलदेव:— | श्रीकृष्णस्याग्रज: । |
| भीमार्जुनौ— | पाण्डवौ |
| सात्यकि:— | यादव: |
| कृतवर्मा— | „ |
| अक्रूर:— | „ |
| उद्धव:— | „ |
| अन्ये राजान:— | देशाधिपा: |
| पौरा जानपदाश्च— | समिता जना: |
| भद्रशीला— | दासी |
| मायावती— | रतिरेव भूमिकान्तरापन्ना |
| राजसेवक:— | शम्बरस्य भृत्य: । |
| चम्पकमाला— | जाम्बवत्या दासी |
| साम्ब:— | जाम्बवतीपुत्र: |
| रति:— | कामपत्नी |
| कामदेव:— | प्रद्युम्नोऽवतीर्ण: |

श्रीराजराजेश्वरो जयति

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः ।

# अथ श्रीकृष्णचन्द्राभ्युदयम् ।

## छायानाटकम् ।

### प्रथमोऽङ्कः ।

[1]श्रीमत्साम्बसदाशिवाऽतुलकृपापीयूषसिन्धूद्भवो
रुक्मिण्यादिमनोरमप्रियतमातारागणानन्ददः ।
भक्तस्वान्तचकोरकैः प्रणयिभिश्चास्वाद्यमानो मुदा
श्रेयांसि प्रतिवासरं दिशतु नः श्रीकृष्णचन्द्रोदयः ।। १ ।।

---

श्रीगणेशाय नमः

याभ्यामुत्पादितं विश्वं याभ्यामेव च पाल्यते ।
मातापितृभ्यां जगतो द्वाभ्यामेव नमो नमः ॥
नत्वा श्रीकेशवगुरून् स्मृत्वा वागधिदेवताम् ।
श्रीकृष्णचन्द्राभ्युदये टीकां ज्योत्स्नाभिधां व्यधाम् ॥

प्रारिप्सितप्रकणरणस्य निर्विघ्नपरिसमाप्तिपूर्वकं प्रचयगमनाय स्वेष्टदेवतां स्तुवन् सवस्तूपक्षेपं द्वादशपदनान्दीपाठमुपक्रमते ।

नान्दीपाठः सूत्रधारकर्तृकः । तदुक्तं भरताचार्येण पञ्चमेऽध्याये ।

सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः ।
नान्दीं पदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृताम् ॥

एतेन 'कुशीलवा नान्दीपाठं कुर्वन्ति तदवसाने एव सूत्रधारप्रवेश' इति वदन्तो नवीना दत्तोत्तराः । राघवभट्टेनापि शाकुन्तलव्याख्यानारम्भे 'अथ नाटकादौ पूर्वरङ्गाङ्गभूतामाशीरूपां चतुरस्रतालानुसारिणीमष्टपदां सूत्रधारो नान्दीं पठति ' इति वदता एतदेव सम्यग्विशदीकृतम् ।

द्वादशपदामित्यत्र पदशब्दः पादपर्यायोऽपि । अनर्घराघवटीकारम्भे रुचिपत्युपाध्यायेन श्लोकद्वयरूपाया नान्द्या अष्टपदापदेन व्यवहृतत्वात् । अत्र तु 'सुप्तिङन्तमिति' वैयाकरणपरिभाषितमेव पदमभिसन्धाय द्वादशपदेतिकथनम् । कुत्रचित् पदसमुदायरूपवाक्येऽपि पदप्रयोगो दृश्यते । यथा शाकुन्तले वाक्याष्टकात्मकस्याद्यपद्यस्याष्टपदा नान्दीतिनिर्देशः कृतो राघवभट्टेन । नाट्यप्रदीपे—

'श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे ।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे' ॥

इति सर्वं समर्थितम् । नान्दीलक्षणमुक्तं भरताचार्येण

आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः ।
नान्दीति कथ्यते इति । षट्त्रिंशाध्याये पुनः—
देवतासुरमानन्द्य यस्माल्लोकं च नन्दति ।
तस्मादयं प्रयोगस्तु नान्दीनामा भविष्यति । इति सहेतु गदितम् ।

इयं तावदाशीरूपा नान्दी । ( १ ) श्रीमदिति । श्रीमतः साम्बस्य च सदाशिवस्य अतुलकृपैव पीयूषसिन्धुरमृतसागर—स्तस्मादुद्भवो यस्य तादृशः श्रीकृष्ण एव चन्द्रस्तस्योदयः प्रतिवासरं नः श्रेयांसि दिशतु इति सम्बन्धः । यथा प्रतिदिनमधिनिशमुदयश्चन्द्रस्य नैशान्धकारनिवारणेन चन्द्रिकाप्रसारणेन च लोकानां श्रेयस्कर एवमयं श्रीकृष्णचन्द्रस्याभ्युदयः श्रीसदाशिवप्रसादजन्योऽन्वयसन्तानसर्वोत्तमत्वादिलक्षणः सर्वेषां नः श्रेयांसि मनोविनोदनादीनि यावदैश्वर्यौपयिकानि दिशतु इत्याशीरर्थनात्मकमिदं समङ्गलं नान्दीपद्यम् । तमेव श्रीकृष्णचन्द्रोदयं विशिनष्टि—रुक्मिण्यादयो या मनोरमाः प्रियतमास्ता एव तारास्तासां गणमानन्दयतीति तादृशः । भक्तानां स्वान्तान्येव चकोरकाः 'अल्पार्थे कन्' बालचकोरा इत्यर्थः । तैः प्रणयिभिः सद्भिर्मुदा आस्वाद्यमानो नतुदासीनैरिति । अत्र श्रीपदेन परा शक्तिरम्बापदेन च दाक्षायणी पार्वती वेति बोध्यम् । तेन त्रिमूर्त्यतीततदन्तर्गतयोरुभयोरपि रूपयोः स्मृतत्वेन वक्ष्यमाणाभेदोपपत्तिः सूचिता । 'सूत्रधारः पठेन्नान्दीं श्लोकैः काव्यार्थसूचकै'—रित्युक्तत्वेनायं श्लोकः काव्यार्थसूचकः । तद्यथा—श्रीकृष्णचन्द्रस्याभ्युदयो हि समग्रस्य काव्यस्य प्रतिपाद्योऽर्थस्तत्र च रुक्मिण्यादीनां प्रियतमात्वपोषकं मनोरमेतिविशेषणोपादानम् । अभिजातमणिहेम्नोरिव परस्परानुरक्तयोर्दम्पत्योर्योगो भवति महतेऽभ्युदयाय । सोयं दक्षत्वेन सकलकविकुलसम्प्रतिपन्नस्यापि श्रीकृष्णलक्षणस्य नायकस्य प्रेयसीप्रणयपारवश्यपरायणस्य तदिष्टसम्पादनार्थं तपोवनगमनादिक्लेशमुररीकुर्वतोऽनुकूलनायक-

[२]समस्तसन्तापहरः सदाह्लादकरः सदा ।
भूयाच्छ्रीकृष्णचन्द्रस्याभ्युदयोऽभ्युदयाय नः ॥ २ ॥
[३]सद्विद्यासम्पदे वन्दे विद्यासाम्राज्यसिद्धिदौ ।
दयामृतमयात्मानौ श्रीकेशवमहेश्वरौ ॥ ३ ॥

---

त्वापादनेन कोऽप्यवर्णनीयो रसपरिपोषः कविनाविर्भाव्यत इति सहृदयहृदयेऽनावृतमेव काव्यार्थसूचनम् । वाच्यार्थबीजरूपनायकस्याभिधानात्पत्रावलीसञ्ज्ञकेयं नान्दीति वेद्यम् । तदुक्तं नाट्यदर्पणे—

यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।
श्लेषेण वा समासोक्त्या नान्दी पत्रावली तु सा ॥

अत्र पद्ये रूपकमलङ्कारः । तदुक्तं दण्डिना—

उपमैव तिरोभूतभेदा रूपकमिष्यते इति ।
'गङ्गा नागपतिः सोमः सुधानन्दो जयाशिषः ।
एभिर्नामपदैः कार्या नान्दी कविभिरङ्किता' ॥

इति भरतवचनादत्र साक्षाच्चन्द्रपदोपादानं साम्प्रदायिकमेव । शार्दूलविक्रीडितं वृत्तम् । 'क्षेमं सर्वगुरुर्दत्ते मगणो भूमिदैवत' इति भामहोक्तेरादौ मगणोच्चारणमतीवयुक्तम् ।

श्लोकपादः पदमिति मतमप्यनुरुन्धानः कविर्मङ्गलबाहुल्याय अनुष्टुब्द्वयेन नान्दीमेवोपबृंहयति ( २ ) समस्तसन्तापहर इति । समस्ताश्च ते सन्तापाः समस्तानां (जनानां) वा सन्तापास्तान् हरतीति तथाविधः । सदा सर्वदा सतामाह्लादं वा करोतीति तादृक्, श्रीकृष्णचन्द्रस्य अभ्युदयः नोऽस्माकमभ्युदयाय भूयात् । अत्र चन्द्रोदयस्य केवलबाह्यसन्तापहरतया रात्रावेवाह्लादकत्वेन च ततोऽस्य श्रीकृष्णचन्द्राभ्युदयस्य व्यतिरेकावगमाद् व्यतिरेकालङ्कारः ।

स्वस्मिन् ग्रन्थकरणपर्याप्तशक्तिमाधातुकामोऽभेदभावनामग्रे कुर्वन् केशवमहेश्वरौ सामस्त्येन स्तौति । ( ३ ) विद्यासाम्राज्यसिद्धिदौ श्रीकेशवमहेश्वरौ हरिहरौ सद्विद्यासम्पदे—सद्विद्यासम्पल्लाभाय वन्दे । चिरमाराधनविरहवतः केवलवन्दनेनैव कथं तौ तुभ्यं विद्यासम्पदं दास्यत इत्यतो विशिनष्टि । दयामृतमयात्मानौ । हेतुं विनैव परदुःखप्रहाणेच्छा दयेति तादृशदयामयस्वरूपयोस्तयोर्मादृग्जनकृतस्मरणमात्रमेवाभीष्टसिद्धये भवितेति दृढविश्वासोक्तिरियम् । अत्र विद्यागुरोः श्रीकेशवशास्त्रिणः पितुश्च महेश्वरभट्टस्य वन्दनोद्देश्यत्वेन समासोक्त्यैव बोधनात्समासोक्तिमूलो ध्वनिः ॥ नान्द्यन्ते सूत्रधारः । वदतीति

( नान्द्यन्ते )

सूत्रधारः—[४]अलमतिविस्तरेण । [५]आज्ञप्तोस्मि महाराजेन श्रीकृष्णचन्द्राभ्युदयाभिधानमभिनवं नाटकमभिनेतव्यमिति ।

( नेपथ्याभिमुखमवलोक्य )

प्रिये ! इतस्तावत् ।

( प्रविश्य नटी )

नटी—आर्य ! एषास्मि को निदेशः ?

सूत्र—प्रिये ! आज्ञप्तोऽस्मि महाराजेन ( इत्यादि पुनः पठति )

नटी—केन महाराजेन आज्ञप्तम् ?

सूत्र—शृणु प्रिये ।

---

शेषः । ( ४ ) अलमति विस्तरेण । इयं हि प्रायः शैली नाट्यविदां यदारंभे नान्दीसमाप्तौ सर्वत्र अतिविस्तरप्रतिषेधनम् । यतोऽतीव माङ्गलिकमपि यदतिविस्तृतं तदुद्वेजयति श्रोतृचेतांसि ' धत्ते पुण्ड्रकशर्करापि कटुतां कण्ठे चिरं चर्विेतेति लोकोक्तेः । ( ५ ) आज्ञप्तोस्मि महाराजेनेतिवचनं प्रश्नोत्थापकतया काव्यार्थबीजायते, अग्रे ' केन महाराजेनेति ' नटीकर्तृकप्रश्नेन तदुत्तरोद्घाटनात् । श्रीकृष्णचन्द्राभ्युदय इत्यभिधानं यस्य तदभिनवं नाटक ' मित्यत्राभिनवपदं प्रेक्षकाणां परमौत्सुक्यमुद्बोधयति । ' गोत्रं नाम च बध्नीयात् पूजावाक्यं सभासदाम्, इत्यादि, अभिधेयगतं यत् तत् काव्यनाम्ना प्रकाशनम् ' इत्यन्तेन भावप्रकाशिकायामुक्तत्वात् । नाटकमभिनेतव्यमिति ॥ नाटकलक्षणं दशरूपके—

प्रकृतित्वादथान्येषां भूयोरसपरिग्रहात्
सम्पूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते । इति प्रतिज्ञाय
अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते ।
इत्यादिना निरूपितम् ।

मातृगुप्ताचार्यस्तु । प्रख्यातवस्तुविषयं धीरोदात्तादिनायकम् ।
राजर्षिवंशचरितं तथा दिव्याश्रयान्वितम् ॥
युक्तं वृद्धिविलासाद्यैर्गुणैर्नानाविभूतिभिः ।
शृङ्गारवीरान्यतरप्रधानरससंश्रयम् ॥
इति वृत्तकथोद्भूतं किञ्चिदुत्पाद्यवस्तु च ।
नाटकं नाम तद् ज्ञेयं पताकास्थानकैर्युतम् ॥ इत्याह ।

[६]श्रीमोंघीबानरपतिमणिश्रीरवाजित्तनूजः ।
श्रीकृष्णेन्दोश्चरणकमले लीनचेतोमिलिन्दः ॥
शौर्यौदार्यप्रणयनिलयः स्वप्रजाश्रेय इच्छुः ।
काँयावंशे विलसति मणिर्व्याघ्रजिन्मोरवीन्द्रः ॥ ४ ॥

नटी—नाथ ! सकलभूमण्डलप्रख्यात एवायं श्रीमोरवीमहेन्द्रः । ततस्ततः?

सूत्र—तस्य श्रीमन्महाराजस्याज्ञया मोरवीपतेः ।
श्रीकृष्णाभ्युदयं प्रेम्णाऽभिनेतव्यं सुनाटकम् ॥ ५ ॥

नटी—नाथ ! [७]कस्य कवेः कृतिः सा ?

---

प्रथमं सूत्रधारेण 'आज्ञतोऽस्मि महाराजेनेति' आत्मगतवदभिहितं ततो नटीप्रवेशानन्तरं पुनस्तदेवाऽऽवृत्तं तेन च नटीवचसि 'केन महाराजेने' ति प्रश्नावसर उत्पादितः ।

किञ्च—रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥

इतिकथनानुरोधेन प्रथमं रङ्गस्य—तात्स्थ्यात्ताच्छब्द्यम्—रङ्गस्थप्रेक्षकगणस्य काव्यार्थसूचकैर्मधुरैः श्लोकैः प्रसादनं कृतमनेन कविना । ततश्च ऋतुं कञ्चिदाश्रित्य गेयमिति तदवसरप्रदानाय नटीमाहूय तत्प्रवेशानन्तरं नटी यदा नियोगोन्मुखी पृच्छति तदा तदुत्तरव्याजेन स्वाश्रयभूतनरपतिप्रशंसनपूर्वकं कविर्नामापि प्रकटयति । (६) श्रीमोंघीत्रा इत्यादि पद्यं स्पष्टार्थम् । अत्र राज्ञो व्याघ्रजिदभिधस्य मोंघीवारवाजीत्याख्यसद्गुणसम्पन्नमातापितृजत्वेन काव्यार्थाभिनयप्रेक्षणौत्सुक्यं, श्रीकृष्णेन्दोश्चरणकमले लीनश्चेतोरूपो मिलिन्दो भ्रमरो यस्य, एतेन श्रीकृष्णभक्तत्वं, शौर्यौदार्यप्रणयनिलयः स्वप्रजाश्रेयइच्छुरिति विशेषणद्वयेन राजव्यवहारयोग्यत्वमप्रमादित्वं च, काँयावंशे विलसतीत्युक्त्या च महाकुलीनत्वं; कविनाऽऽविर्भावितम् । मोरवीन्द्र इति मोरवीसंज्ञकनगरी कवेर्निवासस्थानं तदधिपतितया च नृपे उपास्यता कविसम्मता काव्यसन्निवेशेन समर्थिता, नटीमुखेन च सकलभूमण्डलप्रख्यात एवेति वाचनादुपपादिता राज्ञः सुप्रसिद्धता । तस्य श्रीमन्महाराजस्याज्ञया नाटकमभिनेतव्यमित्यर्थकश्लोकेन राज्ञः सुकविप्रणीतसुनाटकप्रेक्षणे मार्मिकत्वमाविष्कृतम् । इदानीम् "उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना" इति लक्षणलक्षितप्ररोचनामवतारयति नटीमुखेन । (७) कस्य कवेः कृतिः सेति ।

सूत्र—प्रिये ! तदपि निवेदयामि ।

[8]'माहेश्वरात्मजनुषोऽर्द्धशशाङ्कमौले-
दासस्य वर्यगुरुकेशवधर्मसूनोः ।
सेयं कृतिर्लसति शङ्करलालनाम्नः
श्रीमज्जटाद्यपदशङ्करमित्रमौलेः ॥ ६ ॥

नटी—नाथ ! कविरपि मातापितृसद्गुरुभक्तिधुरंधरः सुविदित एव । कोऽतः परं निदेश आर्यपुत्रस्य ?

सूत्र—[9]तत्सङ्गीतेन रञ्जय सभ्यजनानां मनांसि ।

नटी—कं समयमनुसृत्य गेयम् ?

सूत्र—प्रिये ! वर्तमानं वर्षर्तुसमयमेवाश्रित्य गीयताम् ।

नटी—यथाज्ञा आर्यपुत्रस्य । ( इति गायति )

[10]अस्मिन् वर्षति जीवनान्यविरतं धाराधराधीश्वरे ।
संतापा गलितास्तृषश्च दलिताश्चिन्ता प्रशांताऽखिला ॥
हृष्टं पुष्टमिदं जगद्विरहिताः कांताश्चकोर्यश्च हा ।
न प्राप्य प्रियचन्द्रदर्शनसुखं मग्ना विषादाम्बुधौ ॥ ७ ॥

---

तदपि निवेदयामीति प्रतिज्ञायाऽऽह सूत्रधारः—( ८ ) माहेश्वरात्मजनुषः अर्द्धशशाङ्कमौलेर्दासस्य गुरुवर्यकेशवधर्मसूनोः शंकरलालनाम्नः सेयं कृतिर्योऽसौ कविः, श्रीमान् जटाशंकरो मित्रमौलिर्यस्येति तादृशः । नेमे भिन्नक्रमे षष्ठ्यौ शंकरलालकर्तृकत्वादेतस्य नाटकस्य मित्रनामनिर्देशेन कविना मित्रधर्मो दर्शितो लोकदेशनायै । नटीमुखेन कविनिर्देशपद्योक्ता कविनिष्ठा मातापितृभक्तत्व—गुरुभक्तत्व—मित्रप्रियत्वादयो गुणा अनुवादिताः कवीनामेवम्भावायेति । सूत्रधारो नटीं निदेशमभ्यर्थयमानामाह—( ९ ) सङ्गीतेन सभ्यजनानां मनांसि रञ्जयेति । एतदन्तमुन्मुखीकरणमितः परं प्ररोचनाङ्गत्वेनापेक्षितं नटीमुखेन 'कं समयम्' इति प्रश्नोत्तरे 'वर्त्तमानमेव वर्षर्तुसमयमधिकृत्ये' ति सूत्रधारोक्तिः समयौचित्यमावेदयति गायनकर्मणि । नटी तथा गायति ( १० ) अस्मिन् 'इदमस्तु सन्निकृष्ट' मिति वचनात् सन्निहिते धाराधराणां मेघानामीश्वरे महामेघे अविरामेण जीवनानि जलानि वर्षति सति । जीवनं भुवनं जलमित्यमरः । सन्तापाः सर्वेषां जनानां गलिताः । तृषश्च दलिताः शमिताः । धाराधराधीश्वरेणेति योजनीयम् । अखिला निःशेषा दुर्भिक्षाशंकादिजन्या चिन्ता

( नेपथ्ये )

सत्यं सत्यम् । 'न प्राप्य प्रियचन्द्रदर्शनसुखं मग्ना विषादाम्बुधौ '

सूत्र—प्रिये श्रीकृष्णचन्द्रविरहिणीनां महाराज्ञीनां स्वर इवोपलक्ष्यते तदेहि अनंतरकरणीयाय सज्जीभवावः । ( इति निष्क्रान्तौ )

( [11]ततः प्रविशन्ति श्रीरुक्मिण्यादयो महाराज्ञ्यः )

---

च प्रकर्षेण शान्ता । इदं प्रत्यक्षगोचरं जगत् पुष्टं हृष्टं चोपलक्ष्यत इति शेषः । हा इति खेदोद्गाराविष्करणम् । विरहिताः प्रियविरहिताः कान्ताः चकोर्यश्च प्रियचन्द्रदर्शनसुखं, कान्तापक्षे प्रिय एव चन्द्रस्तद्दर्शनसुखम्, चकोरीपक्षे च प्रियश्चासौ चन्द्रस्तद्दर्शनसुखम्, न प्राप्य, प्रोषितभर्तृकाणां दूरदेशस्थपतित्वेन चकोरीणां च मेघावृतचन्द्रबिम्बतया प्रियचन्द्रदर्शनसुखाप्राप्तिस्तन्निदानकं च विषादाम्बुधिमज्जनम् ।

किञ्च—पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥

इति आस्थापकनटादिकर्तृकदिव्यमर्त्यादिवस्तु बीजं मुखं पात्रं वा सूचयेदिति निर्दिष्टमस्ति । तदत्र 'न प्राप्य प्रियचन्द्रदर्शनसुखं मग्ना विषादाम्बुधौ ' इति बीजस्थापनं नटीकर्तृकमेव । यद्यपि 'सूत्रधारे विनिर्गते ' इति सूत्रधारनिर्गमानन्तरमन्यः स्थापकः समागत्य बीजादि स्थापयेदित्युक्तं तथापि श्रीहर्षेण रत्नावल्यां 'द्वीपादन्यस्मादपि ' इत्यादिबीजं नटीमुखेनैव स्थापितमस्तीत्यत्राप्येवमुपन्यासः साम्प्रदायिक एव ।

एतत्पद्यस्य चतुर्थचरणः कथोद्घाताऽऽख्यवीथ्यङ्गमामुखमवगमयति ।

तदुक्तम्—स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ।
गृहीत्वा प्रविशेत् पात्रं कथोद्घातो द्विधैव सः ॥

अत्र 'न प्राप्ये ' त्यादि वाक्योपादानेन प्रथमविध एव कथोदघातः । नेपथ्ये–सत्यं सत्यं 'न प्राप्ये ' त्यनुवादमाकर्ण्य सूत्री नटीमुद्दिश्य श्रीकृष्णचन्द्रविरहिणीनां स्वर इवेति तर्कमूलकं प्रवेशं सूचयित्वा—अनन्तरकरणीयाय सज्जीभवाव इति सापदेशं निष्क्रान्तः । अयञ्च कवेः प्रयोगातिशयस्तदुक्तं दशरूपके—

एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥

तथा च शाकुन्तले 'एष राजेव दुष्यन्तः सारङ्गेणे ' त्यादि । इदानीं त्रयोदशवीथ्यङ्गमध्यात् उद्घात्याख्यमङ्गमादृत्योपक्रमते । ( ११ ) ततः प्रवि-

रुक्मिणी—प्रिये सत्यभामे ! क्व गतः साम्प्रतमस्माकं प्राणनाथो जानासि किम् ?

सत्यभामा—नाहं किमपि जानामि ।

जाम्बवती—प्रियस्वसारौ मे ! ब्राह्ममुहूर्ते एव निद्रितां मां विहाय क्वचित्प्रयातः श्रीकृष्णः किं करोमि ।

रुक्मिणी—जाम्बवति ! आवयोरपि तवेव दशा वर्तते ।

कालिन्दी—( स्वगतम् ) रुक्मिणीसत्यभामाजाम्बवत्योपि प्राणप्रियविरहदुःखिता दृश्यन्ते, मन्ये तासां ममेव दशा वर्त्तते । (प्रकाशम्) प्रियस्वसारो मे कथमकस्मादेवदेव एवमंतर्हितः ?

सत्यभामा—कालिन्दि ! [१२]सर्वा वयं ब्राह्ममुहूर्ते एवोत्थाय प्रतिदिनं भगवतः स्नानसन्ध्यादेवपूजनादिसाधनसामग्रीं कुर्मः । इदानीमेव वैरिणी निद्रा जाता ।

भद्रा—मन्येहं कदाचिदुद्धवगृहे भविष्यति ।

---

इति रुक्मिण्याद्या महाराज्ञ्य इति । प्रिये सत्यभामे ! इति रुक्मिणीवचनादारभ्य ‘ कथञ्च प्राणनाथः समन्वेषणीय ’ इति रोहिणीवाक्यपर्यन्तं प्रश्नप्रतिवचनात्मकं ’ निगदव्याख्यातमुद्घात्यम् । तदुक्तं काव्यसर्वस्वे ।

गूढार्थपदपर्यायमाला प्रश्नोत्तरस्य वा
यत्रान्योन्यं समालापो द्वेधोद्घात्यं तदुच्यते । इति

सर्वासां हृदि विभिन्नशंकोट्टङ्कनेपि प्रियविरहस्य समानत्वात्साधारणमौत्सुक्यं नाम भावशाबल्यम् । कालिन्दीप्रश्नोत्तरे (१२) सर्वा वयमित्यादि सत्यभामोक्तौ पतिव्रताकर्तृकं प्रातःकालिकतत्पतिकर्तृकसंध्यावन्दनदेवपूजनादिकर्मसु सामग्रीसमवधानापादनादि आनुकूल्याचरणं, मित्रविन्दातर्के च प्रातरुत्थाय प्रथमं मातापित्रोरभिवन्दनमित्यादि लोकशिक्षाख्यं रूपकप्रयोजनं ज्ञेयम् । सत्योभामः क्रोधोयस्या इति निरुक्त्याऽन्वर्थनाम्न्याः सत्यभामायाः राधासमीपगमनतर्कश्रवणेन रुक्मिण्या—परोक्षेपि तादृशं पतिविषयकं परुषं वक्तुं नोचितमिति वदन्त्या—स्वस्यास्साक्षाल्लक्ष्म्यवतारतासूचनपूर्वं पतिभक्त्यतिशय आविष्कृतः।‘किमत्र परुषम्’ इति सत्यभामोक्तिः साधिक्षेपा—नात्र किमपि परुषम् किन्तु सत्यमेव वदामीति प्रतिज्ञाय—तत्समर्थनाय उद्धवेन साकं विश्रम्भजल्पितं श्रीकृष्णस्योदाहृत्य रुक्मिणीं

सत्या—भद्रे ! मया उद्धवगृहे प्रेषिता लीलावती, नास्ति तत्रापि नः प्राणनाथः ।

मित्रविन्दा—मातापित्रोरभिवन्दनाय प्रातः प्रतिदिनं देवो गच्छति, तत्र मातृचरणानामाग्रहात् स्थितिः कृतेति मन्ये ।

लक्ष्मणा—मित्रविन्दे ! अहं मातापित्रोरभिवन्दनं विधायैवात्रागता न तत्रास्ति देवः ।

रोहिणी—सख्यः ! किमिदानीं कर्त्तव्यं क गन्तव्यं कथं च प्राणनाथः समन्वेषणीयः ?

सत्यभामा—यदि कुत्रापि नास्ति भगवान् तर्हि राधायाः समीपं गतो भविष्यति ।

रुक्मिणी—सत्यभामे ! परोक्षेपि तादृशं परुषं वक्तुं नोचितं ते ।

सत्यभामा—किमत्र परुषं ? सत्यमेवोच्यते । एकदा स्वकीयेन परममित्रेणोद्धवेन सह विश्रम्भजल्पितानि श्रुतानि नः प्राणनाथस्य मया, तेषां मध्यादेकं निवेदयामि शृणु ।

रुक्मिणी—अवहितास्मि श्रोतुम् ।

सत्यभामा—[13]एकदा रहसि स्थितं परमौदास्यविलीनचित्तं भगवन्तं विलोक्य खिन्नस्वान्तेनोद्धवेन 'देव कथमुदासीन इव लक्ष्यसे' इति पृष्टं तदा सनिःश्वासं भगवता यदुक्तं तदेतत्पद्यम्—

[14]कामं सन्तु गृहा महामणिमया हस्त्यश्वगोराजयः ।
कोशाश्चापि सुवर्णरत्नखचिताः सम्बन्धिनोऽनेकशः ॥
श्रीवृन्दावनकुञ्ज उद्धव मया श्रीराधया चातुलं ।
यल्लीलासुखमन्वभावि किमपि प्राप्स्यामि तत् किं पुनः ॥८॥

---

तेजयितुमाह—( १३ ) एकदेति । रहसि स्थितमित्युक्त्या हार्दवेदने सङ्कोचाभावो बोधितः । 'देव ! कथमुदासीन इव' इत्यत्रोद्धववाक्ये इवपदोपादानं वस्तुतस्तु परमेशितुस्तवौदासीन्यमसंभाव्यमेव तथापि मायामानवभावावलंबनेन तादृशावस्थेति द्योतनार्थम् । भगवता पुनः सनिःश्वासमुत्तरितमिति औत्सुक्यातिशयः । ( १४ ) कामं सन्तु गृहा इत्यादिना तेषुतेषु पदार्थेषु रसाभावमाभाष्य श्रीवृंदावनकुञ्जे इत्यादिना राधाविषयकमौत्सुक्यमाविष्कृतम् । 'विचारय कीदृशं राधायां तव प्राणनाथस्य प्रेमप्राबल्यमिति' वदन्त्या सत्यभामया 'तव—

विचारय कीदृशं राधायां [१५]तव प्राणनाथस्य प्रेमप्राबल्यम्।

रुक्मिणी—भवतु ततोपि नः का क्षतिः ?

सत्यभामा—[१६]अस्मासु रुक्मिणि सतीषु तदङ्घ्रिपद्म-
द्वन्द्वैकसेवनरतास्वखिलासु नित्यम्॥
राधां न विस्मरति नः प्रणयामृताब्धिः
प्राणेश्वरः क्षणलवार्द्धमपीत्यवेहि॥ ९॥

तत्कथं सुप्ताः सर्वा नः परित्यज्यास्माकं प्राणेश्वरो न राधा-समीपं समेयादिति मे तर्कः।

रुक्मिणी—गच्छतु नाम न तेन मे मनसि क्लेशलेशोपि। यतो नरात्मनावतीर्णस्य श्रीपरात्मनोऽस्मत्प्राणनाथस्य सा परा शक्तिरस्तीति श्रुतं मया पुराणविद्भ्यः। किं च वयं सर्वास्तस्याः कला एव।

सत्यभामा—(साश्चर्यम्) रुक्मिणि किं जल्पसि ? मत्तास्युन्मत्तासि वा।

रुक्मिणी—नास्मि मत्ता नाप्युन्मत्ता, सत्यमेव वदामि, शृणु।

[१७]न मया न त्वया नैवाप्याभिः सर्वाभिरप्यहो॥
कर्त्तुं शक्या हि सा सेवा कृता श्रीराधया तु या॥ १०॥

तत एव

[१८]कालिन्दीपुलिने कदम्बकदलीकुञ्जे रहस्तिष्ठतो-
रन्योन्याननबद्धनेत्रयुगयोरानन्दमग्नात्मनोः॥

---

प्राणनाथस्य' इत्यत्र (१५) तवपदोक्त्या स्वस्या अधीरात्वं प्रकटितम्। रुक्मिण्या तु 'भवतु ततोपि नः का क्षतिरिति' वदन्त्या पुनरपि पत्यावादरभरो न न्यूनतां नीतः। सत्यभामया-(१६) अस्मासु इति पद्येन स्वान्तःस्थं कृष्णविषयकरोषं व्यक्तीकृत्य 'तत् कथं नः सुप्ताः सन्त्यज्य राधां न यायादिति मे तर्कः' इत्यन्तेन पूर्वोक्तप्रतिज्ञा निगमनमापिता। रुक्मिण्या, सा राधा परात्मनः श्रीकृष्णस्य परा शक्तिर्वयं च तस्याः कला इति यदोक्तं तदा मत्तासीत्याद्यधिक्षेपपूर्वं सत्यभामया तद्वचने स्वानङ्गीकारः प्रकटितः। (१७) यदा तु 'न मया नत्वये' त्यादिना राधाकर्तृकसेवायाः सर्वतो वैलक्षण्यं रुक्मिण्योद्भाव्य (१८) 'कालिन्दीपुलिने' इति पद्येन चित्रेपि राधामाधवयोस्तादृशावस्थापन्नं युगलं विलोक्य मोदामहे इत्युक्तं तदा सत्यभामा सरोषं तद्वचनस्यार्थान्त-

प्रेमालिङ्गनलाभलब्धपरमप्रीत्योर्मनोहारिणो-
राधामाधवयोर्विलोक्य युगलं चित्रेपि मोदामहे ॥ ११ ॥

सत्यभामा—( सरोषम् ) अलमलमनल्पेनेदृशेन ते जल्पेन ।

त्वं यासि राजतनया यदुवंशरत्न-
श्रीकृष्णचन्द्रमहिषी च सदाप्तमाना ॥
सापीह कामपि च गोकुलगोपकन्यां
स्तोतुं न लज्जस इदं किमु तेऽस्ति युक्तम् ॥ १२ ॥

[19]यदि पातिव्रत्यप्रभावप्रकटनाय पतिप्रियासु सर्वासु ते पूज्यभावस्तर्हि—

[20]कंसस्य चन्दनविघर्षणकार्यदासीं-
वक्रां मनस्यपि वपुष्यपि वाचि नित्यम् ।
कुब्जां न विस्मरति ते रमणस्तु कालीं
तस्या नु काऽपि भवती तु कलेति मन्ये ॥ १३ ॥

रुक्मिणी—( सरोषम् ) भामे ! भामे ! विचार्य वक्तव्यम् ।
कुब्जायाः कला तु कुब्जासदृश्येव भवितुमर्हति न वयम् ।

जाम्बवती—( स्वगतम् ) अतिभूमिकां गतोऽनयोरुभयो रोषाग्निस्तत् प्रसङ्गान्तरं नयामि, न चेन् महान् कलहो भविष्यति, ( शीघ्रमुत्थाय प्रकाशम् ) देवि रुक्मिणि ! देवि सत्यभामे ! [21]अलमनेन निष्फलेन विवादेन । भगवच्चरणविरहखिन्ना वयं तदीयविरहदुःखदीर्घान् क्षणनिकरान् तदीयकरकमलालिखितानि विचित्राणीमानि चित्राणि विलोकयन्त्यः क्षयमुपनयाम इति मेऽभ्यर्थना ।

---

रतापादनाय (१९) यदि पातिव्रत्यप्रभावप्रकटनाय सर्वासु पतिप्रियासु ते पूज्यभावस्तर्हि (२०) 'कंसस्य चन्दनविघर्षणकार्यदासी' मित्यादिवर्णनोपपन्नायाः कुब्जाया अपि त्वं कलेति वाक्सन्तक्षणमारभते । जाम्बवती उभयोः कलहमाशङ्कमाना प्रसङ्गान्तरापादनाय श्रीकृष्णकृतचित्रालीविलोकनमुपस्थापयितुं तदा भगवद्विरहावच्छिन्नकालयापनापदेशमाढौकयते । (२१) अलमनेन निष्फलेनेत्यादिना । तदेतत्सर्वाभ्यो रोचतेस्म यतो रुक्मिणीसत्यभामाभ्यामुभाभ्यामपि कल्पोयं रमणीयत्वेन सम्मत एव । इदानीं भित्तिस्थचित्राणि सर्वा विलोकयन्ति । जाम्बवती च मर्मज्ञतया दर्शयति । तत्र प्रथमं परमशिवम-

उभे—सखि ! युक्तमुक्तमिदं भवत्या । एत सर्वा एत विलोकयामः ।
( सर्वा विलोकयन्ति )

जाम्बवती—प्रेम्णा रुक्मिणि ! पश्य पश्य परमप्रेमामृताम्भोनिधेः
श्रीकण्ठस्य चरित्रमत्र लिखितं श्रीप्राणनाथेन नः ।
स्वीयां प्राणसमां रुषा परिहृतप्राणां सतीं प्रेमतो
धृत्वा स्कन्ध इतो विभात्यनुमहातीर्थं भ्रमन् शंकरः ।१४।

सत्यभामा—[२२]अहो ! ! महादेवस्य प्रेम्णः परिसीमाऽनुकूलनायकत्व-परिसीमा च दृश्यते ।

रुक्मिणी—[२३]इतोऽपि दीयतां दृष्टिः ।
श्रीकान्तद्रुहिणादिदैवतसभासम्भूषिते मण्डपे ।
नानारत्नविचित्रचित्ररचने नानाचलेन्द्राऽऽवृते ।।
गायन्निर्जरगायके मुनिगणैर्मान्यैः सदाऽलङ्कृते
गौरीशंकरयोर्विभाति विश्रुताभव्यो विवाहोत्सवः ।।१५।।

सत्यभामा—सत्यं देवि ! तथैव दृश्यते—
[२४]इतस्तु गायन्त्यचलेश्वराङ्गना
इतः स्तुवन्तीश्वरमिन्द्रगायकाः ।
इतश्च बालव्यजनेन देव्यो
गौरीगिरीशौ परिवीजयन्ति ।। १६ ।।
इतो हरिर्नीलमणिप्रभायुतं
ताम्बूलमभ्यर्पयतीश्वराभ्याम् ।।

---

त्तस्य श्रीकृष्णस्य, दाक्षायणीकलेवरं स्कन्धे धृत्वा तीर्थाटनपरायणस्य स्वकीया-नायकशिरोमणेरेकपत्नीव्रतपरावधेर्विप्रलम्भशृङ्गारमूर्तेः श्रीकण्ठस्य चित्रं तूलिका-गोचरमापद्यत इति श्रीकृष्णस्य शृङ्गारप्रियता तत्रापि विप्रलम्भपक्षपातिताऽव-गम्यते, 'न विना विप्रलम्भेन शृङ्गारः पुष्टिमश्नुत' इति वचनात् । (२२) सत्यभामया च अहो महादेवस्य प्रेम्णोऽनुकूलनायकत्वस्य च परिसीमेति वद-न्त्या तदेव विवृतम् । अनन्तरमेव (२३) 'इतोपि दीयतां दृष्टि' रित्यत्र 'श्रीकान्तद्रुहिणादिदैवतसभासम्भूषिते मण्डपे' इत्यादिना गौरीशङ्करयोर्वि-वाहोत्सवचित्रदर्शनेन पूर्वोत्पन्नविप्रलम्भसम्भिन्नकरुणापसारणाय सत्या एव जन्मा-न्तरपार्वत्या विवाहोत्सवालेख्येन श्रीकृष्णस्य रसराजाधिष्ठातृता व्यज्यते तेन चेदानीं प्रेक्षणकर्त्रीणां राज्ञीनां प्रथमचित्रदर्शनजन्यस्य शोकस्यैकपद एवापमार्ज-

इतः शिवामाशिषमर्पयन्ति
शिवाशिवाभ्यां परमेष्ठिमुख्याः ॥ १७ ॥

इतः प्रणम्रप्रिय आशुतोषः
श्रीशैलजाया वचनेन सद्यः ।
निजप्रियप्राणनमर्थयन्त्यै
रत्यै प्रसादं कुरुते महेशः ॥ १८ ॥

तेन हि ! [25]सम्पूर्ण एव श्रीपार्वतीपरमेश्वरयोर्विवाहमङ्गल-महोत्सव आलिखितोऽस्माकं प्राणनाथेनेति मे प्रतिभाति ।

नाग्नजिती—[26]देव्यः ! इतो दीयतां दृष्टिः । इह हि ।

[27]बालो मृकण्डतनयो महिषाधिरूढं
दृष्ट्वा यमं भयमयाशय आशुतोषम् ।
आश्लिष्य तिष्ठति शिवस्तत एव लिङ्गा—
न्निःसृत्य वक्षसि यमं प्रहरन् विभाति ॥ १९ ॥

[28]स्वल्पायुषं मुनिसुतं प्रणतार्तबन्धुः
कल्पायुषं रचयतिस्म दयामयात्मा ।
मृत्युञ्जयोऽत्र [29]भगवानमृतार्द्रपाणिः
पाणिं निधाय मुनिबालकमूर्ध्नि नैजम् ॥ २० ॥

---

नमिति कवेर्मर्म । ( २४ ) 'इतस्तु गायन्ति' इत्यादि ( २५ ) 'सम्पूर्ण एव विवाहोत्सव आलिखित' इत्यन्तेन एकरूपयोरपि शिवविष्ण्वोः सख्यं, विवाहसामयिकं च विष्णोः शिवसचिवत्वमिति तन्निदानकमेवानुवरकर्तृकवरसम्प्रदानक—ताम्बूलार्पण—व्यवहारानुसरणमुचितं वर्णितम् । अपूर्वप्रसङ्गोपनिपातः पात्रान्तरापेक्षीति नाट्यवित्समयमनुरुन्धानः कविर्मार्कण्डेयवृत्तचित्रदर्शनं हि नाग्नजितीमुखेनैव प्रस्तौति । ( २६ ) देव्यः ! इतोपि दीयतां दृष्टिरित्यादिना । ( २७ ) बालः षोडशवर्षदेश्यः, मृकण्डमुनेस्तनयः महिषाधिरूढं यमं दृष्ट्वा भयमयः भयप्रचुरः आशयोऽन्तःकरणं यस्य तादृशः सन् आशुतोषं शिवमाश्लिष्य तिष्ठति यावत् तावदेव लिङ्गान्निष्क्रम्य शिवो यमं वक्षसि प्रहरन् विभाति ! चित्र इति शेषः । ( २८ ) स्वल्पायुषं मुनिसुतं कल्पायुषं प्रणतार्त्तबन्धुः शिवो रचयतिस्मेति अनुप्रासोत्र शब्दालङ्कारः । ( २९ ) मृत्युञ्जयस्य अमृतार्द्रपाणित्वं तन्त्रप्रसिद्धमेवात्रानूदितम् । अमृतघटं दधानो हि पाणिरमृतार्द्रएव भवति ।

सर्वाः—[३०]अहो ! ! भगवतो भक्तवत्सलताया निरवधित्वं चित्रितमस्मत्प्राणप्रियेण ।

कालिन्दी—[३१]देव्यः ! इतोऽपि विलोकनीयं विलोक्य कृतार्थयत[३२] स्वानि स्वानि लोचनानि ।

योऽयं शैलः स्फटिककटकालङ्कृताकाशभागो ।
नानाकल्पद्रुमघनवनो देवि ! कैलासनामा ।
यस्मिन् स्वच्छे वटविटपिनो मूल आभात्ययं श्री-
गौर्या देव्या सह परशिवो रत्नसिंहासनस्थः ॥ २१ ॥

( [३३]निपुणं निर्वर्ण्य ) इतोऽपि पश्यन्तु प्रियस्वसारो मे—

प्राणप्रियो नः प्रणयादयं[३४] स्वयं—
प्रणम्रमूर्द्धा विहिताञ्जलिः स्थितः ।
तस्मै महेशोऽयमसिं शशिप्रभं
रत्नत्सरुं यच्छति हर्षवर्षणः ॥ २२ ॥

---

(३०)अहो भगवतःशिवस्य भक्तवत्सलताया निरवधित्वमस्मत्प्राणप्रियेण चित्रितमित्युक्तेर्यथार्थमालिखितमितिभावः । कालिन्दी—देव्यः ! (३१) इतोपिविलोकनीयम् । वर्तत इति शेषः । एतद्विलोकनेन चास्मन्नेत्राणां कृतार्थता भवित्रीति तदाह । विलोक्य कृतार्थयतेत्यादि । ( ३२ ) स्फटिककटकेन स्फाटिकशिखरेण अलङ्कृत आकाशभागो येन तादृशोयं शैलः कैलासनामा योऽयं नानाकल्पद्रुमैर्घनानि वनानि यस्मिन्निति तादृशः । यस्मिन् स्वच्छे वटविटपिनो मूले श्रीगौर्या देव्या सह रत्नसिंहासनस्थः अयं परशिवः आभाति ।

( ३३ ) निपुणं निर्वर्ण्य । 'इतोपि पश्यन्तु' इति सर्वासामवधानमाकर्षति । नः प्राणप्रियोयं स्वयम् ' इति साकूतं वचनम् । एतावति चित्रग्रामे केवलं पदार्थान्तरचित्रकौशलं विलोकितमिदानीन्तु श्रीकृष्णेन स्वस्य चित्रं शिवसविधे लिखितं विलोकयतेत्यभिप्रायेणाह स्वयमिति । ( ३४ ) अयं स्पष्टं संवाद्याकृतिमान् नः प्राणप्रियः स्वयं प्रणयात् प्रणम्रमूर्द्धा विहिताञ्जलिः स्थितः विलोक्यतामिति शेषः । तस्मा अस्मत्प्राणनाथाय श्रीकृष्णचन्द्राय महेशः श्रीशङ्करः रत्नमयः त्सरुः खड्गमुष्टिर्यस्य तं शशिप्रभं च असिं तरवारिं हर्षवर्षणो हर्षाप्लुतः सन् यच्छति ददाति ।

अत्र महेशपदेन अभिधानौचित्यं कवेराभाति । ईशत्वं हि त्रिमूर्तिसाधारणं महेशत्वं तु केवलं शङ्करसमनियतमेव । ईशपदाभिधामर्यादाविष्टाय श्रीकृ-

रुक्मिणी—प्रियस्वसारो मे [३५]निखिलजगच्चित्रशिल्पिनोऽस्माकं प्राणनाथस्य स्वकीयमन्दिरचित्रकल्पनानैपुणं किं वर्णनीयं, परमत्र न केवलं परमेश्वरस्य पवित्राणि चरित्राणि चित्रितानि किन्तु प्राणप्रियेणास्माकं श्रीकृष्णेन भगवति जगद्गुरौ श्रीचन्द्रचूडामणौ स्वकीयहृदयस्थितो भक्त्युद्रेकोऽप्यालिखितः । पश्यत पश्यत यत्र यत्र निक्षिप्यते चक्षुस्तत्र तत्र परमशिवपवित्रचरित्र—चित्राणि तदीयकरकमलकलिततूलिकाचित्रितान्येव दृष्टिपथमवतरन्ति तेन परमकृपालौ परमेश्वरे श्रीमदपर्णाप्राणेश्वरे भगवतः श्रीकृष्णचन्द्रस्य कीदृशो भक्तिभावो विलसतीत्यस्माभिश्चिन्तनीयम् ।

रोहिणी—एवमेतत् । नार्यपुत्राय शिवचरित्रादन्यच्चित्रयितुं रोचते ।

सत्यभामा—[३६]कवयितुमपीति वक्तव्यम् । यतोऽनेके परमशिव परमोत्कर्षदर्शका मृद्वीकामार्दवमाधुर्यकिरा गिरा प्रबद्धाः प्रबन्धा इति नाविदितं वः ।

---

ष्णचन्द्राय वरं दातुं प्रभवतस्तदाराध्यस्य शम्भोर्युक्तमेव महेशपदेनात्र कथनं यतः कालिदासेनापि 'महेश्वरस्त्र्यम्बक एव नापर' इति तदेवोपपादितम् । सर्वेषामितरेषां देवपदव्यपदेश्यत्वान्महादेवपदवाच्यता तु शिवस्यैवेति तस्मिन्नेव महेशपदमुपात्तान्वयमौचित्यं पुष्णातीति तत्त्वम् ।

शशिप्रभम् । रत्नखचितः त्सरुर्मुष्टिर्यस्येति मध्यमपदलोपी समासः, तादृशं असिं यच्छति ददाति । अत्र—

एष साक्षाद्धरेरंशो जातो लोकरिरक्षया ।

इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥ भा० स्कं० ४ । १५ । ६

इतीदं पृथ्वभेदभावनोपयिकम्—

दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाम्बिका ॥ भा० स्कं०४।१५।१७

'आजन्हु' रितिसम्बन्धबोधितं खड्गार्पणं चित्रगोचरमासूच्यते ।

इतःपरं रुक्मिणीवचनेन ( ३५ ) 'निखिलजगच्चित्रशिल्पिनः' इत्यनेन श्रीकृष्णस्य पारमेश्वरं भावं पुरस्कृत्य कैमुतिकसिद्धं चित्रकलानैपुणं प्रसाधितं परस्ताच्च तादृशचित्रनिर्माणहेवाकिनो भगवति महेश्वरे प्रेमातिशयो विशदीकृतः॥ रोहिणी–यदा 'श्रीकृष्णाय शिवचरित्रादन्यन्न रोचते चित्रयितु' मित्याह तदा सत्यया ( ३६ ) 'कवयितुमपि' इति पूरयन्त्या परमशिवस्तुतावादरातिशयो व्यक्तीकृतः श्रीकृष्णचन्द्रस्य । श्रीमहेश्वरगुणानुवादमन्तरेण किमिव हि तादृशामी-

मित्रविन्दा—एवमेतत्। मया किलैकदाऽऽर्यपुत्रेण निबद्धं [३७]प्रसन्नमहेश्वरं नाम नाटकं विदेशीयाभिरप्सरोभिरभिनीयमानं मदीयपितृगृहे विलोकितं यस्मिन् कश्चिदपूर्व एव भवभक्तिरसोऽनुभूतो मया।

भद्रा—मयाऽपि श्रीमताऽऽर्यपुत्रेण प्रबद्धं श्रीमदपर्णापरिणयं[३८] महाकाव्यं विलोकितं तत्रापि समुल्लसतितरां कोऽप्यलौकिक एव भक्तिरसः।

लक्ष्मणा—देव्यः! चित्रदर्शनेनानेन [३९]क्षणार्द्धमिव प्रयातं यामद्वयं तथापि न नयनपथातिथितामुपयाति प्राणनाथो नस्तत् किं कर्त्तव्यम्? प्रियस्वसारो मे! [४०]शृणुत तावन्मदीयं निश्चयम्।

---

श्वरावताराणामधिकमालम्बनं कवयितृताया नाम प्रसक्तिप्रशंसनं भवेत्। यदाह मङ्खकः कविमतल्लिका—

अहो धन्योऽस्मि यस्येयं स्वच्छन्दापि सरस्वती।
विना श्रीकण्ठमन्यत्र नाचरच्चाटुकारिताम्॥
धिक् कष्टं बत हा हित्वा यच्छर्वं सर्वतःश्रुतिम्।
गर्वानवधिबाधिर्यो नरेण स्तूयते नरः॥

मित्रविन्दा पुनरत्र (३७) 'प्रसन्नमहेश्वरं' नाम नाटकं निजपितृगृहेऽभिनीयमानं श्रीकृष्णप्रणीतं कथयन्ती स्वानुभवं साधकत्वेन प्रमाणयति। भद्रापि (३८) 'अपर्णापरिणयं महाकाव्यं' मयापि तत्प्रणीतं विलोकितं यत्र विलक्षणः कोपि भवभक्तिरसः श्रीकृष्णेन निबद्धोनुभूयत इति वदन्ती संवादयति पूर्वोक्तम्॥ कालयापनाय आरब्धस्य चित्रदर्शनस्य (३९) 'क्षणार्द्धमिव प्रयातं यामद्वय' मित्यनेन सिद्धप्रयोजनत्वं दर्शयन्ती लक्ष्मणा पुनरुद्बोधयति कृष्णविरहानुतापं सर्वासाम्। तत्र चित्रदर्शनस्य तावत्कालं विरहविस्मरणापादकत्वरूपां सफलोपायतामनूद्यापि श्रीकृष्णविरहदुःखस्य सर्वथाऽनुपायापनोद्यत्वं द्योतयन्ती स्वनिश्चयमाविष्करोति (४०) 'शृणुत मे निश्चय' मिति। यः कश्चित् श्रीकृष्णं सन्दर्शयेत् तस्मै हीरकहारदानं प्रतिशृण्वन्ती अपि लक्ष्मणा 'करुणां विधाय' इति व्याहारेण श्रीकृष्णदर्शनस्य द्रव्यव्ययसाध्यतामपोद्य सद्गुरुकृपालभ्यत्वं व्यनक्ति। श्रीकृष्णस्य च 'करुणापीयूषपूर्णाशयं प्रणयिन' मिति च विशेषणदानेन वियोगप्रयोजकं नैष्ठुर्यमपमार्ष्टि। अत्र 'प्राणादप्यधिकप्रिय' मित्युक्त्या श्रीकृष्णविषयकं स्वीयं रसातिरेकं सन्दर्श्य 'पूर्णेन्दुरम्याननं

यः कश्चित् करुणां विधाय करुणापीयूषपूर्णाशयं
प्राणादप्यधिकप्रियं प्रणयिनं पूर्णेन्दुरम्याननम् ॥
श्रीकृष्णं नवनीलनीरदनिभं सन्दर्शयेदद्य न—
स्तस्मै हीरकहारमुत्तममिमं दास्यामि सख्यो ! मुदा ॥ २३ ॥

( नेपथ्ये— )

[41]हाराः सन्तु सहस्रशो मणिमयालङ्कारभाराश्च वा
मत्ताः सन्तु मदावलाश्च हरयश्चोच्चैःश्रवःसन्निभाः ॥

---

नवनीलनीरदनिभ' मिति भगवत्स्वरूपध्यानरूपां चतुर्थीं विप्रलम्भावस्थामावृण्वती स्वाधिकारमवगमयति । किञ्च करुणापूर्णत्वेन प्रणयित्वेन च श्रीकृष्णस्य स्वप्रियासु प्रणयपारवश्यप्रकटनेन 'प्राणादप्यधिकप्रिय' मित्युक्त्या श्रीकृष्णे तासां भावातिशयबोधनेन परस्परं रसस्य उभयाश्रितत्वव्यञ्जनद्वारा परिपोषो दर्शितः । रागस्य अन्यतराश्रितत्वं हि दुरन्तमेव भवतीति यदाह दामोदरः ।

'यस्त्वेकाश्रयरागः परिभवदौर्बल्यदैन्यनाशानाम् ।
स निदानमसन्दिग्धं सीतां प्रति दशमुखस्येव ॥
उभयेच्छया प्रवृत्तं निरुपाधि प्रेम भवति रमणीयम् ।'

अस्मिन् पद्ये 'सन्दर्शयेद्' इत्यनेन समुपसर्गसम्बन्धाहितातिशयं दर्शनमपरोक्षसाक्षात्कारपर्यवसाय्येवेति बोधयितुं नेपथ्ये नारदवाक्यमवतारयति । ( ४१ ) 'हाराः सन्त्विति'। अत्र भगवत्प्राप्तेः परमोपायत्वेन तद्भक्तिमेव पुरस्कुर्वन् उपायान्तरसाध्यत्वं प्रत्याचष्टे देवर्षिः ॥ हाराः सन्तु इति 'सन्तु' पदेनोपेक्ष्यतां, 'मणिमयालङ्कारभारा' इत्यत्र भारपदेन मणिमयालङ्काराणां भारेतरप्रयोजनासाधकत्वं, हस्त्यश्वादीनां श्रीकृष्णदर्शनेऽकिञ्चित्करत्वं च; प्रसाध्य 'एतैर्दर्शनगोचरो भवति किम् ?' इति साक्षेपं तेषां भगवद्दर्शनेऽनुपयोगं स्थिरीकृत्य भगवत्साक्षात्कारस्य भक्त्येकसमधिगम्यत्वबोधनाय भक्तेश्च 'प्रेमरसार्द्रयाऽनन्यये' तिच विशेषणद्वयेन सोपाधिकतां व्यावर्त्तयति । तथा च भगवद्गीतासु ।

'नाहं यज्ञैर्न तपसा न दानेन नचेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।'
'भक्त्यात्वनन्यया शक्यः । गी० ११।५३। इति च ।

अत्र अनन्यया इति पदेन भेदं त्यक्त्वा आत्मभावेनाहमुपास्य इत्यर्थो बोध्यते, यतोऽग्रेपि 'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः । गी० ७।१९ इति वचनेन सर्वात्मभावलक्षणाया एव भक्तेरुत्कर्षः स्वयमेव वर्णित इति ।

एतैर्दर्शनगोचरो भवति किं श्रीकृष्णचन्द्रः प्रभु—
र्भक्त्या प्रेमरसार्द्रया स नयनानन्दप्रदोऽनन्यया ॥ २४ ॥

रुक्मिणी—( साश्चर्यम् ) [४२]अहो ! अदृश्यमानस्यापि भगवतो देवर्षेरिव स्वरः श्रूयते। दयालुना तेन समुपदिष्टश्च श्रीकृष्णदेवदर्शनोपायः। स च कृतपूर्व एवास्माभिः।

[४३]परेश्वर इव प्रेम्णा प्राणेशः प्रतिवासरम्।
चिन्त्यते चेदिहास्माभिर्मनोवाक्कायकर्मभिः ॥ २५ ॥

---

अत्र केचिद् अनन्यया इति पदस्य देवान्तरपरित्यागे तात्पर्यं वर्णयन्ति तदतीव भगवदभिप्रायविरुद्धम्। यतः स्वयमेव 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' 'तमेव शरणं गच्छेति' 'ईश्वरः शर्वईशान' इत्यादिकोशबोधितं महेश्वरमेवकारेण शरण्यतमं निर्दिशन् कथङ्कारमन्यपरित्यागमुपदिशेत्। अपिच 'सर्वोपनिषदो गावो×दुग्धं गीतामृतं मह' दिति प्रतिज्ञा तदैव निर्वहति यदा अनन्ययेत्यस्यात्मभावेनेत्येवमर्थोऽङ्गीक्रियेत, यत्कारणं 'अन्योऽसावन्योऽहमस्मीति न स वेद पशुरेव स देवानाम्' इत्युपनिषद्वचसैककण्ठ्यमस्य वचसः स्पष्टमाटीक्यते। भगवता भाष्यकारेणापि 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' गी० अ० ८ श्लो० २२ इत्यस्य व्याख्यायां 'अनन्यया' इति पदस्य 'आत्मविषयया' इति विवरणं कृतम्। परस्ताच्च 'अनन्याश्चिन्तयन्तो माम्' गी० अ० ९ श्लो. २२। इत्यत्रापि 'अनन्याः अपृथग्भूताः परं देवं नारायणमात्मत्वेन गताः सन्तः' इत्येव विवृतम्। 'येभ्योऽन्यो न विद्यते इत्यनन्याः, अहमेव वासुदेवः सर्वात्मा न मत्तोऽन्यत् किञ्चिदस्तीति ज्ञात्वा तमेव प्रत्यञ्चं सदा भावयन्त इति' आनन्दगिरिणापि निरूपितम्। अपिच प्रेमरसार्द्रया इति भक्तेर्विशेषणमात्मभावे एव पर्यवस्यति यतो निरतिशयप्रेमास्पदत्वमात्मनोऽन्यत्र सर्वथा न सम्भवति। एतच्च 'आत्मनस्तु कामाय सर्वम्प्रियं भवति' इत्यादि बृहदारण्यक० प्र० प्रियब्राह्मणवाक्यैःसूपपादितम्। इतःपरं रुक्मिणी साश्चर्यं वदतीति शेषः। नारदागमनस्याकस्मात्प्रयोजनमनाकलयन्ती आश्चर्यचकिता सती ( ४२ ) 'अहो !' इत्याद्याह। 'दयालुना तेन समुपदिष्टश्च श्रीकृष्णदेवदर्शनोपायः स च कृतपूर्व एवास्माभि' रित्यनेन नारदस्य यथार्थोपदेशकत्वेऽनारेकणीयेऽपि तस्मिंश्चोपायेऽस्माभिरनुष्ठितेऽपि फलानुत्पत्तिः सर्वथा कश्चिदुपायशेषमवगमयतीति तदेव सार्वात्म्यं परमोपायमनुष्टुब्द्वयेन प्रतिशृण्वती प्रस्तौति ( ४३ ) परेश्वर इति। अत्र 'चिन्त्यते चेदिहाऽस्माभिर्म-

तदा स दर्शनं दद्या–दद्याऽऽनन्दमहोदयः ।
अस्मच्चक्षुश्चातकालीर्नन्दयन् कृष्णनीरदः ॥ २६ ॥
( इत्युक्त्वा प्रणमति )
( [४४]ततः प्रविशति भस्मरुद्राक्षाभरणभूषितः श्रीकृष्णः )

नोवाक्कायकर्मभि' रित्यनेन मनसा यद्यपि चिन्तनं प्रसिद्धमेव, वाचापि मध्यमाख्यया यथाकथञ्चिच्चिन्तनं भवति सूपपादं तथापि कायेन कर्मणा च चिन्तनं नोपपद्यते। तदत्र कवेरयमेवाशयो विकसति यत्परेण ध्यानाभ्यासेन स्वकायस्येश्वररूपता शक्यते भावयितुं, कर्मणां चेश्वरार्पणत्वेन विहितानामस्त्येवेश्वराभेदभावनं सुशकमिति। तदेतद्रासपञ्चाध्याय्यामुदाहृतम् 'असावहं त्वित्यबलास्तदात्मिकाः' इत्यादिना। अत्र 'चेत्' इतिपदेन स्वभक्तौ संशयाधानमावेद्य 'दर्शनं दद्याद्' इति हठच्छायां प्रदर्शयति। स्वचक्षुष्षु चातकालीत्वमारोप्य कृष्णे नीरदत्वारोपान् नीरदकर्तृकनीरदानवदत्रापि कृष्णकर्तृकदर्शनदानं केवलं तत्कृपायत्तमस्मदायत्तं तु चातकवत् क्रन्दनमेवेति ध्वन्यते। एतादृशभक्तेः फलाऽव्यभिचारमव्यवहितेष्टसिद्धिं च दर्शयति। (४४) ततः प्रविशतीत्यादि। तदुक्तं सूत संहितायाम्—

शिवेन विष्णुनाचैव ब्रह्मणा वज्रिणा तथा।
देवताभिर्धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना॥
उमादेव्या च लक्ष्म्या च वाचा चान्याभिरास्तिकाः।
सर्वस्त्रीभिर्धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना॥
यत्कृतं भस्मनिष्ठेन श्रीमहादेवपूजनम्।
तत्सर्वाभीष्टदं तस्मात्कर्त्तव्यं भस्मधारणम्॥
उद्धूलनत्रिपुण्ड्राभ्यामलङ्कृत्य तनुं शिवम्।
योऽर्चयिष्यति तत्तुल्यो भुवि कोवा भविष्यति॥

वसिष्ठः— न तद्ध्यानं न तज्ज्ञानं न तद्दानं जपो न सः।
त्रिपुण्ड्रेण विना येन विप्रेण यदनुष्ठितम्॥

कात्यायनोपि—श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने।
धृतत्रिपुण्ड्रः पूतात्मा मृत्युञ्जयति मानवः॥

भविष्यपुराणे—सत्यं शौचं जपो होमस्तीर्थं देवादिपूजनम्।
तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत्॥

महाभारतेऽपि—आयुष्कामोऽथवा राजन् भूतिकामोथवा नरः।

नित्यं वै धारयेद्भस्म मोक्षकामी च वै द्विजः ॥

विष्णुधर्मोत्तरे—भस्म वै परमं पुण्यं ब्रह्मविष्णुशिवात्मकम् ।
येन दृष्टेन पापानि नाशमायान्ति सर्वथा ॥

तैत्तिरीयश्रुतौ—' भूत्यै न प्रमदितव्यम् '

तद्भाष्ये—सत्याद्धर्माच कुशलाद्भस्मनोद्धूलनादपि ।
त्रिपुण्ड्रधारणाच्चैव सदा न प्रच्युतो भवेदिति ॥

तत्रैवच—विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षधारणम् ।
पूजितोपि महादेवो न तस्य फलदो भवेत् ॥

अतोमाहेश्वराग्रणीः श्रीकृष्णो भस्मरुद्राक्षभूषित एवात्र प्रविष्टः ॥

श्रीकृष्णस्य भस्मरुद्राक्षाभरणभूषितत्वानुषङ्गि परमशिवभक्तत्वं सुप्रसिद्धमेव महाभारतादिनिबन्धेषु । द्रोणपर्वणि २०१ अध्याये—नारायणास्त्रानिर्दग्धौ केशवार्जुनौ विलोक्य द्रौणिना पृष्टेन व्यासेनोक्तम् ।

योऽसौ नारायणो नाम पूर्वेषामपि पूर्वजः ।
अजायत च कार्यार्थं पुत्रो धर्मस्य विश्वकृत् ॥ ५७
स तपस्तीव्रमातस्थे शिशिरं गिरिमाश्रितः ।
षाष्टिं वर्षसहस्राणि वायुभक्षोऽम्बुजेक्षणः ॥ ५९
ततो विश्वेश्वरं योनिं विश्वस्य जगतः पतिम् ।
रुद्रमीशानमृषभं हरं शम्भुं कपर्दिनम् ॥
पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान् ॥ ७१
तस्मै वरानचिन्त्यात्मा नीलकण्ठः पिनाकधृक् ।
अर्हते देवमुख्याय प्रायच्छदृषिसंस्तुतः ॥ ७९

श्रीभगवानुवाच शिवः ।

मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु
अप्रमेयबलात्मा त्वं नारायण भविष्यसि ॥ ८०
स एष देवश्चरति मायया मोहयन् जगत् ।
तस्यैव तपसा जातं नरं नाम महामुनिम् ॥
तुल्यमेतेन देवेन तं जानीह्यर्जुनं सदा ॥ ८६
जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः ।
ताभ्यां लिङ्गेऽर्चितो देवस्त्वयाऽर्चायां द्विजोत्तम ॥ ९२

इत्येवं द्रौणेरपि शिवभक्तत्वे समानेऽपि श्रीकृष्णार्जुनाभ्यां लिङ्गे शिवा-

र्चाया विधानाद् द्रौणिना च प्रतिमायां पूजनात् तदपेक्षया लिङ्गार्चनकर्त्रोर्नर-नारायणयोरजय्यत्वं निरूपयता व्यासेन समर्थितं श्रीकृष्णस्य शाम्भवत्वम् ।

लिङ्गपुराणे पूर्वार्द्धे १०८ अध्याये—

पुत्रार्थं भगवाँस्तत्र तपस्तप्तुं जगाम च ।
आश्रमं चोपमन्योर्वै दृष्टवाँस्तत्र तं मुनिम् ॥ ४
नमश्चकारतं दृष्ट्वा धौम्याग्रजमहो द्विजाः ।
बहुमानेन वै कृष्णस्त्रिः कृत्वैव प्रदक्षिणम् ॥ ५
तस्यावलोकनादेव मुनेः कृष्णस्य धीमतः ।
नष्टमेव मलं सर्वं कायजं कर्मजं तथा ॥ ६
भस्मनोद्धूलनं दत्वा उपमन्युर्महाद्युतिः ।
तमग्निरिति विप्रेन्द्रा वायुरित्यादिभिः क्रमात् ॥ ७
दिव्यं पाशुपतं ज्ञानं प्रददौ प्रीतमानसः ।
मुनेः प्रसादान्मान्योऽसौ कृष्णः पाशुपते द्विजाः ॥ ८
तपसा त्वेकवर्षेण दृष्टवा देवं महेश्वरम् ।
साम्बं सगणमव्यग्रं लब्धवान् पुत्रमात्मनः ॥ ९
तदा प्रभृति तं कृष्णं मुनयः शंसितव्रताः ।
दिव्याः पाशुपताः सर्वे तस्थुः संवृत्य सर्वतः ॥ १०

श्रीविष्णोः शिवभक्तत्वमपि तत्रैवोत्तरार्धे पञ्चमाध्यायेऽम्बरीषवरप्रदाना-वसरेऽम्बरीषवाक्येन—

लोकनाथ परानन्द नित्यं मे वर्तते मतिः ।
वासुदेवपरो नित्यं वाङ्मनः कायकर्मभिः ॥
यथा त्वं देवदेवस्य भवस्य परमात्मनः ।
तथा भवाम्यहं विष्णो तव देव जनार्दन॥इत्यादिना निरूपितम्।

महाभारते आनुशासनिके पर्वणि चतुर्दशाध्याये २२ श्लोकात् भीष्मप्रेरितस्य श्रीवासुदेवस्य वचनानि—

न गतिः कर्मणां शक्या वेत्तुमीशस्य तत्त्वतः ।
हिरण्यगर्भप्रमुखाः सेन्द्रा देवा महर्षयः ॥ २२
न विदुर्यस्य भवन—मादित्यास्सूक्ष्मदर्शिनः ।
स कथं नरमात्रेण शक्यो ज्ञातुं सतां गतिः ॥ २३
तस्याहमसुरघ्नस्य काँश्चिद् भगवतो गुणान् ।
भवतां कीर्त्तयिष्यामि व्रतेशाय यथातथम् ॥ २४

वैशम्पायन उवाच ।

एवमुक्त्वा तु भगवान् गुणाँस्तस्य महात्मनः ।
उपस्पृश्य शुचिर्भूत्वा कथयामास धीमतः ॥ २५

वासुदेव उवाच × ×

यदवाप्तं च मे पूर्वं साम्बहेतोः सुदुष्करम् । इत्याद्युपक्रम्य
पुत्रार्थिनीमामुपेत्य जाम्बवत्याह दुःखिता ॥ २९
त्वया द्वादश वर्षाणि व्रतीभूतेन शुष्यता ।
आराध्य पशुभर्त्तारं रुक्मिण्यां जनिताः सुताः ॥ ३२
तथा ममापि तनयं प्रयच्छ मधुसूदन ॥ ३४
ततः कृतस्वस्त्ययनोऽहमगच्छं हिमालयम् ।
क्षेत्रं च तपसां तत्र पश्याम्यद्भुतमुत्तमम् ॥ ४४
दिव्यं वैयाघ्रपद्यस्य उपमन्योर्महात्मनः ॥
शिरसा वन्दमानं मामुपमन्युरभाषत ॥ ६५
लप्स्यसे तनयं कृष्ण आत्मतुल्यमसंशयम् ।
तपः सुमहदास्थाय तोषयेशानमव्ययम् ॥ ६९
द्रक्ष्यसे पुण्डरीकाक्ष महादेवं न संशयः ।
अचिरेणैव कालेन यथा दृष्टो मयाऽनघ ॥ ३७१
षोडशाष्टौ वराँश्चापि प्राप्स्यसि त्वं महेश्वरात्
सपत्नीकाद्यदुश्रेष्ठ सत्यमेतद् ब्रवीमि ते ॥ ३७३ ॥

श्रीकृष्ण उवाच ।

द्रक्ष्ये दितिजसङ्घानां मर्द्दनं त्रिदशेश्वरम् ।
एवं कथयतस्तस्य महादेवाश्रितां कथाम् ॥
दिनान्यष्टौ ततो जग्मुर्मुहूर्त्तमिव भारत ।
दिनेऽष्टमे तु विप्रेण दीक्षितोऽहं यथाविधि ॥ ३७९ ॥

इति भस्मरुद्राक्षधारणादिविधिप्रदर्शनपूर्वं षडक्षरमहामन्त्रदीक्षा श्रीकृष्णायोपमन्युना दत्तेति सुप्रसिद्धम् । तदाप्रभृत्येव नित्यं शिवाराधनसमनियतमेतद् व्रतं श्रीकृष्णश्चरति । शिवपुराणेऽपि सनत्कुमारसंहितायां २९ अध्याये भगवद्वचनम् ।

ब्रह्मा विष्णुरनन्तश्च शक्रोऽग्निर्वरुणो यमः ।
भूतिस्नानेन सम्पन्नाः सर्वेषामुपरि स्थिताः ॥ ५३ ॥

श्वेताश्वतरोपनिषद्यपि । ‘ तस्मा एतां ब्रह्मविद्यां वदेत शिरोव्रतं विधि-

श्रीकृष्णः—

[45]प्रेयस्यो मम सद्गुणैकनिलयाः सौशील्यशालायित-
स्वान्ताः सत्कुलसम्भवाः प्रियतमप्रेमेक्षणालम्बनाः ।
सर्वासामिह वः सुभक्तिरसनाबद्धोऽधुना दूरतो
वेगेनाऽऽगत एव नास्ति हि परं भक्त्या समं कार्मणम् ॥२७॥

सर्वाः—( उत्थाय [46]साश्चर्यानन्दं प्रणमन्ति )

---

वद्भिस्तुचीर्णम् । ' शिरोव्रतं भस्मोद्धूलनमिति भाष्यम् । ब्रह्मविद्यां पञ्चाक्षरीम् । तदुक्तमभियुक्तैः ।

उच्चावचैरुपनिषद्वचनप्रकाण्डैरुन्मीलितश्रुतिगणैरुपबृंहणैश्च ।
यत्सादरं समुदितं यमिनामुपास्यं तद् ब्रह्म शङ्करभवानितितर्कयामः ।

तदेव माण्डूक्ये ' शिवमद्वैतं चतुर्थं मन्यन्ते ' इत्यादिना सुनिरूपितम् । एवञ्चोपमन्युना श्रीकृष्णाय पञ्चाक्षरी विद्योपदिष्टा तद्दीक्षौपयिकं च भस्मरुद्राक्षधारणमद्य शिवव्रतदिनत्वात्सविशेषमिति भावः । शिवरात्रिव्रतं च श्रीकृष्णस्यातीव प्रियमित्यपि शैवपुराणे—ज्ञानसंहितायां ७२ अध्याये शिवविष्णुसंवादे—

' केन व्रतेन सन्तुष्टो भुक्तिं मुक्तिं च यच्छसि '

इति विष्णुप्रश्ने शिववचनम् ।

शृणु विष्णो प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् ॥ ८
शिवार्चनं रुद्रजप उपोष्यं च दिनत्रयम् ।
वाराणस्यां च मरणं मुक्तिरेषा चतुर्विधा ॥ १२
चतुर्ष्वपि बलिष्ठं हि शिवरात्रिव्रतं हरे ॥
इत्यादिना महता विस्तरेण प्रतिपादितम ।

इदानीं श्रीकृष्णविरहतापतप्तान्तरङ्गाणाममूषां नानाविधकल्पनापारम्परीमवतारयितुं प्रथमं प्रागुक्तनारदवचसो निःशङ्कप्रत्येयतामुपदधाति ( ४५ ) ' प्रेयस्यो ममेत्यादि ' ' नास्ति हि परं भक्त्या समं कार्मण ' मित्यन्तेन श्रीकृष्णवाक्येन । अत्र भक्तेः कार्मणपदार्थाभेदकथनमुभयोर्वशीकारसामर्थ्यसाम्यमूलकं बोध्यम् । तच्च भक्तस्य सद्गुणवत्त्व—सुशीलत्व—सत्कुलसम्भवत्व—तदेकालम्बनत्वादिधर्माधिकरणतारूप—साधनसामग्रीसम्पन्नत्वे सद्यः फलाव्यभिचारि भवतीति बोधयितुमेव विशेषणचतुष्टयेन सम्बोधनम् । तदुक्तं मधुसूदनेन भक्तिरसायने ' साद्गुण्यादि—समवधानेऽव्यवहितः फलाव्यभिचार इति ॥

( ४६ ) विलासिवेशादर्शनेनाश्चर्यम् । आनन्दश्च चिरेण दर्शनादुत्कलिकान्तजन्यः । अभ्युत्थानं प्रणामश्च आचारप्रतिपत्त्यर्थमिति ।

रुक्मिणी—देव !

[४७]गुरुदेवद्विजातीनां पूजया कातिवाहितः ।
इयान् समय इत्येतज् ज्ञातुमिच्छति मे मनः ॥ २८ ॥

सत्यभामा—[४८]अथवा मानिनीमानमनोमणिमुषा दृशा ।
का वाऽनुनीता मानिन्यः कालेनैतावता प्रभो ! ॥ २९ ॥

जाम्बवती—[४९]अथवा कतमो नाथाऽधमाधमतमो नरः ।
अधमोद्धारधुर्येणोध्धृतः कालेन चेयता ॥ ३० ॥

कालिन्दी—[५०]राधा त्वदपराधार्द्ररोषा दोषाकरानना ।
अपि प्रेम्णा प्रबद्धं त्वां निगडेन बबन्ध किम् ? ॥ ३१ ॥

मित्रविन्दा—[५१]कुब्जा वा कुपिता किन्ते काली कंसस्य किङ्करी ।
तस्या अनुनये नाथ किन्ते याता इमे क्षणाः ? ॥ ३२ ॥

सत्या—[५२]यशोदां मातरं द्रष्टुं नन्दं च पितरं निजम् ।
गतः किंस्विद् व्रजं नाथ प्रेम्णा व्रजजनप्रियः ॥ ३३ ॥

रोहिणी—[५३]नवनीतमुषं वल्लमनोनयनतस्करम् ।
बबन्धुर्व्रजवल्लव्यः किन्त्वां हस्तगतं चिरात् ? ॥ ३४ ॥

---

(४७) 'गुरुदेवद्विजातीना' मित्यादि रुक्मिणीवचनं सात्विकवेशोत्प्रेक्ष्यवृत्तानुगतं प्रौढताशालि सारल्यव्यञ्जकम् ।

(४८) अथवेत्यादि सत्यभामावचस्तु भामावृतमेव स्पष्टम् ।

(४९) जाम्बवत्या तु भक्तोद्धारमेव मनसिकृत्य चिरायितमाशङ्कमानया स्वीयमार्जवं प्रकटमेवावेदितम् ।

(५०) कालिन्दी पुना राधायामपराद्धं श्रीकृष्णस्य वदन्ती स्वस्या अधीरात्वमाविष्कुर्वती दोषाकराननेति विशेषणश्लेषेण सापत्न्यप्रयुक्तस्पर्द्धामुदञ्चति ।

(५१) मित्रविन्दया तु कुब्जानुनयापदेशं कथयन्त्या नर्मवादित्वमात्मनः ख्यापितम् ।

(५२) सत्यया स्वनामानुरूपमेवाशङ्कमानया गुरुजनाभिवादननिमित्तेन व्रजङ्गतस्य 'व्रजजनप्रिय' इति विशेषणव्यङ्ग्यं प्रियजनदर्शनजन्यानन्देन चिरायितस्य सहेतुत्वं प्रकटितम् ।

(५३) रोहिणी तु सत्यया उट्टङ्कितं व्रजगमनं प्रमाणयन्ती तत्र चिरायितस्य हेत्वन्तरप्रयुक्तत्वं सूचयन्ती श्रीकृष्णस्य बाललीलास्मारणेन तस्करस्व

भद्रा—देवर्षिणा नारदेन पर्वतेनाऽपरेण वा ।
अनन्यभक्तेनाभूत्ते सङ्गमः किं कचिद्वने ? ॥ ३५ ॥
( ततोऽन्तरिक्षादवतीर्य नारदः )

नारदः—अहो महद् भाग्यं मे । येन—
[५५]यस्मिन् वर्षति जीवनान्यविरतं विश्वम्भरे विश्वतः
सन्तापा गलितास्तृषश्च दलिताश्चिन्ता च शान्ताऽखिला ।
हृष्टं पुष्टमिदं जगच्च सकलं सोऽयं पुरो दृश्यते
विद्युत्प्रोज्ज्वलकामिनीशतवृतः श्रीकृष्णधाराधरः ॥ ३६ ॥
( इति वदन् श्रीकृष्णं प्रणमति )

श्रीकृष्णः—( साश्चर्यानन्दम् ) अहो कुतोऽकस्मान्नारदागमनम् !
( इति ब्रुवन् सह धर्मपत्नीभिः प्रणमति )[५६]

---

चिरात् हस्तगतत्वे बन्धनमुचितमेवानुबध्नती इतरापेक्षयाऽऽत्मनः सोपपत्तिशङ्कित्वमवगमयति ।

( ५४ ) भद्रा पुनः स्वनामार्थानुगुणमेव शङ्कमाना भगवतः स्वभक्तप्रियत्वं कथयन्ती विलम्बस्य योग्यतां समर्थयति । अत्र भद्रावाक्ये श्रीनारदनामोपादानेन नारदप्रवेशाय कविनाऽवसरप्रदानमुपनिबद्धं ध्रुवया—यदाह भरतः ।

नानारसार्थयुक्ता नृणां या नीयते प्रवेशेषु ।
प्रावेशिकी तु नाम्ना विज्ञेया सा ध्रुवा तज्ज्ञैः ॥ अ० ३२ श्लो. ३१८

कविना स्वनिर्मितावास्वाद्यतातिशयाधानार्थं शक्यते किञ्चिद् वृत्तान्तान्तरमुपनिबन्धुम् । उक्तं हि ध्वनिकृता 'कविना प्रबन्धमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम् । तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत्तां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरं प्रसङ्गान्तरं वोत्पादयेत्, नहि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित्प्रयोजनमितिहासादेव तत्सिद्धेः । ' अतश्च नारदागमनमत्र बीजोद्भेदायैवेति रहस्यम् ।

( ५५ ) अत्र नारदवचने श्रीकृष्णस्य धाराधरपदेन कथनं पूर्वोक्तस्य ' न प्राप्य प्रियचन्द्रदर्शनसुखं मग्ना विषादाम्बुधा ' वित्यस्य बीजस्य सङ्गत्यै, विषादप्रशमनं चन्द्रदर्शनमात्रसाध्यं न किन्तु धाराधरसाध्यमपीति प्रकटनाय च । तत्र श्रीकृष्णे—धाराधरत्वारोपौपयिकस्तत्प्रियासु विद्युत्त्वारोपो रूपकस्य साङ्गतामादधाति । अकस्मादागमनमाश्चर्यहेतुतयानुपदमेवोक्तम् । ( ५६ ) आश्चर्यचकितानामपि महतामाचारप्रतिपत्तिरसम्भ्रमेणैव भवतीति ' धर्मपत्नीभिः सह प्रणमती ' त्याह ।

नारदः—अयि कृष्णचन्द्र ! अखण्डसौभाग्यवत्यो महासत्यो वत्साश्च
[५७]भक्तचिन्तामणेः श्रीमच्चन्द्रचूडामणेः प्रभोः ।
प्रसादात् सन्तु वः पूर्णा मनोरथपरम्पराः ॥ ३७ ॥
( इत्याशिषमुच्चार्य श्रीकृष्णदत्तमासनमधितिष्ठति )

श्रीकृष्णः—( सपत्नीकस्तदग्रे रचिताञ्जलिस्तिष्ठन् ) को निदेशो देवर्षेः ? ( इति पृच्छति )

नारदः—( स्वगतम् ) [५८]न खल्विदानीं सर्वान्तर्यामिणोऽग्रेऽसत्यं वक्तव्यम् । ( प्रकाशम् ) भगवन् प्राय एककलत्रोऽपि पुरुषो यावदायुर्बहून् क्लेशाननुभवतीति मत्वा बहवो बहुज्ञाः प्राज्ञा ब्रह्मचर्यदशामेव श्रेयसीं मत्वा तामेव यावदायुः स्वीकुर्वन्ति । भगवता तु अष्टोत्तरशताधिकानि षोडश सहस्राणि कलत्राणां स्वीकृतानीति त्वदीयां स्थितिं विलोकयितुमेवाऽऽगतोऽहम् । परं भवदीयासन्निधौ विविधविचारान् कुर्वन्तीनां भवत्सन्निधौ च कालविलम्बहेतुप्रश्नपरम्परां रचयन्तीनामासां ते धर्मपत्नीनां वचनैरेवावगतप्राया स्थितिर्भगवतस्ते तथापि कञ्चित्कालमत्र स्थित्वा भवदीयानि गृहस्थदशासुखानि विलोकयितुमिच्छामि, परमधुना तु प्रथमं श्रीमन्मुखाद् 'ब्राह्ममुहूर्त्तादुत्थाय सार्द्धद्वययामपरि-

---

नारदमुखेन ( ५७ ) ' भक्तचिन्तामणेः श्रीचन्द्रचूडामणेः प्रसादाद्वो मनोरथपरम्पराः पूर्णाः सन्तु ' इत्याशीरुच्चारणेन सकलकाव्यप्रतिपाद्यार्थसङ्ग्राहकत्वेन अनुसन्धिनामकं नाट्याङ्गमुपक्षिप्तम् । यदाह भरतः ।

' एकोऽनेकोऽपि वा सन्धिः पताकायास्तु यो भवेत् ।
प्रधानार्थानुयायित्वादनुसन्धिः स कीर्त्यते ॥ '

( ५८ ) निदेशार्थनाप्रवणेऽपि श्रीकृष्णे नारदस्य मायावचनपण्डितस्यापि ' नाऽसत्यं वक्तव्य ' मिति स्वगते ' सर्वान्तर्यामिणोऽग्रे ' इति विशेषणोपादानेनैश्वरं भावमावदतः सातिशयं गौरवमवबोध्यते । अत्र नारदेन आजन्मब्रह्मचर्यदशायाः प्रशंसनेन स्वीयाऽवस्था स्तुता, कलत्रस्वीकारस्य क्लेशमूलत्वं च स्वयमूहितं तदनेकगुणं भगवत्यारोप्य भगवद्दशाविलोकननिमित्तमेव स्वस्यागमनं वदन् भगवदागमनात्पूर्वं राज्ञीभिरारब्धान्विचाराननुसन्दधानः श्रीकृष्णस्य दुःखबहुलां व्यवहारस्थितिं मन्वानो मुनी राज्ञीनामेव प्रश्नं पुनरनुवदन् तदुत्तर-

मितस्य समयस्य व्ययः क्व कृत' इत्येताभिः [५९]कृतस्य प्रश्नस्योत्तरं श्रोतुमिच्छामि ।

श्रीकृष्णः—यथायुष्मदाज्ञं कर्त्तुमवहितोऽस्मि । परं श्रीमता मदीयधर्मपत्नीनां वचनैः कीदृशी मे स्थितिरधिगतेति ज्ञातुमिच्छामि ।

नारदः—[६०]दुःखमय्येव स्थितिरस्तीति देवाधिदेवस्यापि सर्वदा स्वतन्त्रस्यापि क्षणलवमात्रस्वातन्त्र्यसुखं नास्तीति बहुकलत्रस्वीकारफलम् ।

श्रीकृष्णः—( सहासम् ) देवर्षे ! नेदं दुःखं किन्तु सुखमेव, यत एताभिरारब्धोऽयं प्रेमकलहो, न वास्तवः कलहः । वास्तवस्तु कलहस्तदा स्याद्यदा मम पत्नीषु प्रेमवैषम्यं स्यात्, तच्च मे स्वप्नेऽपि नास्तीति न क्लेशलेशावकाशोपि । प्रेमकलहस्तु गृहस्थानां किमपि सुखान्तरम् ।

नारदः—( सहासम् ) ' दुःखेषु दुःखमतिरेव न दुःखिताना ' मितिं वृद्धोक्तिर्न मृषा । स्वीयानां पाणिगृहीतीनामप्यऽविश्वासपात्रत्वं गृहस्थानां सुखान्तरम् ! ! तर्हि दुःखं किमिति बुद्धिर्बोधपदवीमेव नावतरति मे । [६१] अथवा सर्वोऽपि स्वीयमेवाश्रमं श्रेष्ठं मन्यत इति युक्त एव भवतोऽपि तथाभिनिवेशः ।

---

दानाय भगवन्तं त्वरयति—( ५९ ) ' एताभिः कृतस्ये ' त्यादिना । श्रीकृष्णः पुनः पारोक्ष्ये राज्ञीवचनैः कीदृशी मे स्थितिर्भवताधिगतेति प्रतिप्रश्नयति । अस्योत्तरे लोकप्रसिद्धं बहुकलत्रस्वीकरणस्य पारतन्त्र्यादिदुःखनिदानत्वमेव मनसिकृत्याह मुनिः । ( ६० ) दुःखमय्येवेति ।

श्रीकृष्णस्तु मुनेर्व्यवहारापटुत्वमाविष्कुर्वन् सहासमाह । नायं कलहोऽपि तु प्रेमकलहोऽयं यः किल गृहस्थैः सुखप्रकारत्वेन मन्यते ।

मुनिरपि सहासमेवोत्तरयति । यत्र पत्न्यपि न विश्वसिति तदपि सुखमित्युच्यते तर्हि न वयं दुःखस्वरूपं शक्नुमो निश्चेतुम् । परमत्र स्वीयं सर्वं श्रेष्ठमेव मन्वानो नापराध्यतीत्याह । ( ६१ ) अथवेत्यादि युक्त एवेत्यन्तम् ।

सर्वत्र मार्मिकवचःप्रसङ्गोपनिपातः सत्यभामामुखेनैव नाम्नोऽन्वर्थतामुपबृंहयतीति पूर्वकृतप्रश्नस्य प्रसङ्गान्तरापादने अदित्सितोत्तरत्वमिवाशङ्कमानाया

सत्यभामा—प्राणनाथ ! देवर्षिणा सह प्रसङ्गान्तरप्रवर्त्तनेनास्मत्प्रश्नोत्तरापह्नवो [६२]न योग्यः ।

नारदः—( सहासम् ) देव एतदपि गृहस्थानां सुखान्तरम् । कियन्तां त्वरया सर्वा अपि पट्टराज्ञ्यो दत्तोत्तराः । मया तु पूर्वमेवोक्तं यत्प्रथमं ताभ्य उत्तरं देहीति परन्तु देवेनैव प्रसङ्गान्तरं निष्कासितं यस्याऽयं परिणामः ।

श्रीकृष्णः—( स्वगतम् ) [६३]स्वभावतो वामाशयैव खलु भामा ( प्रकाशम् ) अयि भामे ! अन्याश्च पट्टराज्ञ्यः ! अद्य खलु महाशिवरात्रिरस्तीति भवतीनां विदितं न विदितं वा ?

सत्यभामा—विदितमेव । [६४]तदीयव्रतकरणाय श्रीमद्भिराज्ञप्तमात्मानमिच्छन्त्यो वयं श्रीमत्समीपमाप्ताः परं तत्रभवन्तो भवन्तस्तु राज्यतन्त्रपरतन्त्राः शिवरात्रावपि न विश्रामं भजन्ते । कस्याज्ञा गृहीतव्या कथं च व्रतं कार्यम् ?

श्रीकृष्णः—देव्यः ! अद्य महाशिवरात्रिमहोत्सवतया ब्राह्मे मुहूर्ते समुत्थाय समुद्रस्नानं कृत्वा च प्रथमं [६५]श्रीकुशेश्वरमनन्तरं

---

सत्यभामाया ( ६२ ) 'न योग्यः प्रश्नोत्तरापह्नवः' इति हि साटोपं वचनम् ।

नारदस्य तु कुपितकामिनीवाक्सन्तक्षणं 'सुख' मिति मन्वानं भगवन्तं सोपहासमुत्तरदानाय प्रेरयतः प्रसङ्गान्तरप्रयोजकत्वं श्रीकृष्णस्यैव न ममेति स्वस्याऽनपराधत्वप्रकटने तात्पर्यम् ।

श्रीकृष्णः—( ६३ ) स्वभावतो वामाशयैव भामेति वदन् दुःसमाधेयतामिव सत्यभामाप्रश्नस्य प्रकटयति । परमद्यतनविलम्बस्य देवाधिदेवाराधनप्रयुक्तत्वेन निमित्तापह्नवादिक्लेशानाधायकतया सोत्साहमेव सम्बोधयति, अयि! भामे इत्यादिना गृहीतमहाशिवरात्रिव्रतनियममात्मानमावेदयति ।

सत्यभामापि शिवव्रतकरणाय स्वमौत्सुक्यं प्रकटयन्त्याह । (६४) तदीयव्रतकरणायेत्यादि, कथं च व्रतं कार्यमित्यन्तेन ।

इदानीं श्रीकृष्णः—एतावता समयेनानुष्ठितं कार्यजातं परिगणयन् समयव्ययस्य निरर्थकतां परिहरतितमाम् । शिवरात्रिदिनानुष्ठेयं सत्कार्यक्रममपि लोकानुग्रहायाह च ।

( ६५ ) द्वारावत्यां श्रीकुशेश्वरस्य नगराधिदेवतात्वं प्रसिद्धमतस्त-

सर्वाणि द्वारावतीस्थितानि शिवलिङ्गानि सम्पूज्य श्रीप्रभासक्षेत्रे चास्मदीयकुलमूलपुरुषेण श्रीरोहिणीरमणेन स्थापितं श्रीसोमनाथं सम्पूज्य तदुपरि चैकविंशत्यधिकशतब्राह्मणद्वारा श्रीमहारुद्राभिषेकं परिसमाप्य रैवतदेवताचलस्थितानि शिवलिङ्गानि पूजयितुं जिगमिषुरभूवं तावदाकर्षणविद्ययेव भवतीभिः कृतया परमेश्वरप्रार्थनया समाकृष्ट इवाहमत्राऽऽगत इत्येतन्मे ब्राह्ममुहूर्तादारभ्य मध्याह्नपर्यन्तस्य समयस्य कृत्यम्।

रुक्मिणी—[६६]नाथ! किं तादृशमस्माकमभाग्यं यदेकाक्येवाऽस्मान् विहाय परशिवपूजनं कर्तुं प्रस्थितः प्राणनाथः।

सत्यभामा—भवदीयपादपद्मरजःपरमाणुसमाभिः पूजापात्रहस्ताभिरनुयायिनीभिरस्माभिः क इव भगवतो भारोऽभविष्यत्?

जाम्बवती—[६८]नाथ! धर्मे चार्थे च कामे च सहचरेयं सहचरेयमिति प्रतिज्ञापि विस्मृता?

श्रीकृष्णः—[६९]देव्यः! 'विचित्ररूपाः खलु चित्तवृत्तयः' इति लोकोक्त्यनुसारेण लोकानां भिन्नेषु भिन्नेषु देवेषु भक्तिर्भवतीति भवत्यः

---

दर्चनं प्रथममेव युक्तं ततश्च सिद्धेश्वरादिलिङ्गार्चनं। सोमनाथलिङ्गे चाभिषेकात्मकमहारुद्रार्चनमृत्विग्द्वारकं साद्यस्कत्वाय। अनन्तरं रैवताचललिङ्गार्चनाय कृतप्रयाणस्यापि भवतीनां भावाकर्षणेनात्रागमनमिति सर्वोऽयं ब्राह्ममुहूर्त्तादारभ्य कृतस्य समयव्ययस्य कार्यक्रमः।

(६६) रुक्मिणी असूयन्तीवाह। एकाक्येवाऽस्मान् विहाय प्रस्थित इति। परशिवपूजने भवत्साहाय्यकरणं हि महद् भाग्यमस्माकमित्याशयः॥ सत्यभामापि साहाय्यकप्रकारमेव विवृण्वाना (६७) 'पूजापात्रहस्ताभिरनुयान्तीभिरस्माभिर्भगवतः क इव भारोऽभविष्य' दित्याह। न खलु भाराभावः केवलं प्रत्युत पूजासामग्रीसम्पादनसौकर्यमुपहारभारवहनक्लेशाभावश्चेत्यादिनैकविधप्रयोजनसिद्धिरपीति काकूक्तिगूढाशयः। जाम्बवत्या तु—(६८) त्रिवर्गानुष्ठाने सहचारित्वमास्माकीनं विवाहसामयिकप्रतिज्ञाविषयीकृतं कथं विस्मृतमिति वदन्त्या प्रतिज्ञाभङ्ग उद्भावितो भगवति।

(६९) इदानीं सर्वासां शङ्कापङ्कं क्षालयन् श्रीकृष्णधराधरस्तासां परशिवे भक्तिभावं ज्ञातुकाम इव सर्वान्तर्याम्यपि अजानान इव वदन् पूर्वोक्त-

सर्वा अपि श्रीसाम्बसदाशिवपदारविन्दभक्तिमत्यः स्थेति न मया ज्ञातम् । हठात् कारिता च भक्तिर्न भक्तिभावं पुष्णातीति विचार्य न भवत्यो मया श्रीसाम्बशिवपूजनाय समाहूताः ।

सर्वाः—नाथ नाथ ! अस्मदेश्वरभक्तानां कुलकामिनीनां श्रीकृष्णचन्द्रसदृशप्राणपतिप्राप्तिः सुलभा किम् ? शृणुत—

७०श्रीमन्मन्मथमोहनाकृतिधरो लावण्यरत्नाकरः
शौर्यौदार्यदयादिसद्गुणगणारामोऽभिरामो दृशाम् ।
अस्माभिर्हृदयेश्वरो यदुपते प्राप्तः प्रियस्त्वं श्रियः
श्रीगौरीगिरिशाङ्घ्रिसेवनशतैः प्रेम्णा कृतैः केवलम् ॥३८॥

सत्यपि तथा यदि तत्कृपावलोकलहरीलब्धसौभाग्य—

---

विकल्पजालं परिहरति ' देव्य ' इति । अत्र ' हठात्कारिता भक्तिर्न भक्तिभावं पुष्णातीति मया न भवत्य आहूता ' इति वचनं कशाघातमिव मन्वानाः सर्वा राज्ञ्यः सम्भूय वदन्ति । श्रियः पतिस्त्वं सकलकल्याणगुणालयोऽस्माभिः प्रियपतित्वेन लब्धः सोऽयं कृत्स्नोऽपि परशिवाराधनस्य फलातिशय इत्याहुः (७०) ' श्रीमन्मन्मथमोहन ' इत्यादि ' केवल ' मित्यन्तम् । भागवतेऽपि—

' विद्याकामस्तु गिरिशं दाम्पत्यार्थमुमां सतीम् ॥ '

तदेतत्सकलं यत्कृपाकटाक्षानुषक्तं तद्भजनवैमुख्ये कथं नाम भवादृशपतिलाभः कथं वा सौभाग्यावाप्तिः ? तदुक्तं श्रीमद्भागवते—

पूर्तेष्टदत्तनियमव्रतदेवविप्र—
गुर्वर्चनादिभिरलं भगवान् परेशः ॥
आराधितो यदि गदाग्रज एत्य पाणिं
गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥

स्कं १० उत्त० अ० ५२ श्लो० ४०

तत्रैव—अपि मय्यनवद्यात्मा दृष्ट्वा किञ्चिज्जुगुप्सितम् ।
मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ॥
दुर्भगाया न मे धाता नानुकूलो महेश्वरः ।
देवी वा विमुखा गौरी रुद्राणी गिरिजा सती ॥

स्कं० १० उत्त० अ० ५३ श्लो० २४—२५

अग्रेऽपि—तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ।
भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् ॥

सर्वस्वा वयं परमकृपालुं परमेश्वरं [७१] श्रीसर्वमङ्गलासहायं न भजामस्तर्हि [७२] कृतघ्नतमानामस्माकं क्व वा कथं वा कल्याण-लवप्राप्तिरपि भविष्यति ।

श्रीकृष्णः—[७३] देव्यः ! युष्माकं सर्वासामेभिर्वचोभिः परमं परितोषं प्राप्तं मनो मे । सर्वा अपि यूयं शिवभक्तिमत्तया मे प्राणतोऽप्यधिकप्रियतमाः स्थेति निर्विवादम् ।

[७४]ये श्रीमहेशभक्तास्ते ममातीव हि वल्लभाः ॥
मद्भक्ता अपि ये ते श्रीमहेशस्यातिवल्लभाः ॥ ३९ ॥
[७५]ममास्ति हृदयं शम्भुः शम्भोर्हृदयमस्म्यहम् ॥

---

नमस्ये त्वाऽम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् ।
भूयात्पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥

स्कं० १० उत्त० अ० ५३ श्लो० ४५–४६

इत्यादि महता विस्तरेणोपपादितमर्थमत्र भङ्ग्यन्तरेणानुवदति ॥

एतेन श्रीनारायणावतारस्य श्रीकृष्णस्य पतित्वेन योगः शिवाराधनफलमिति सूचितम् । ( ७१ ) सत्यप्येवं यदि तमीश्वरं न भजामस्तर्हि कृतघ्नानामस्माकं कथं कल्याणप्राप्तिरिति व्यतिरेकविधया हेतुहेतुमद्भावः समर्थितः । यथा लक्ष्मीरपि प्राग्जन्मानुष्ठितपरशिवाराधनबलेनादिनारायणं पतिमवाप तत्संस्कारानुवृत्त्या जन्मान्तरेऽपि श्रीनारायणावतारश्रीकृष्णमेव पतिमाप्तुं श्रीसाम्बसदाशिवाराधनमेव चेतसि स्फुरेदिति तदेव मुखादुद्गच्छति ।

( ७२ ) अत्र परमेश्वरस्य श्रीसर्वमङ्गलासहायविशेषणदानेन स्वाभीष्टसिद्धावविलम्बोऽव्यभिचारश्च बोधितः । तदुक्तमभियुक्तैः—

यः शिवो नामरूपाभ्यां या देवी सर्वमङ्गला ।
तयोः संस्मरणात् सद्यः सर्वतो जयमङ्गलम् ॥

( ७३ ) इदानीं श्रीकृष्णः श्रुतिस्मृतिपुराणेतिहासरहस्यभूतं शिवविष्ण्वभेदं सर्वाः श्रावयन् तासां शिवभक्तिमुत्तेजयति ‘ शिवे भक्तिमत्तया यूयं मे प्रियतमा ’ इति कथनेन विष्णुप्रसादासादनं शिवभक्तिसमधिगम्यमित्यपि द्योतितम् । ( ७४ ) ‘ ये श्रीमहेशभक्ता ’ इत्यादिना ।

वक्ष्यति च—परात्परतरं यान्ति नारायणपरायणाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥

( ७५ ) शिवभक्तेषु विष्णुप्रियत्वं विष्णुभक्तेषु च शिवप्रीतिपात्रत्वं मिथः समु-

न शिवद्वेषिणे सत्यं परितुष्याम्यहं क्वचित् ॥ ४० ॥
न च मद्वेषिणे शम्भुः परितुष्यति कर्हिचित् ॥
इति निश्चित्य मनसा सेव्योऽहं च महेश्वरः ॥ ४१ ॥
यतो मदीयेयं प्रतिज्ञा—
परात्परतरं यान्ति नारायणपरायणाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥ ४२ ॥

रुक्मिणी—[७६] प्राणनाथ! पतिव्रताभिः सतीभिर्नात्मप्राणनाथस्याज्ञां विना किमपि व्रतं कर्तव्यमिति धर्मशास्त्रम् । ततः श्रीशिवरात्रिव्रतकरणाय श्रीमद्गिराज्ञप्तमात्मानमिच्छामो वयं सर्वा अपि ।

श्रीकृष्णः—देव्यः! [७७] सर्वाभिः कर्तव्यमेव शिवरात्रिव्रतं श्रीसदाशिवप्रीतये मत्प्रीतये च । किञ्च भवतीनां श्रीपार्वतीप्राणनाथे भक्तिं विलोक्यैतदाशासे ।

[७८]श्रेयोलक्ष्मीं दिशि दिशि दिशत्वाश्रितानन्ददो नः ।
श्रीमान् गौरीहृदयदयितो राजराजाधिराजः ॥

---

दीर्यं तन्निदानभूतमात्मनोऽपि शिवेनाऽभेदं तदौपयिकं च स्वद्वेषिणि शिवप्रसादात्यन्ताभावं शिवद्वेषिणि च स्वस्य प्रसादविरहमनुष्टुब्द्वयेनोक्त्वा 'परात्' इत्येनेन स्वां प्रतिज्ञां स्पष्टमाटीकते ।

(७६) एतावताऽवगतयाथातथ्या रुक्मिणी सर्वासामपि चिन्तितं प्रभोः पुरत आवेद्यानुज्ञामर्थयते प्राणनाथ इति । अत्र सतीभिरित्युपादानं हि धर्मशास्त्रानुगमनिमित्तं यदाह मनुः—

नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम् ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥

क्षेमेन्द्रोऽपि—

पत्यौ भक्तिर्व्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतम् ।
प्रजानुपालनेऽनन्यकर्मता भूभृतां व्रतम् ॥

अतः पत्यनुज्ञापूर्वकमेवाचरितं व्रतं स्त्रीणां व्रतायते । अत्र तु पत्या स्वयमप्याचीर्णमनुज्ञातं च शिवरात्रिव्रतं 'सर्वाभिः कर्त्तव्यमेव' (७७) इति सावधारणमाह भगवान् । नैतेन व्रतानुष्ठानेन केवलं शिवप्रीतिरेव भवित्री किन्तु मत्प्रीतिरपीति पूर्वोक्तमवधारणं प्रयोजनकथनेन दृढीकृतम् । शिवभजनसमनियतामाशिषमाशास्ते । (७८) 'श्रेयोलक्ष्मी' मित्यादिना । 'राजराजा-

नत्वा नत्वा यमिह परमं देवतासार्वभौमं
प्राप्ताः सर्वा अनुपमतमं देवता देवतात्वम् ॥ ४३ ॥
(सभक्त्युद्रेकम्) अयि श्रीरुक्मिणीप्रमुखाः प्रियातमा मे ! शृणुत ।
[७९] विद्या हृद्या दिशि दिशि जयः कीर्तिरिन्दुप्रकाशा
लक्ष्मीलाभो निधिपतिनिधिस्पर्द्धिवित्तागमोऽयम् ॥
मां सेवन्ते कुवलयदृशां यत्सहस्राणि सोऽयं
सर्वः श्रीमत्परशिवकृपालोकलेशप्रभावः ॥ ४४ ॥
[८०] कथं तस्य परमेश्वरस्य परमप्रीतिकरं शिवरात्रिव्रतं न कर्तव्यं कर्तव्यं वेति संशयः ? कर्तव्यमेवैतद् व्रतम् ।

रुक्मिणी—[८१] प्राणनाथ ! यथाज्ञा प्राणनाथस्य तथा करिष्यामः ।

श्रीकृष्णः—[८२] देव्यः ! विलोकयत भक्तवत्सलस्य भगवतो दयालुताम् ।

---

धिराज' इति 'विश्वाधिको रुद्रो महर्षिः' इति श्वेताश्वतरवचसैककण्ठ्यावेदकम् । 'देवतासार्वभौम' मिति तु महादेवपदनिर्वचनलभ्यमर्थमन्वाह । तद्धेतुत्वेनैव 'यं नत्वा देवतात्वावाप्ति' रिति कथनम् । बहुशोऽयमर्थ आभण्यते पुराविद्भिस्तद्यथा—

देवं वन्दे जलधिशरधिं देवतासार्वभौमं ।
व्यासप्रष्ठा भुवनविदिता यस्य वाहाधिवाहाः ॥
भूषापेटी भवनमधरं पुष्करं पुष्पवाटी ।
शाटीपालाः शतमखमुखाश्चन्दनद्रुर्मनोभूः ॥

(७९) भक्त्युद्रेकवशात् पुनः स्वस्यापि शिवकृपालब्धवैभवत्वं वर्णयति । 'विद्या हृद्या' इत्यादिना । अस्मिन् पद्ये 'विद्या हृद्या' इत्यनेन धर्मज्ञानसिद्धिं 'दिशि दिशि जयः कीर्तिर्लक्ष्मीलाभोऽतुलवित्तागम' इत्यनेनार्थसिद्धिं 'मां सेवन्ते कुवलयदृशां सहस्राणि' इत्यनेन तृतीयपुरुषार्थपर्याप्तिं च निर्दिश्य स्वस्य त्रिवर्गफलसिद्धिं शिवकृपामूलां व्याजहार भगवान् । पद्ये चात्र धर्मार्थकामानां क्रमेण निरूपणात् क्रमिकालङ्कारः । अनवसरत्वाच्चतुर्थपुरुषार्थस्य न न्यूनताशङ्कनम् ! त्रिवर्गस्यानपेक्षव्यूहत्वाच्च । व्रतकरणानुज्ञां निगमयति (८०) 'कथं तस्ये' त्यादि 'व्रत' मित्यन्तेन ।

(८१) रुक्मिण्या 'यथाज्ञा प्राणनाथस्य तथा करिष्याम' इत्युक्त्वा शिवरात्रिव्रतकरणाय निश्चयः प्रकटीकृतस्ततः सर्वासां व्रते श्रद्धातिशयोत्पादनार्थं शिवमहिमानमेव प्रस्तौति श्रीकृष्णः । (८२) देव्य इति । भक्तवत्सलता

[८३]विश्वेश्वरोऽपि कनकाद्रिकृतालयोऽपि ।
रत्नासने सुरवरैः परिपूजितोऽपि ॥
भक्तार्पितानि जलविल्वदलानि हर्षा-
दङ्गीकरोति परितुष्यति चाऽऽशुतोषः ॥ ४५ ॥

सत्यभामा—[८४]यथार्थमाह प्राणनाथः, काप्यलौकिक्येव भक्तवत्सलता भगवतश्चन्द्रमौलेः ।

श्रीकृष्णः—किञ्च

शिवप्रदस्त्वत्र शिवः शिवायां [८५] ।
रात्रौ पृथिव्यां निखिलस्थलेषु ॥
स्वकीयलिङ्गेषु हि सन्निधत्ते ।
भक्तिप्रियो भक्तहितानि कर्त्तुम् ॥ ४६ ॥

नारदः—( सहर्षम् )

[८६] श्रीकृष्णचन्द्र यदुवंशमणेऽसि धन्यः
श्रीशैलजारमणभक्तगणेषु मुख्यः ॥
येनाऽत्र नः सुवचनैः शिवभक्तिभाजा-
मुद्बोधिता मनसि काऽपि नवेव [८७] भक्तिः ॥ ४७ ॥

---

दयालुता चेति गुणद्वयं भजनीयस्य भक्तभक्तिप्ररोचनायाऽलमिति तदेव गुणद्वय-मनन्यसाधारणं शिवे निरूपयति । ( ८३ ) विश्वेश्वर इति । विश्वेषामीश्वरस्य कनकाद्रिकृतालयस्य रत्नासने सुरवरैः परिपूजितस्य भक्तार्पितजलबिल्वपत्रादि न कमप्युपयोगमावहति तथापि तादृशस्वल्पपदार्थानां सहर्षमङ्गीकारः परितो-षश्च भक्तवात्सल्यप्रयुक्त एवेति ' आशुतोष ' इत्यभिधानौचित्येन ध्वन्यते ।

( ८४ ) सत्यभामाऽपि भगवतो भक्तवत्सलताया ' अलौकिकी ' ति निर्देशेन लोकोत्तरतामभिदधाना श्रीकृष्णोक्तिमुपबृंहयति ।

( ८५ ) शिवरात्रौ शिवलिङ्गार्चनं फलातिशयजनकमित्याह श्रीकृष्णः । शिवप्रद इति । अत्र शिवलिङ्गेषु सर्वदा सन्निहितस्यापि ' शिवायां रात्रौ स्वकीयलिङ्गेषु सन्निधत्ते ' इति कथनेन भक्तहितकरणाय शिवरात्रिनिमित्तं सन्निधानवैशिष्ट्यं सूच्यते ।

( ८६ ) सपत्नीकस्य श्रीकृष्णस्य भवभक्तिप्रवणत्वदर्शनेन सन्तोषप्रक-टनपूर्वकमाशिषमुच्चारयति नारदः—तस्मादिति ।

( ८७ ) सर्वदा शिवभक्तिभाजामपि नो मनसि भवतां सुवचनैः कापि

तस्मात् स एव भगवान् स्वकृपावलोकैः
पूर्णाभिलाषनिकराय निजाश्रिताय ॥
सत्पुत्ररत्ननिकरान् सुगुणोज्ज्वलाँस्ते
दद्यादिहोत्तमतमानिति मे शुभाशीः ॥ ४७ ॥

श्रीकृष्णः—
राज्यश्च:— } [८८]( सप्रणामम् ) भगवन् ! सफलाऽस्तु वः शुभाशीः

नारदः—( स्वगतम् ) [८९]इदानीं पुनः स्वकलां प्रकाशयामि । ( प्रकाशम् ) देव ! प्रथमं मया सह वार्त्तालापप्रसङ्गेन स्वधर्मपत्नीनां प्रश्नोत्तरे विलम्बः कृतः । इदानीं पुनरेताभिः सह वार्ताप्रसङ्गेन मत्प्रश्नोत्तरापह्नवः कर्त्तुमारब्धो भगवतेति प्रतिभाति । न परमह तद् विस्म-

---

नवेव भक्तिरुद्बोधितेति भक्तेः सदातनाया अपि नवत्वसम्भावनं भगवद्वचनेषु कमपि चमत्कारमावहति । तादृशचमत्कारजन्यतोषोद्गार आशीरूपेण परीवहति। यस्मात् त्वं शिवभक्ताग्रणीरसि तस्मात्तत्कृपावलोकैः पूर्णाभिलाषाय भवते सुगुणोज्ज्वलान् सत्पुत्ररत्ननिकरान् दद्यादिति सम्बन्धः। नहि सुतलाभमात्रेण कार्त्तार्थ्यमपि तु सुतानां सद्गुणवत्ताऽवश्यमपेक्ष्यते । यदाह भर्तृहरिः ‘ सुताश्च सुधियः ’ क्षेमेन्द्रोऽपि ‘ सूनुः सच्चरितः ’ इत्यादिना । अप्पय्यदीक्षिता अपि ‘ सुताश्च विनयोज्ज्वलाः ’ इति स्वावसाने जोषं व्याजह्रुः । अतश्चात्राशीर्वचने ‘ सुगुणोज्ज्वलान् ’ इति विशेषणोक्तिर्नारदस्य युक्तैव ।

अत्र प्रतिमुखं नाम सन्धिरुपन्यस्तः। यदाह काव्यानुशासने हेमचन्द्रः।—

बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित् ।
मुखन्यस्तस्य सर्वस्य तद्वै प्रतिमुखं स्मृतम् ।

यथा रत्नावल्यां ‘ परप्रेषणकर्षितमपि शरीरमेतस्य दर्शनेनाद्य मे बहुमतं सम्पन्नम् ’ इति सागरिकावचनानन्तरं सुसङ्गतारचितराजतत्समागमपर्यन्तं द्वितीयाङ्कगतं प्रतिमुखम्। पूर्वोक्त ‘द्वीपादन्यस्मा’ दित्यादेर्बीजस्य उद्घाटनात्। एवमत्रापि सत्पुत्रप्राप्तिलक्षणाभ्युदयरूपबीजस्य नारदवचसैवोद्घाटनात् प्रतिमुखत्वावगमः ।

( ८८ ) राज्ञीसंवलितस्यैव श्रीकृष्णस्य प्रकृताशीर्ग्रहणेऽधिकारात्ताभिः सहैव प्रतिगृह्णाति ।

( ८९ ) इदानीं प्रपञ्चनावसरं मत्वा पूर्वोक्तमनुसन्धत्ते । यथा राज्ञीकृतप्रश्नोत्तरं मया सह वार्त्तालापेन विलम्बितं, मम प्रश्नस्य तु ताभिः सह

रिष्यामि ततः 'प्रकृतमनुसरामः पायसं भक्षयाम इतिः' लोकोक्ति मनसिकृत्य पृच्छामि त्वाम्। यद्देवेनोक्तं 'यत्र प्रेमवैषम्यं तत्र कलहः स्यान्न स्वप्नेऽपि मे प्रेमवैषम्य' मिति; तदा मयाऽर्पितं पारिजात-पुष्पं कथं रुक्मिण्यै समर्पितं न सत्यभामायै न वा जाम्बवत्यै ?

**श्रीकृष्णः**—( सहासं स्वगतम् ) १०कलहप्रियेण भगवता पुनः प्रकाशिता स्वकीयाभिधानस्य सार्थकता। ( प्रकाशम् ) भगवन् ! भवदर्पि-तैकपारिजातपुष्पप्रतिनिधितया पारिजाततरुरपि सत्यभामामन्दि-राङ्गणे रोपितः साम्प्रतं तु सर्वासां भवनोपवनेषु पल्लविताः पुष्पिताः फलिताश्च पारिजाततरुततयो विलसन्तीति प्रतिमन्दिरं गत्वा विलोकनीयम्।

**नारदः**—( सहासम् ) देव ११ ! सोऽयं सत्यभामायाः प्रकोपप्रभावो, न भगवतः प्रेमसाम्यप्रभावः।

**श्रीकृष्णः**—१२देवर्षे ! यदि न मद्वचासि विश्वासस्तर्हि त्वत्समक्षमेव सर्वाः पृच्छामः।

---

वार्त्तालापेनोत्तरमपन्हूयते, तदिदं नाहं सहिष्ये इत्यभिप्रायेण प्रकृतानुसरणं स्मारयन् श्रीकृष्णोक्तं स्वप्रियासु प्रेमवैषम्याभावं प्रमाणोपन्यासेन खण्डयितुमाह 'पारिजातपुष्पं पूर्वं मयाऽर्पितं भवता रुक्मिण्यै दत्तं; सत्यभामायै जाम्बवत्यैवा किमिति न दत्तम् ?'। एवं जाग्रति वैषम्ये कथं नाम वक्तुमर्हः 'न मे क्वापि प्रेमवैषम्य' मिति भगवन्तं पर्यनुयुङ्क्ते।

( १० ) शृण्वन्तीनां राज्ञीनां प्राग्वृत्तस्मारणेन स्वस्थस्याऽपि चेतसो भवति कम्प इति कलहाशङ्कि भवति श्रीकृष्णहृदयम्। तथापि दक्षनायकस्य स्वस्मिन् समाधानसामर्थ्यप्रत्ययेन भवत्येव हासः इति सहासमेव स्वगतं चिन्त-यति। कलहप्रियेणेति। सत्यभामामेव प्रथममनुनेतुकामस्तन्नामैव निर्दिशन् तदङ्गणे पारिजाततत्तयः सन्तीति वैषम्यापमार्जनं निगमयति भगवान्।

( ११ ) मुनिरपि सहासमेव चिरप्रसुप्तकोपोद्बोधनमभिकाङ्क्षमाण इव भगवदुक्तिं प्रतीपयति। 'सोऽयं सत्यभामायाः कोपप्रभावो' न भवता आत्मनः सर्वासु प्रेमसाम्यसाधकत्वेनोपयोक्तव्यः। ( १२ ) श्रीकृष्णस्तु तदुक्त-मनाकर्णितकेनेव परास्यन् स्वप्रेमसाम्यमेव साधीयः कर्त्तुं स्ववचसि मुनेरवि-श्वासं 'यदि' पदेन स्वयमेवारोप्य 'त्वत्समक्षं सर्वाः पृच्छामः' इति तत्परि-हारायोपक्रमते।

नारद—[१३] उत्तमोत्तमोऽयं प्रकारः ।

श्रीकृष्णः—[१४]अयि रुक्मिणीप्रमुखाः पट्टराज्ञ्यो मे ! अखण्डसौभाग्यवतीषु भवतीषु सर्वासु मे प्रेमसाम्यं वर्त्तते न वर्त्तते वेति सत्यं वक्तव्यम् ।

रुक्मिणी—[१५]परमं प्रेमसाम्यं सर्वास्वस्मासु जागर्त्ति प्राणनाथस्य यतः।

रम्या हर्म्यावलिर्नः कनकमणिमयी भाति रत्नप्रदीपा ।
स्त्रीरत्नैः सङ्कुला सा सुरपतिवनितादुर्लभा वैभवाश्च ॥
सर्वासां सन्ति तुल्या हरिकरिशिविका गोमहिष्यश्च कोशाः ।
प्राणेश ? प्रेमसाम्यं जयति तव किमप्यद्भुतं वागगम्यम् ॥ ४९ ॥

सर्वाः—[१६]प्राणनाथ ! देव्या रुक्मिण्याः सूक्तिमुक्तावलीमक्षरशोऽनुसरामो; नास्माकं मध्ये कस्या अपि काऽपि न्यूनता ।

प्रेमवैषम्यशङ्कापि न लब्धप्रसरा त्वयि
पूर्णोदये हि पूर्णेन्दौ क्व तमःसम्भवो भवेत् ॥ ५० ॥

श्रीकृष्णः—( सहर्षम् ) देवर्षे ! [१७] श्रुतमेतासां वचनम् ? ।
निर्गतः संशयः ? ।

---

( १३ ) नारदोऽपि—सत्यभामाप्रभृतयोऽवश्यं श्रीकृष्णस्य पुरत एव तदीयं प्रेमवैषम्यं प्रकटं करिष्यन्तीति मत्वा श्रीकृष्णोक्तमनुमोदमान आह ! ' उत्तमोत्तमोऽयं प्रकार ' इति । प्रायः प्रवक्तुरभीष्टविषयसिध्ध्याभिमुख्येनावगते प्रमाणोपन्यासे ईदृगेव भवत्यक्षरोद्गारः । यथा शाकुन्तले ' अभिज्ञानं ते दर्शयिष्यामीति ' शकुन्तलावचनानन्तरं दुष्यन्तस्य ' उदारः कल्प' इति वचनम् ।

( १४ ) श्रीकृष्णः स्वसन्निधावसङ्कोचेन वक्तुं सर्वा अनुजानीते 'अयि रुक्मिणीप्रमुखा ' इत्यादिना ' सत्यं वक्तव्य ' मित्यन्तेन ।

( १५ ) रुक्मिणी ' परमं प्रेमसाम्य ' मिति साटोपमुक्त्वा स्वोक्त समर्थनाय ' रम्या हर्म्यावलि ' रित्यादि कार्यलिङ्गकानुमानमुपन्यस्यति । एतादृशकार्यलिङ्गानुमितस्यापि प्रेमसाम्यस्य केवलं स्वहृदयसंवेद्यत्वमेवेति बोधयितुं ' किमपि अद्भुतं वागगम्यम् ' इति विशेषणदानम् ।

( १६ ) अत्र सर्वासामनुमोदनं रुक्मिण्याः सूक्तिमुचितामेव समर्थयति । प्रेमवैषम्यशङ्कापीति । प्रतिवस्तूपमालङ्कारः ॥

( १७ ) स्वोक्तवस्तुसिद्धिमाकर्णयतः श्रीकृष्णस्य युक्तमेव सहर्षत्वम् । देवर्षे ! इति सोल्लुण्ठमिव सम्बोधनम् ।

नारदः—(परितोऽवलोक्य) देव ! [९८] श्रुतानि सर्वासां वचनानि, न श्रुतमेकस्याः सत्यभामाया वचनम् ।

श्रीकृष्णः—सत्यभामे ! [९९] त्वमपि त्वदीयमभिप्रायं देवर्षेः श्रवणातिथितामुपनय ।

सत्यभामा—[१००]प्राणनाथ ! नाहमेता इव मिथ्यामधुरवचनकुशला; ततः किं मद्वचनश्रवणेन ।

नारदः—[१०१]( सहर्षस्मितम् ) वत्से ! प्राणप्रियस्यास्य ते सर्वासु प्रियासु प्रेमसाम्यसंरक्षणगर्वपर्वतं खर्वीकर्त्तुं सम्यगुक्तं भवत्या । [१०२]माधुर्यविधुरमपि सत्यमेव वक्तव्यं सत्कुलसम्भवया भामिन्या ।

श्रीकृष्णः—( सस्मितम् ) प्रिये ! [१०३] यथानुभूतं भूतार्थमेव निर्माधुर्यं निवेदय । न्यूनतानिवारणाय प्रेमवैषम्यपरित्यागाय च देवर्षेर्मम चाऽयं प्रयासः ।

---

( ९८ ) 'सम्प्रति संशयो निवृत्तः ?' इत्याशयेन पृच्छन् यावत् हृष्यति तावदेव नारदः परितो विलोक्य सत्यभामाभिमुख एव 'एकस्याः सत्यभामाया वचनं न श्रुतमित्याह । अत्र नारदस्य 'अन्यास्तावद्वदन्तु वैदग्ध्यात्, सत्यभामा तु निश्चितं श्रीकृष्णस्य दाक्ष्यभङ्गमगणयित्वैव विनयमिचुलितमपि सत्यं वक्ष्यत्येवेत्यभिसन्धिः ।

( ९९ ) श्रीकृष्णः पुनरात्मप्रत्ययावलम्बी तामनुजानीते 'त्वमपि त्वदीयमभिप्रायं देवर्षेः श्रवणातिथितामुपनय' श्रावयेत्यर्थः । पर्यायोक्तमलङ्कारः । पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् । इति लक्षणात् ।

( १०० ) यदा सत्यभामया 'नाहमेता इव मिथ्यामधुरवादिनी' अतो वरमश्रवणमेव मद्वचनस्येत्याशयवदाह तदा नारदः स्वेष्टसिद्धिमुपस्थितामिव मन्वानो 'वत्से' ( १०१ ) इत्यादिना श्रीकृष्णस्य 'सर्वासु प्रेमसाम्यमेव मे वर्त्तत' इत्याकारकगर्वलक्षणं अखर्वं=उच्छ्रितं पर्वतं खर्वं=ह्रस्वं=कुरु; प्रेमवैषम्यप्रदर्शनेन तदीयं स्मयं परिहरेति सत्यभामां प्रोत्साहयति । ( १०२ ) तत्र च 'सत्कुलसम्भवया भवादृश्या माधुर्यविधुरमपि सत्यं वक्तव्यमेव' इत्यनेन असङ्कोचं ब्रूहि इति सूचितम् । यदि दाक्ष्येण सङ्कुचसि तर्हि सत्कुलोत्पन्नत्वं संशयदोलामारोक्ष्यतीति भीतिप्रदर्शनमुपोद्बलनाय । 'भामिन्या' इति च प्रसङ्गोचितमेवाभिहितं मुनिना ।

( १०३ ) श्रीकृष्णस्तु नारदोत्तेजितायाः स्वभावकोपनायाः सत्यभामा-

सत्यभामा—[१०४]यद्येवमेवाग्रहस्तर्हि श्रूयताम् ।

न दत्ता या मात्रा न मुनिवर पित्रा न सहजैः
स्वयं गुप्तं दूतं द्विजवरमुपप्रेष्य कमपि ॥
लिखित्वा सङ्केतान् स्वयमवृत या स्वेष्टदयितम्
समा सेयं भैष्मी वयमपि च सर्वा यदुपतेः ॥ ५१ ॥

किंच—मुने ! राधा राधावरहृदयबाधाप्रशमनी
वृता या कन्यात्वेऽप्यखिलमवधीर्यार्यचरितम् ॥
अनेनास्मद्भर्त्रा यदुकुलमणेरस्य तु सदा
समाना सा गोपी वयमपि च राजन्यतनयाः ॥ ५२ ॥

---

या मुखात्परुषाक्षराण्याशङ्कमानः सस्मितमपि सभयमाह 'प्रिये ! भूतार्थं निवेदये' त्यादि । तत्रापि स्वाभीप्सितमर्थयते 'न्यूनतानिवारणाय प्रेमवैषम्यपरित्यागाय' प्रयासोऽयमावयोरतस्तदनुगतं निवेदयेति श्रीकृष्णस्य प्रेरणाक्षराणामाशयः ॥

(१०४) इदानीं सत्यभामा व्याजोक्तिगर्भैस्त्रिभिः पद्यैः श्रीकृष्णस्य प्रेमसाम्यमेव वर्णयन्ती प्रथमं रुक्मिणीमेवोद्दिश्य वदति । न दत्तेति । कियता क्लेशेन स्वप्राप्तिः सम्पन्ना इति तु स्वयं वक्तुमसाम्प्रतमतो रुक्मिणीप्राप्तिक्लेशमेव प्रपञ्च्य तादृशश्रमलब्धाया अपि भैम्या यदि प्राकृताभिरितराभिः साम्यभावनं तर्हि विवेकापास्तं तादृशभावनं किं प्रेमसाम्यसाधकं भवति ?

अस्मिन् पद्ये 'स्वयमवृत या स्वेष्टदयित' मिति कथनेन यत्र रुक्मिण्या मातापितरौ सहजादींश्चावधीर्य दूतमुखेन स्वाशयमावेद्य सङ्केतं च ग्राहयित्वाऽऽत्मैव हारितः, इष्टदयितत्वेन च स्वयं वृतस्सापि समानाऽन्याभिरिति विवेकवैधुर्यं व्यञ्जितम् ।

(१०५) किञ्च—या राधा अखिलमार्यचरितमगणयित्वा कन्यात्वे वृता । श्रीकृष्णेन स्वयमेवेति शेषः । यदुकुलमणेरिति विशुद्धक्षात्रकुलसम्भवेन स्वयमेव बुद्धिपूर्वकमाभीरकन्यावरणं हि कियदपकर्षजनकमिति भवतैवावधार्यमित्याशयेन सम्बोधयति मुने ! इति । राधायाश्च 'राधावरस्य—कृष्णस्यैव हृदयबाधाप्रशमनी' इति विशेषणेन व्याख्यात एव सौभाग्यातिशयः । 'अनेन अस्मद्भर्त्रा' इति च पुरोऽवस्थितं कृष्णं निर्दिशन्त्या 'समाना सा गोपी वयमपि च राजन्यतनयाः' इति निगमनोक्तौ द्यावापृथिव्योरिवान्तरबोधनेन प्रेमसाम्यकथैव दूरापास्तेति ध्वनितम् ।

अपिच—मुने ! [१०६]कालीं कुब्जां वपुषि हृदये चापि कुटिलां
भुजिष्यां कंसस्याप्यनुदिनमनन्येन मनसा ॥
समानामस्माभिः सह गणयतः श्रीयदुपतेः
क्व दृष्टं वैषम्यं हृदयदयितस्याऽत्र वद नः ॥ ५३ ॥
( इत्युक्त्वा तूष्णीं तिष्ठति )

नारदः—( सहासम् ) श्रीकृष्णचन्द्र ! श्रुतानि सत्यभामाया वचनानि ।
ईदृशी समदृष्टिस्तु विषमदृष्टितोऽपि विषमा ।

श्रीकृष्णः—[१०८]मुने ! सापत्न्यरोषाद्वा विनोदोक्तिरियं, न मे ॥
सर्वासु समदृष्टित्वं निवारयति निर्मलम् ॥ ५४ ॥

जाम्बवती—[१०९]( स्वगतम् ) सत्यभामया निसर्गरोषणया विषममुक्तं तथापि विषमस्य समीकरणं सुहृदां धर्मस्तत्प्रयते तदीयहिताय

---

( १०६ ) इदानीं श्रीकृष्णस्य साहसातिरेकमिव वक्तुकामा प्रथममेवाभिमुख्यकरणाय सम्बोधयति मुने इति । कालीं, कुब्जां वपुषि हृदये च कुटिलां, कंसस्य भुजिष्यां=दासीं,= । चतुर्भिरेतैर्विशेषणैः सर्वथा परिहरणीयतैव समर्थिता । तादृशीमपि तामस्माभिः सह समानां गणयतोऽस्माकं हृदयदयितस्य; एवमनेकवचनीयाचारयुक्तोऽप्यस्माकं हृदयदयित इत्युक्त्या स्वीयं प्रेमार्द्रहृदयत्वमाख्यापितम् । तादृशस्य यदुपतेः क्व दृष्टं वैषम्यं ? अत्र त्वमेव वद । एवंविधव्यतिकरेण स्वरूपव्याक्रिययैव पराक्रियमाणं प्रेमसाम्यं भवता सम्यगवबुद्धमिति प्रभवति भवानेव स्पष्टमत्र वक्तुमिति ध्वनिः ।

( १०७ ) एतावदुक्त्वा तूष्णीभूतायां सत्यभामायां स्वेष्टसिद्धिमदूरभाविनीं जानन् नारदः सहासमाह—'ईदृशी समदृष्टिस्तु विषमदृष्टितोऽपि विषमा' वरमेवंविधसमदृष्टेर्विषमा दृष्टिः । इयं समदृष्टिस्तु महतीमनर्थपरम्परामन्तर्भावयतीत्यर्थः ।

( १०८ ) एवं जातवैदग्ध्यभङ्गस्यापि भगवतो दक्षनायकत्वेन प्रागल्भ्यगर्भैव वाक्प्रवृत्तिर्भवति ' मुने ! इयं तु सापत्न्यरोषप्रयुक्ता विनोदोक्तिरिति नैनया मम निर्मलं प्रेमसाम्यं निवारयितुं क्षममिति ।

( १०९ ) जाम्बवती सत्यभामाया रोषाविष्टां वचःसरणिं श्रुत्वा स्वानभिलषितार्थान्तरापातभीरुस्तदुक्तेरन्यथाशयं वर्णयितुं यतते । ' तदीयहिताय—तस्याः सत्यभामाया हिताय=अन्यासामपि हिताय ' इति प्रयोजनमपि निर्दि-

सर्वासां हिताय च । ( प्रकाशम् ) अयि प्राणनाथ ! अयि मुनिवर्य ! मम प्रियस्वस्रा यदुक्तं न तद्वक्रोक्त्या प्राणप्रियस्य नः स्वपत्नीषु विषमदृष्टित्वप्रतिपादकं किं तु किमप्यन्यदेव तस्या हार्दं विद्यते, यतो नीरनिधिगम्भीरहृदया सा न निष्प्रयोजनं किमपि वदेत् ।

नारदः—[११०]वत्से ! तर्हि तदीयं हार्दं त्वयैव निवेद्यताम् ।

जाम्बवती—मुनिराज सा खलु समदृष्टिमन्यादृशीमेव मन्यते ।

श्रीकृष्णः—[१११]जाम्बवति ! कीदृशीं सा समदृष्टिं मन्यते तत्त्वमेव तदीयहार्दज्ञा ब्रूहि ।

जाम्बवती—[११२]प्राणनाथ ! वैभवसाम्ये सम्पत्साम्ये प्रेमसाम्ये च श्रीरुक्मिण्यादिभिः सहैकमत्यमेव मे प्रियस्वसुः ।

श्रीकृष्णः—[११३]प्रिये ! कुत्र तर्हि ताभिः सह मतभेदस्ते भामायास्तदपि निवेद्यताम् ।

जाम्बवती—यद्येवमेव[११४] प्राणनाथस्याग्रहस्तर्हि निवेदयामि । श्रूयताम् ।

---

ष्टमेव स्वगते । प्रकाशं तु—नैतद् भगवतः स्वपत्नीषु प्रेमवैषम्यप्रतिपादनाय सत्यभामाया वचनं, वक्रोक्तिकल्पस्यापि वचस एतस्य किमप्यन्यदेव हार्दम् । अत्र हेतुमाह । नीरनिधिगम्भीरहृदया न निष्प्रयोजनं किमपि वदेत् ।

( ११० ) नारदेन—' तर्हि तदीयं हार्दं त्वमेव निवेदय ' इति पर्यनुयुक्ता जाम्बवती किञ्चिद्वक्तुकामा प्रथममुपोद्घातं रचयति । सा समदृष्टिमन्यादृशीमेव मन्यत इति ।

(१११) श्रीकृष्णस्तु किञ्चिच्छलथधैर्य इव 'कीदृशीं सा समदृष्टिं मन्यते? तत्त्वमेव ब्रूहि, यतस्त्वं तदीयहार्दज्ञासि इति जाम्बवतीमुखादाशयाकलनायोत्ताम्यति । ( ११२ ) जाम्बवती तु भगवन्मनसि सद्यस्तोषमादधाना वैषम्यप्रयोजकवस्तूनि गणयन्ती तेषु च वैषम्यं प्रतिषेधन्ती अपि कञ्चिद्वैषम्यांशं शेषत्वेन बोधयतिस्म । वैभवसाम्ये सम्पत्साम्ये प्रेमसाम्ये च श्रीरुक्मिणीवचनमनुमतमेवेति । ( ११३ ) कुत्र—तर्हि मतभेदः ? ' इति श्रीकृष्णेन पर्यनुयुक्ता पुनराह । ( ११४ ) यद्येवमेवाग्रह इति । यद्यपि नैतदात्मेच्छया याचनं किन्तु प्रासङ्गिकतया भवत्प्रेरितया मया वक्तव्यमेवेत्याशयेनोच्यते । एतेन अभ्यर्थनाभ-

११५नो हर्म्यैर्धनधान्यगोश्वमहिषीहस्त्यादिभिर्नोत्तमै-
र्नो रत्नाभरणैः समैस्तव दयादृष्टिं तु मन्ये समाम् ॥
सर्वासामपि नः समा यदि भवेत् सत्पुत्ररत्नावलि-
र्नाथ! त्वत्कृपया तदा तव दयादृष्टिं तु मन्ये समाम् ॥ ५२ ॥
इति तस्या आशयः । तत्र तु देवी रुक्मिण्यहं सर्वा-
श्चेमा मे स्वसारः सत्यभामया सहैकमत्यवत्य एव ।

नारदः—११६( स्वगतम् ) अहो सत्यभामाया युक्तियुक्तमुक्तिचातुर्यं जाम्बवत्या विशदीकृतम् ।

रुक्मिणी—११७( स्वगतम् ) सत्यभामया वैमत्यप्रदर्शनेनाऽपि सर्वासामपि कल्याणमभियाचितम् । धन्या खलु सर्वहितैषिणी सत्यभामा जाम्बवती च ।

श्रीकृष्णः—११८( स्वगतम् ) सत्यभामया जाम्बवत्या च देवैरप्यप्रतिविधेया न्यूनता प्रदर्शिता । एतस्या न्यूनताया निवारणं तु

---

ञ्लाघवमपि परिहृतम् । तदेव विवक्षितं 'निवेदयामि श्रूयता' मित्युक्त्वा प्रस्तौति । ( ११५ ) नो हर्म्यैरिति । हर्म्यैर्भवनैः, गवाश्वादिभिः पशुभी रत्नाभरणैश्च: समैः दयादृष्टिं समां न मन्ये । एतत्सकलं बाह्योपचारजातं न सर्वत्र साम्यसाधकप्रमाणमूर्द्धन्यम् । किन्तु 'हे नाथ!' इति सम्बोधनं भगवत आभिमुख्यापादनाय । सत्पुत्ररत्नावलिर्यदि सर्वासां नः समा भवेत् तदात्वहं तव दयादृष्टिं समां मन्ये; नाऽन्यथेति भावः । तदेतद्भगवत्कृपायत्तमित्यनुसन्दधानाऽऽह । 'त्वत्कृपया' इति । एवं सत्यभामावचसामन्यैरतर्कितमाशयं प्रकटय्य तस्मिँश्चार्थे सर्वासामैकमत्यं निगदति 'तत्र चे' ति ।

( ११६ ) एवं कल्पनापोढमाशयवर्णनं श्रुत्वा नारदः स्वगते सविस्मयमाह 'अहो' इति । 'युक्तियुक्तमुक्तिचातुर्य' मित्यनुप्रासोऽत्र शब्दालङ्कारः । मनसि जाम्बवतीं बहु मनुते, एतादृशहार्दविशदीकरणपाटवानुभवेन ।

( ११७ ) रुक्मिणी तु प्रथममेव श्रीकृष्णस्य सर्वत्र समदृष्टित्वमुपन्यस्य तत्साधकत्वेन हर्म्यादिसाम्यमागृणातिस्म; इदानीं पुनर्जाम्बवतीकथितं सत्यभामावचनाशयं श्रुत्वा विस्मिता हृष्टा तुष्टा च सत्यभामां जाम्बवतीं च 'धन्या सर्वहितैषिणी' इति पदाभ्यां स्वगते वर्द्धापयते । तदीयं वाग्वैचित्र्यं च प्रशंसति 'वैमत्यप्रदर्शनमुखेन सर्वासां कल्याणमभियाचितमिति । ( ११८ ) श्रीकृष्णोऽपि स्वगतमेवोहापोहान् रचयति । जाम्बवत्या सत्यभामाशयं प्रकट-

दुष्करतरम् । (क्षणं नेत्रे निमील्य सप्रत्याशम् ) अथवा किं नाम मे दुष्करम् ।

११९यस्यैवार्चनतो मया प्रियतमा प्राप्ता रमाऽनुत्तमा ।
यस्यैवार्चनतस्तयापि रमया प्राप्तः प्रियोहं निजः ॥

---

यन्त्या या न्यूनता प्रदर्शिता सा देवैरपि दुर्निवारा । किङ्कर्त्तव्यतास्तब्ध इव क्षणं नेत्रे निमील्य । चित्तप्रणिधाने हि स्फुरन्ति सङ्कटप्रतिकाराः इत्यतश्चित्तैकाग्र्याय नेत्रनिमीलनम् । मनसि वाञ्छितोपायस्फुरणेन प्रत्याशासंवलितमाह । अथवा किन्नाम मे दुष्करं ? न किमपीत्यर्थः । शिवप्रसादासादने सप्रत्ययस्य हृदि एवमेव निपतेन्निश्चयः । तदेवात्मप्रत्ययदार्ढ्यं श्लोकाभ्यां द्वाभ्यां प्रणिगदति । (११९) यस्यैवार्चनतः श्रियाऽहं पतिराप्तः श्रीश्च मया पत्नी प्राप्ता । उभाभ्यां कृतस्य शिवाराधनस्य मिथः फलमेतत् । देवीभागवते—षष्ठस्कन्धे १८ अध्याये १८ श्लोकादारभ्य लक्ष्मीकृतशिवाराधनं प्रकृत्य निरूपितम् ।

ततस्तुष्टो महादेवो वृषारूढस्त्रिलोचनः ।
प्रत्यक्षोऽभून् महेशानः पार्वतीसहितः प्रभुः ॥ १८ ॥
तत्रैत्य सगणः शम्भुस्तामाह हरिवल्लभाम् ।
तपस्यन्तीं महाभागामश्विनीरूपधारिणीम् ॥ १९ ॥
किं तपस्यसि कल्याणि जगन्मातर्वदस्व मे ।
सर्वार्थदः पतिस्तेऽपि सर्वलोकविधायकः ॥ २० ॥
हरिं त्यक्त्वाद्य मां कस्मात् स्तौषि देवि ! जगत्पतिम् ॥ २१ ॥
वेदोक्तं वचनं कार्यं नारीणां देवता पतिः ।
नान्यस्मिन् सर्वथा भावः कर्त्तव्यः कर्हिचित् क्वचित् ॥ २२ ॥
पतिशुश्रूषणं स्त्रीणां धर्म एष सनातनः ।
यादृशस्तादृशः सेव्यः सर्वथा शुभकाम्यया ॥ २३ ॥
नारायणस्तु सर्वेषां सेव्यो योग्यः सदैव हि ।
तं त्यक्त्वा देवदेवेशं किं मां ध्यायसि सिन्धुजे ॥ २४ ॥

लक्ष्मीरुवाच ।

आशुतोष महेशान पत्या शप्तास्म्यहं शिव ।
मां समुद्धर देवेश शापादस्माद् दयानिधे ! ॥ २५ ॥
इत्यादिशापोपशमनानन्तरं पुनः शिवेनोपच्छन्दिता लक्ष्मीराह
वरं मे देहि देवेश ! यदि तुष्टोसि शङ्कर !

तव तस्य द्विधाभावो नास्ति नूनं कदाचन ॥ ३० ॥
मयैतद् गिरिजाकान्त ! ज्ञातं पत्युः पुरः पुरा ।
यस्त्वं सोऽसौ पुनर्योऽसौ स त्वं नास्त्यत्र संशयः ॥ ३१ ॥
एकत्वं च मया ज्ञात्वा स्मरणं ते मया कृतम् ।
अन्यथा मम दोषस्त्वा–माश्रयन्त्या भवेच्छिव ! ॥ ३२ ॥

शिव उवाच ।

कथं ज्ञातस्त्वया देवि मम तस्य च सुन्दरि ! ।
ऐक्यभावो हरेर्नूनं सत्यं मे वद सिन्धुजे ! ॥ ३३ ॥
एकत्वं च न जानन्ति देवाश्च मुनयस्तथा ।
ज्ञानिनो वेदतत्त्वज्ञाः कुतर्कोपहताः किल ॥ ३४ ॥
मद्भक्ता वासुदेवस्य निन्दका बह्वस्तथा ।
विष्णुभक्ताश्च बह्वो मम निन्दापरायणाः ॥ ३५ ॥
भवन्ति कालभेदेन कलौ देवि विशेषतः ।
कथं ज्ञातस्त्वया भद्रे दुर्ज्ञेयो ह्यकृतात्मभिः ॥ ३६ ॥
सर्वथा त्वैक्यभावो हि हरेर्मम च दुर्लभः ।

व्यास उवाच ।

इति सा शम्भुना पृष्टा तुष्टेन हरिवल्लभा ॥ ३७ ॥
वृत्तान्तं तस्य विज्ञातं प्रवक्तुमुपचक्रमे ॥
शिवं प्रति रमा तत्र प्रसन्नवदनाम्बुजा ॥ ३८ ॥

लक्ष्मीरुवाच ।

एकदा देवदेवेश विष्णुर्ध्यानपरायणः ।
दृष्टो मया तपः कुर्वन् पद्मासनगतो यदा ॥ ३९ ॥
तदाहं विस्मिता देवं तमपृच्छं पतिं किल ।
प्रबुद्धं सुप्रसन्नं च ज्ञात्वा विनयपूर्वकम् ॥ ४० ॥
देवदेव जगन्नाथ यदाहं निर्गताऽर्णवात् ।
मथ्यमानात् सुरैर्दैत्यैः सर्वैर्ब्रह्मादिभिः प्रभो ! ॥ ४१ ॥
वीक्षिताश्च मया सर्वे पतिकामनया तदा ।
वृतस्त्वं सर्वदेवेभ्यः श्रेष्ठोऽसीति विनिश्चयात् ॥ ४२ ॥
त्वं कं ध्यायसि सर्वेश संशयोऽयं महान् मम ।
प्रियोसि कैटभारे मे कथय त्वं मनोगतम् ॥ ४३ ॥

विष्णुरुवाच ।

शृणु कान्ते प्रवक्ष्यामि यं ध्यायामि सुरोत्तमम् ।

[120]यस्यैवार्चनतो मयाऽखिलमिदं विश्वं च संरक्ष्यते ।
सोयं साम्वसदाशिवो मम सदा कर्त्ता मनोवाञ्छितम् ।। ५५ ।।

---

आशुतोषं महेशानं गिरिजावल्लभं हृदि ॥ ४५ ॥
कदाचिद्देवदेवो मां ध्यायत्यमितविक्रमः ।
ध्यायाम्यहं च देवेशं शङ्करं त्रिपुरान्तकम् ॥ ४६ ॥
नरकं यान्ति ते नूनं ये द्विषन्ति महेश्वरम् ।
भक्ता मम विशालाक्षि सत्यमेतद् ब्रवीमि ते ॥ ४७ ॥
इत्युक्तं देवदेवेन विष्णुना प्रभविष्णुना ।
एकान्ते किल पृष्टेन मया शैलसुताप्रिय ! ॥ ४८ ॥
तस्मात् त्वां वल्लभं विष्णोर्ज्ञात्वा ध्यातवती ह्यहम् ।
तथा कुरु महेशान यथा मे प्रियसङ्गमः ॥ ४९ ॥
इति श्रियो वचः श्रुत्वा प्रत्युवाच महेश्वरः ।
स्वस्था भव पृथुश्रोणि तुष्टोऽहं तपसा तव ॥
समागमस्ते पत्या हि भविष्यति न संशयः ॥ ५० ॥

( १२० ) विश्वरक्षणमपि यदर्चनलब्धसामर्थ्यनिर्वाह्यमित्याह । यस्यैवार्चनत इति । तदुक्तं श्रीकाशीखण्डे २१ तमेऽध्याये—

ध्रुवं प्रति भगवद्वाक्यम् ।

अहं जिगमिषुस्त्वासं पुरीं वाराणसीं शुभाम् ।
साक्षाद् विश्वेश्वरो यत्र तिष्ठते मोक्षकारणम् ॥ ९७ ॥
विपन्नानां च जन्तूनां यत्र विश्वेश्वरः स्वयम् ।
कर्णे जापं प्रकुरुते कर्मनिर्मूलनक्षमम् ॥ ९८ ॥

अग्रे च–× × ×

वैकुण्ठनगरात् काशीं नित्यं विश्वेशमर्चितुम् ।
अहमायामि नियमाज् जगदर्च्यं तदर्चिताम् ॥ १०४ ॥
मयि या परमा शक्तिस्त्रिलोक्या रक्षणक्षमा ।
तत्र हेतुर्महेशानः स सुदर्शनचक्रदः ॥ १०५ ॥
पुरा जालन्धरं दैत्यं ममापि परिकम्पनम् ।
पादाङ्गुष्ठोत्थरेखोत्थं चक्रं सृष्ट्वा हरोऽहरत् ॥ १०६ ॥
तच्च चक्रं मया लब्धं नेत्रपद्मार्चनाद्विभोः ।
एतत्सुदर्शनाख्यं वै दैत्यचक्रप्रमर्द्दनम् ॥ १०७ ॥

अपिच—[१२१]यो मूढानपि देवदेशिकनिभान् कर्तुं क्षणेनोत्सुको
यो रङ्कानपि राजराजविभवान् कर्त्तुं प्रवद्धाग्रहः ॥
योऽपुत्रानपि पुत्ररत्ननिकरैर्युक्तान् विधातुं क्षमः
सोयं श्रीगिरिजापतिः सुतशतप्राप्त्यै समर्च्यो मया ॥ ५६ ॥
[१२२]स एव मे प्रतिज्ञां पूर्णां विधास्यति नात्र कापि चिन्ता।

---

तन्मया तव रक्षार्थं भूतविद्रावणं परम्।
तावत्प्रणुन्नं पुरत–स्ततश्चाहमिहागतः ॥ १०८ ॥
काशीमिदानीं यास्यामि विश्वेश्वरविलोकने।
अद्य यात्रास्ति महती कार्त्तिक्यां बहुपुण्यदा ॥ १०९ ॥

इत्यादिना महता विस्तरेण शिवप्रसादलब्धचक्रेण विश्वरक्षणकर्मणि सौकर्यं स्वयमेव भगवतोक्तम्। तथा च यत्प्रसादान्मम सर्वार्थसिद्धिः सर्वदा भवति 'सोऽयं साम्बसदाशिवः' इति सदाशिवस्य 'स' इति पारोक्ष्य-निर्देशाव्यवहितक्षण एव 'अयम्' इति पुरोवस्थितत्वमिव मन्वानः श्रद्धाभरेण 'मम सदा मनोवाञ्छितं कर्त्ता' इति सविश्वासं व्यवस्यति।

(१२१) इदानीं मनोवांछितमेव विशदयन् महेशप्रभावं वर्णयित्वा चिकीर्षितकार्यसिद्ध्यर्थमुपायं निश्चिनोति। यो मूढान् क्षणेन बृहस्पतितुल्यान् कर्त्तुं प्रभवति, यश्च रङ्कान् राजराजतुल्यवैभवभाजः कर्त्तुं प्रबद्धाग्रहो, यो हि अपुत्रान् पुत्रिणो विधातुं च क्षमः; सोऽयं श्रीगिरिजापतिः सुतशतानां प्राप्तये मया समर्च्यः। अयमर्थो हरिवंशे भविष्ये कैलासयात्रायां ७२ अध्याये रुक्मिण्यर्थितेन श्रीकृष्णेन—

एष गच्छामि पुत्रार्थं कैलासं पर्वतोत्तमम् ॥ ३५ ॥
तत्रोपास्य महादेवं शङ्करं नीललोहितम् ॥
ततो लब्धास्मि पुत्रं ते भवाद् भूतहिते रतात् ॥ ३६ ॥
तपसा ब्रह्मचर्येण भवं शङ्करमव्ययम्।
तोषयित्वा विरूपाक्षमादिदेवमजं विभुम् ॥ ३७ ॥
गमिष्याम्यहमद्यैव द्रष्टुं शङ्करमव्ययम्।
स च मे दास्यते पुत्रं तोषितस्तपसा मया ॥ ३८ ॥

इति महता विस्तरेण स्वयमेवोक्तः ॥

(१२२) एतस्मिन् विषये स्वीयं विश्रम्भातिरेकं दर्शयति।
स एव मे प्रतिज्ञां पूर्णां विधास्यति नात्र कापि चिन्ता ॥

[123]( प्रकाशम् ) देवि सत्यभामे ! त्वया या न्यूनता प्रदर्शिता सा तु मया देवर्षिणाऽप्यप्रतिविधेयैव । तथापि न्यूनतानिवारणं करिष्यामीति मया प्रतिज्ञातं तत्करिष्याम्येव परन्तु तत्र सर्वासां भवतीनां साहाय्यमपेक्षितम् ।

सत्यभामा—( सहर्षम् ) [124]यदाज्ञापयिष्यति प्राणनाथस्तत् साहाय्यं सर्वा अपि वयं करिष्याम एव ।

श्रीकृष्णः—[125]सत्यभामे ! सर्वासां भवतीनां समाना सत्पुत्ररत्नावलिप्राप्तिः श्रीसाम्बसदाशिवप्रसादमन्तरा दुर्लभा श्रीसाम्बसदाशिवप्रसादश्च तपश्चरणमन्तरा दुर्लभस्ततस्तपश्चरणाय तपोवनं गन्तुं मामनुजानीत सर्वा इत्येतावन्मात्रं सर्वाभिर्भवतीभिः साहाय्यं कर्तव्यमस्ति ।

सर्वाः—[126]( सोद्वेगम् ) नाथ ! नैतत् साहाय्यं कर्त्तुं शक्यमस्माभिः ।

सत्यभामा—[127]नाथ ! प्राणनाथ एवाऽस्मान् तपश्चरणायानुजानातु । वयं सर्वास्तपसा श्रीपार्वतीप्राणेश्वरं सम्प्रसादयिष्यामः ।

---

(१२३) करिष्यमाणाया अपि प्रतिज्ञाया भूतत्वमिव भावयन् स्वगते सर्वमात्मनिश्चयमवसाय, प्रकाशमाह । देवि सत्यभामे इति । यद्यपि त्वया प्रदर्शिता न्यूनता मया देवर्षिणा वा परिहर्तुमशक्या तथापि ' न्यूनतानिवारणं करिष्यामि ' इतीमानि मम प्रतिज्ञाक्षराणि मयैव निर्वोढव्यानि परन्तु तत्र भवतीनां साहाय्यमपेक्षितं तद्भवतीभिरवश्यं दातव्यमेवेति वदन् ताः प्रोत्साहयति श्रीकृष्णः।

( १२४ ) साहाय्यककरणाय समुत्सुका सत्यभामा सर्वासां प्रतिनिधित्वेन ' सर्वा अपि वयं करिष्याम ' इत्यङ्गीकारमाह ।

( १२५ ) परस्परानुषक्तमुपायोपेयभावं प्रदर्शयन् भगवान् तासां वाचिकमङ्गीकारमाग्रहेण दृढयति । सत्यभामे इत्यादिना । सत्पुत्ररत्नावलिप्राप्तिः सदाशिवप्रसादमन्तरा दुरधिगमा, सदाशिवप्रसादश्च तपश्चरणादिसाध्यस्तपश्च तपोवनस्थितिसापेक्षनियमनिर्वर्त्यमिति तपोवनगमनाय अनुजानीत सर्वा इतीदमेव साहाय्यकप्रदानस्वरूपमिति ।

( १२६ ) वियोगभीरूणामासामेवंविधसाहाय्यकरणे भवेदेव वैमुख्यं तथापि प्रथममेव भगवता प्रबद्धतया किंवक्तव्यतामूढानामेतासां सोद्वेगमेव वचःप्रवृत्तिर्भवति ' नाथ नैतत्साहाय्यं कर्त्तुं शक्यमस्माभि ' रिति । ( १२७ ) सत्यभामा तु निष्ठ्यूतगिरणमिव स्वोक्तमन्यथयितुमनौचित्यत्रस्ता प्रकारान्तर-

श्रीकृष्णः—[१२८]भवतीभिस्तत् कर्त्तुमशक्यम् ।

नारदः—[१२९]वत्साः ! मा चिन्तां कुरुत स्वल्पेनैवानेहसा श्रीकृष्णचन्द्रः श्रीसाम्बशिवं सम्प्रसाद्य भवतीनां सर्वासां सर्वान् मनोरथान् पूरयिष्यतीत्यविशङ्कमवगन्तव्यम् ।

सर्वाः—भगवन् !

यस्य [१३०] क्षणवियोगोपि कल्पकल्पः प्रजायते ॥
कथं तं तु तपः कर्त्तुमनुमन्तुं क्षमा वयम् ॥ ५६ ॥

श्रीकृष्णः—[१३१] देव्यः ! नायं वियोग इतरवियोगतुल्यः किन्तु श्रीपार्वतीनाथप्रसादहेतुतया निःसीमकल्याणपरम्पराप्रदोऽस्तीति सोढव्य एव ।

---

मेव पुरस्करोति । नाथ ! प्राणनाथ एवाऽस्मान् तपश्चरणाय अनुजानातु, वयं सर्वाः पार्वतीप्राणेश्वरं तपसा प्रसादयिष्याम इति । ( १२८ ) श्रीकृष्णो यद्येवमत्र ब्रूयाद्यत् सहैव युष्मानहं नयामि तपोवनमिति, तदापि श्रीकृष्णावियोगरूपपरमेष्टसिद्धिः स्यादिति सत्यभामाया अभिसन्धिः । तदेतत्प्रत्याचक्षाणः श्रीकृष्णः—भवतीभिस्तत् कर्त्तुमशक्यम्—इत्याह । अत्र भगवतः,पत्नीभिः कृतेन तपसा यदि तासां भवेत्पुत्रातिरूपेष्टसिद्धिस्तथापि ' करिष्यामीति ' स्वप्रतिज्ञा, स्वसम्पादितसत्पुत्ररत्नसम्पदा च तासां न्यूनतापरिहारः, स्वस्य च सर्वासु प्रेमसाम्यमित्यादि सकलं वात्यातूलायितं स्यादिति निगूढाशयः ।

( १२९ ) अत्रान्तरे नारद एव सर्वाः सान्त्वयन् भगवदिष्टमनुकूलयति । वत्साः ! इत्यादिना । श्रीकृष्णवियोगोऽपि स्वाभीष्टसिद्ध्यनुगमतया न दुःखबुद्ध्या मन्तव्यः किन्तु स्वल्पकालपरिच्छिन्नवियोगस्य निश्चिताभीष्टसाधकत्वे सर्वथा स वियोगोऽर्हत्येवानुमोदनमित्याशयः । सप्रत्ययं च महर्षिराह । स्वल्पेनैव अनेहसा=कालेन=श्रीकृष्णचन्द्रः श्रीसाम्बशिवं प्रसाद्य भवतीनां मनोरथान् पूरयिष्यत्येव इति सनिर्धारणमपि अशङ्कमवगन्तव्यमित्याह ।

( १३० ) नारदवाक्येन जाताश्वासाः सर्वाः सम्भूय वदन्ति यस्येति । क्षणावच्छिन्नोऽपि यस्य वियोगः कल्पतुल्यो भवति । ईषदसमाप्त्यर्थकस्यापि कल्पपस्तुल्यार्थतायामेव पर्यवसानमिति तुल्यपदेन विवरणम् । तं तपः कर्त्तुं वयं कथमनुमन्तुमीश्महे ? । अत्र तपःकर्तुमित्यस्य तपोवनं गन्तुमित्यस्मिन्नर्थे तात्पर्यम् ।

( १३१ ) यदा तु श्रीकृष्णः—' देव्यः ! नायं वियोगोऽनिष्टः किन्तु

सर्वाः—प्राणनाथ ! यद्येवमेवाग्रहः प्राणनाथस्य तर्हि श्रीमदाज्ञापरतन्त्रा वयम् ।

नारदः—[132]श्रीकृष्णचन्द्र ! सर्वासामासामनुमतं ततश्चैत्रशुक्लप्रतिपदि वर्षारम्भदिवसे तपश्चरणाय प्रस्थातव्यं भगवता येन सद्य एव श्रीचन्द्रचूडामणिप्रसादात् प्राप्तसर्वाभिलाषो भविष्यसि ।

श्रीकृष्णः—[133]यथाज्ञा भगवतो देवर्षेः । किन्तु यावत्तपश्चर्याप्रयाणवासरं भगवताऽप्यत्रैव स्थातव्यमिति मेऽभ्यर्थना ।

नारदः—श्रीमदाज्ञापरतन्त्र एवाऽयं जनः ।

राज्यः—[134]प्रियं नः प्रियं नः ।

---

श्रीपार्वतीप्राणनाथप्रसादहेतुतया निःसीमकल्याणपरम्पराप्रद इति सोढव्य' इत्याह, तदा भाविकल्याणगौरवमाशासानाः सर्वा आहुः 'श्रीमदाज्ञापरतन्त्रा वयम्' इति । (१३२) एवं लब्धानुमोदनं श्रीकृष्णं ज्ञात्वा तपसे तपोवनं प्रतिष्ठासुममुं शुभमुहूर्त्तदेशनया समुत्साहयन् सद्योऽभिलषितसिद्धिमादिशति महर्षिर्नारदः । श्रीकृष्णचन्द्र ! इत्यादिना । अत्र चैत्रशुक्लप्रतिपदि वर्षारम्भदिनत्वेन अनायासलब्धं सुदिनमिति मुनेराशयः ।

(१३३) भगवतापि प्रयाणपर्यन्तमभिकाङ्क्षितं मुनिसान्निध्यमसङ्कोचमेवार्थितं, मुनिनापि सामोदं स्वीकृतमेव 'श्रीमदाज्ञापरतन्त्र एवायं जन' इति सप्रणयवादिना ।

(१३४) नारदस्थितिं हर्षनिदानतया मन्वाना राज्यः 'प्रियं नः' इति वाक्यस्य वीप्सां कृतवत्यः ।

अत्र श्रीकृष्णस्य पुत्रप्राप्तिरूपफलोद्देशेन शिवभक्तिनिरूपणं न महते सौभगाय यतः—' फलोद्देशेन देवेशि लघुर्मम समाश्रयः । फलार्थी तदभावे मां परित्यक्तुं क्षमो यतः ।' इति लैङ्गवचने फलोद्देशेन भक्तेर्लघुत्वकथनात्; तथापि तादृश्यपि भक्तिः प्रतिबन्धविरहवतः पुरुषस्य फलसम्पादनेन विश्वासातिशयं जनयन्ती परिणतौ सात्त्विकभक्तिं प्रसूते इति न कोऽप्यपकर्षलेशः । भगवतस्तु शिवमहिमज्ञत्वशिवभक्तत्वे सुतरां प्रसिद्धे एव । तदुक्तं कौर्मे—

कृष्णद्वैपायनः साक्षाद् विष्णुरेव न संशयः ।
को ह्यन्यस्तत्त्वतो रुद्रं वेत्ति तं परमेश्वरम् ॥
नार्जुनेन समः शम्भोर्भक्तो भूतो भविष्यति ।
मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम् ॥ इति ।

श्रीकृष्णः—[१३५]अयि प्रियतमाः ! प्राप्तोऽयं प्रदोषसमयः, शिवा चाद्य शिवरात्रिस्ततः श्रीकुशेश्वरमन्दिर एव शिवार्चनानन्देन रात्रिं सर्वां नेतुमिच्छामि । तद् गच्छाम्यहमिदानीमेव, भवतीभिरपि सर्वाभिः प्रतियामं श्रीसाम्बसदाशिवदर्शनार्थमागन्तव्यं, साम्प्रतं तु गच्छत स्वं स्वं मन्दिरम् ।

सर्वाः—( सप्रणामम् ) यथाज्ञा प्राणनाथस्य ( इति निष्क्रान्ताः )

श्रीकृष्णः—देवर्षे ! एहि गच्छामः श्रीशिवमन्दिरम् ।

---

यत्तु भागवते चतुर्थस्कन्धे देवान् प्रति ब्रह्मणो वचनम्—

नाऽहं न यज्ञो न च यूयमन्ये न देहभाजो मुनयश्च तत्त्वम् ।
विदुः प्रमाणं बलवीर्ययोर्वा तस्यात्मतन्त्रस्य क उपायं विधित्सेत् ।

यदपि शिवं प्रति देवानां वचनमष्टमस्कन्धे—

न ते गिरित्राऽखिललोकपालविरिञ्चिवैकुण्ठसुरेन्द्रगम्यम् ।
ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद् ब्रह्म निरस्तभेदम् ॥

तदेतत्सकलं कैमुतिकन्यायेन शिवतत्त्वस्य प्राकृतपुरुषदुर्ज्ञेयत्वे पर्यवस्यति तेन न कोपि विरोध इत्यभियुक्तैरेव निरूपितम् ।

श्रीकृष्णस्य तु महेशभक्तिनिष्ठत्वं महेशप्रसादपात्रत्वं चोक्तं महाभारते सौप्तिके स्वयमेव शिवेन—

अहं यथावदाराध्यः कृष्णेनाऽक्लिष्टकर्मणा ।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ इति ।

( १३५ ) श्रीकृष्णः प्रदोषपूजनाय समयापातं विदन्नाह । ‘ अयि ! प्रियतमाः ! ’ इत्यादिना । अद्य शिवरात्रिरस्तीति श्रीकुशेश्वरसविध एव जागरणं, प्रतिप्रहरं च पूजनं, प्रथमप्रहरपूजनावसान एव द्वितीयप्रहरपूजनारम्भ इति पूजनानन्देन अविरलां रात्रिं तत्रैव नेष्यामि; ततश्च भवतीभिरपि प्रतियामं दर्शनार्थमागन्तव्यम् । इयं भगवत आज्ञा सर्वासामनुग्रहार्थैवेति तत्त्वम् । उक्तं हि स्कान्दे प्रदोषमाहात्म्ये—

ये नार्चयन्ति गिरिशं समये प्रदोषे
ये नार्चितं शिवमपि प्रणमन्ति चान्यैः ।
एतत्कथां श्रुतिपुटैर्न पिबन्ति मूढा—
स्ते जन्मजन्मसु भवन्ति नरा दरिद्राः ॥

**नारदः**—यथाज्ञा श्रीकृष्णचन्द्रस्य ( इत्युक्त्वा श्रीकृष्णचन्द्रेण सह निष्क्रान्तः )

इतिश्रीसद्गुरुवर्यकेशव—कृपाकल्पवल्लरी—पल्लवायमाने
महामहोपाध्यायशीघ्रकविशङ्करलालकृतौ
श्रीकृष्णचन्द्राभ्युदय–नाम्नि नाटके
प्रथमोऽङ्कः पूर्णः ॥

---

तथाच अर्चनवदर्चितलिङ्गप्रणामोऽपि महते फलाय भवतीत्याशयेन भगवता प्रतियामं दर्शनार्थमागन्तव्यमित्याज्ञप्तम् । साम्प्रतं तु गच्छत स्वं स्वं मन्दिरमित्युक्त्या तासां विसर्जनेन मुनिना सह प्रारिप्सितं मन्त्रयितुकाम इव 'देवर्षे ! एहि गच्छामः शिवमन्दिर' मित्युक्त्वा 'यथाज्ञा श्रीकृष्णचन्द्रस्ये' ति दत्तानुकूल्येन नारदेन सह निष्क्रान्तः ।

इति श्रीसद्गुरुवर्यकेशवकृपाकल्पवल्लरीपल्लवायमानश्रीकृष्णचन्द्राभ्युदय–नाम्नो नाटकस्य टीकायां ज्योत्स्नाभिधायां प्रथमोऽङ्कः सम्पूर्णः ।

---

श्रीकृष्णचन्द्राभ्युदयाभिधस्य सन्नाटकस्योपरिनिर्मितायाम् ।
ज्योत्स्नाभिधायामगमत्समाप्तिं व्याख्यात्मिकायां प्रथमोङ्क एषः ॥



# अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति दन्तवक्त्रेण सह शिशुपालः )

शिशुपालः—'वत्स दन्तवक्त्र ! अल्पबलेनाऽपि गोपालबालेन दिग्विजयविख्यातकीर्त्तयो जिताः खलु जरासन्धादयः सर्वेऽपि मे सखायो, हृता च रुक्मिणी, विरूपः कृतश्च रुक्मीति स्मारं स्मारं न मे मानसं कुत्रापि शर्म लभते, नैति नयनयोर्निद्रा, न रोचते चाऽऽहारोऽपि ।

---

श्रेयःश्रियेऽस्तु नः शश्वद् विश्ववन्द्या सरस्वती ।
जरीहरीति सन्तापान् यत्कृपालहरीझरी ॥ १ ॥

अत्र द्वितीयाङ्कारम्भे शिशुपालदन्तवक्त्रयोः प्रवेशो विष्कम्भकाङ्गत्वेन कल्पितः । विष्कम्भकलक्षणमुक्तं सुधाकरे—

तत्र विष्कम्भको भूत—भावि वस्त्वंशसूचकः ।
अमुख्यपात्ररचितः सङ्क्षेपैकप्रयोजनः ॥
द्विधा स शुद्धो मिश्रश्च मिश्रः स्यान्नीचमध्यमैः ।
शुद्धः केवलमध्योऽयमेकानेककृतो द्विधा ॥
तदयमनेकमध्यमपात्रकृतः शुद्धो विष्कम्भकः ।

अत्र श्रीकृष्णकृतरुक्मिणीहरणवृत्तान्तोपक्षेपेण वैरस्याचिरोद्भेदमवगमयति ।

( १ ) शिशुपालवचने ' अल्पबलेनापि गोपालबालेन ' इत्यल्पबलत्वकथनं यद्यपि ' दिग्विजयविख्यातकीर्त्तयो जिता ' इत्युत्तरकथनेन व्याहन्यते तथापि अमर्षाविष्टचेतसां तादृंशि भवन्त्येव वचांसि यथाऽनर्घ्यराघवे—जानानस्यापि रामकृतराक्षसवधादिपराक्रमं 'क्षत्रियकडम्ब ! ' इत्यादि जामदग्न्यस्य वचः ।

' जरासन्धादयो मे सखायो जिता ' इति मित्राणां जितत्वकथनेन स्वस्यापि पराजितत्वाशङ्का प्राप्तावसरेति चिन्तानिदानम् ॥ रुक्मिणो विरूपकरणं रुक्मिणीहरणं च विक्षेपातिशयाधायकम् । यतो रुक्मिण्यां वाग्दानप्रयुक्तस्वत्वं मन्यमानस्य तद्धरणकर्त्तरि दमार्हताबुद्धिरुदेत्येवेति तच्चिन्तनपरस्य शमनिद्राभावा—वाहारारुचिश्चेति भावः ।

दन्तवक्त्रः—[2]आर्य! किमेवं वीरकोटीरोऽपि कातरतर इव धीरतां गम्भीरतां वीरतां च सहजां विमुच्य ग्लानिमुपगच्छसि? नैतदुचितं ते।

शिशुपालः—[3]वत्स! कथमिव न ग्लानिमुपयामि? अनेकाक्षौहिणी परिवृतपरममित्रगणपरिरक्षितामपि रुक्मिणीं भद्रकालीमन्दिरादेकरथो वासुदेवो जहार, किमेतदल्पं ग्लानिस्थानम्?

दन्तवक्त्रः—[4]आर्य! जयपराजयौ हि सर्वेषां पर्य्यायेण भवतः, कालाधीनं हि सर्वं लोके भवतीति नाविदितमार्यस्य। इदानीमनुकूलकाला यदवो जयभाजो जाताः, प्रतिकूलकालाश्च वयं पराजयपात्रतामुपगताः। पुनरपि सत्यनुकूले काले क्षणमात्रेण सर्वान् यदून् जेष्यामः किमत्र विषादेन चिन्तया वा। किञ्च—सन्मित्ररत्नसम्पत्पूर्णस्य ते कैव तादृशवैरिविजये चिन्ता? श्रुतं मया चारेभ्यो यन् महाराजो जरासन्धो वासुदेवविजयाय परममुद्यमं कुरुते, शाल्वश्च तद्विजयाय दुष्करेण तपसा परमेश्वरं श्रीपार्वतीप्राणेश्वरमाराधयति, बाणश्च महामाहेश्वरः श्रीमहेश्वरप्रसादप्राप्तबाहुसहस्रः कृष्णच्छिद्रान्वेषणपरायणो न नक्तंदिनं विश्राममपि भजते। अन्ये च सर्वे स्वस्वशक्त्यनुसारेण कृष्णमेव पराभावयितुं यत्नसहस्राणि तन्वन्ति।

शिशुपालः—[5](साश्वासम्) अहो मदीयैः सन्मित्रैर्मदर्थं बहु बहु कृतम्। कदाऽहं तत्कृतानामुपकाराणामनृणो भविष्यामि।

---

(२) दन्तवक्त्रस्तस्य तादृशमधीरत्वमालक्ष्योपालभते। किमेवमित्यादि नैतदुचितं ते इत्यन्तम्।

(३) शिशुपालः पुनस्तदेव रुक्मिणीहरणमनुसन्दधानः परममित्रगणपरिरक्षितामिति मित्राणां परमविशेषणमनवधानतापरिहाराय रक्षितामित्यत्र परिपदन्यासेन प्रमादराहित्यप्रदर्शनपूर्वकं प्रसङ्गोऽयमनल्पग्लानिमूलमिति समर्थितम्। अत्र वासुदेवो जहारेति भगवतो वासुदेवशब्देन व्याहारः सम्बन्धित्वबोधनाय तेन च खेदातिशयः।

(४) दन्तवक्त्रस्तु जयपराजययोरनुकूलप्रतिकूलकालायत्तत्वं कथयन् विषादमपमार्ष्टि, जरासन्धशाल्वबाणादिवृत्तान्तनिवेदनेन च तं प्रोत्साहयति।

(५) शिशुपाल एतच्छ्रुत्वा लब्धाश्वासस्तेषां मित्राणामानृण्यचिन्तां कुरुते।

दन्तवक्रः—[६]आर्य ! न खलु सन्मित्राणि प्रत्युपकारापेक्षाणि भवन्तीति नाऽविदितं ते । किञ्च—तदीयवृत्तान्तजिज्ञासया चाराश्च वहवो वहुवेशाः परितः परिभ्रमन्ति, तेभ्यश्च कृष्णवृत्तान्तमधिगम्य तदीयकर्त्तव्येषु विघ्ना उत्पाद्यन्ते । पीड्यते तदीया पुरी द्वारावती, ह्रीयन्ते यादवस्त्रियो, वध्यन्ते यदवश्चोरयामश्च यादववालकान् । न खलु कृष्णो रुक्मिणीहरणदिवसादारभ्य कदाचित् सुखं शेते, सुखं भुङ्क्ते, सुखं पिवति वा पानीयम् ।

शिशुपालः—[७]वत्स ! मदीयानां सन्मित्राणां मयि स्वाभाविकं प्रेमप्राबल्यं श्रुत्वा परमं प्रमोदमाप्नोति मनो मे साम्प्रतं, प्रणष्टः शोको मे पुनश्चारचक्षुषाऽध्यक्षीकृतं निवेद्यताम् ।

दन्तवक्रः—यथाज्ञा महाराजस्य ( इत्युक्त्वा यावदुत्थातुमिच्छति तावत् )

( [८]अपटीक्षेपेण प्रविश्य ब्रह्मचारी )

ब्रह्मचारी—[९]जयतु जयतु महाराजो महाराजमन्त्री च ( इत्याशिषं ददाति )

शिशुपालदन्तवक्रौ—( [१०]साश्चर्यम् ) कुतोऽयमकस्माद् ब्रह्मचारी ! !

( इति परस्परं पश्यतः )

---

( ६ ) दन्तवक्रस्तदीयां चिन्तां, मित्राणां प्रत्युपकारानपेक्षत्वमावेद्य परिहरति । कृष्णकर्त्तव्येषु विघ्नोत्पादनं, तदीयपुरीपीडनं तदीयस्त्रीणामपहरणं तदीयानां वधस्तदीयवालकानां चौर्येणापहरणं चेति सकलेयं कृष्णस्य विपत्परम्परोत्पादितेति आवदेयन् चेतश्चमत्कारयति ।

( ७ ) शिशुपाल एतदाकर्ण्य ' प्रणष्टः शोको मे ' इति वदन् कृष्ण वृत्तान्तमखिलमवगन्तुमातुर इवाह ' चारचक्षुषाध्यक्षीकृतमावेद्यतामिति ।

( ८ ) अत्र दन्तवक्रवचनावसरं मध्ये छित्वाऽकस्माद् ब्रह्मचारि प्रवेशः सकलवृत्तान्तनिवेदनायागतस्य गृहीतवर्णिवेषस्य चारस्य विलम्बाक्षमता मावेदयति । अपटीक्षेपो हि तत्रैव लब्धावसरो यत्र निवेदनीयं त्वरयति निवेदयितारं, यथावाऽनर्घ्यराघवे मुरारी, रावणप्रेषितस्य शुकस्याधिगत्य रामसैन्य वृत्तमागतस्यापटीक्षेपेणैव प्रवेशमाह ।

( ९ ) ब्रह्मचारिमुखादाशीरुच्चारणं समीपस्थितेषु मन्त्रगोपनायैव ।

(१०) अज्ञाततत्त्वयोः शिशुपालदन्तवक्रयोर्युक्तमेवाश्चर्यचकितत्वम् ॥

ब्रह्मचारी—[11]हा ! राजप्रदत्तस्वल्पतमाधिकारमात्रलाभेनाऽप्यन्धतमा भवन्त्यधिकारिणः, परं नाऽयमधिकारिणां दोषः किन्तु विद्याविनयविवेकविधुरतयाऽनधिकारिभ्योऽधिकारं समर्पयतां राज्ञामेव दोषः ।

( [12]प्रविश्य द्वारपालः )

द्वारपालः—[13]देव ! मन्त्रिन् ! नमो राज्ञे नमो राज्याय राजसेवायै च । ईदृशा भिक्षवोऽपि राजकिङ्करान् हुङ्कृत्य तुङ्कृत्य भर्त्सयित्वा ताडयित्वा चास्मान् बलात् प्रविशन्ति स्वेच्छया राजभवनम् । कारागारकुटुम्बिनं करोत्वमुं ब्राह्मणब्रुवं, मां वा राजसेवामुक्तं करोतु देवः । ( इत्युक्त्वा कनकदण्डं राजपादयोरग्रे निःक्षिपति )

शिशुपालः—वर्णिन् ! कथमेवं द्वारपालं तिरस्कृत्य बलाद् राजभवनप्रवेशः कृतः ।

ब्रह्मचारी—[14]राजन् ! नीचस्वभावाः खलु राजसेवका इति नाविदितं देवस्य । अनेकतीर्थयात्राचङ्क्रमणक्रमेण श्रान्तः कश्चिद् ब्रह्मचारी देवदर्शनमिच्छतीति निवेदय महाराजायेति प्रार्थितोऽप्ययं वैधवेयो निजाधिकारमदमत्ततयाऽन्धो गजनिमीलिकां कृत्वा 'कस्त्वं वराको भिक्षुर्महाराजमुखचन्द्रदर्शनवार्त्तामपि

---

( ११ ) अतः परं ब्रह्मचारिवचने 'विद्याविनयविवेकविधुरतया' इति हि यद्यप्यधिकारिणामुद्देश्यविशेषणतयोपात्तं लब्धाधिकाराणामनधिकारितापरिपोषाय तथापि तेभ्यस्तादृशेभ्योऽधिकारं समर्पयतां राज्ञामपि संश्लेष मुपाददानमनधिकारिभ्योऽधिकारदानप्रयुक्तं तेषां विद्याविनयविवेकवैधुर्यं द्योतयद्भवति चमत्कारातिशयाधायकम् । तेन च 'राज्ञामेव दोषः' इति निगमनं सनिर्धारणं सङ्गच्छतेतराम् ॥

( १२ ) प्रसह्य प्रविष्टस्य वर्णिनो दोषावेदनाय द्वारपालप्रवेशः ॥

( १३ ) अत्र 'ईदृशा भिक्षव' इति निकृष्टतामुक्त्वा राजकिङ्कराणां तुङ्कारानर्हत्वं, किमुत ताडनादिपूर्वकं बलात्प्रवेश इति ब्रह्मचारिणो दण्ड्यत्वं समर्थयन् 'नचेदस्मिन् दण्डपातस्तर्ह्यहं स्वाधिकारान्मुक्तो भवितु मिच्छामीति'—कनकदण्डनिःक्षेपो जिहासामेतस्याधिकारस्य द्योतयति ॥

( १४ ) शिशुपालप्रश्नोत्तरे—'नीचस्वभावाः खलु राजसेवका' इति विशेषेण सामान्यसमर्थनरूपार्थान्तरन्यासवचनं प्रायोभिप्रायम् ॥ तीर्थ

कर्त्तुम् । मन्त्रभवने सम्प्रति महाराजो महामन्त्रिणा दन्तवक्रेण सह किमपि गहनं कार्यगौरवं मन्त्रयमाणस्तिष्ठति तेन दुर्लभतमं देवदर्शनं महाधिकारिणामपि का पुनस्ते वार्त्तापि ' इत्युक्त्वा निद्रासुखमनुभवितुं प्रवृत्तः ।

दन्तवक्रः—[१५]कस्तत्र तस्य दोषः? किङ्करैः स्वप्रेप्यनुल्लङ्घनीयैव राजाज्ञा ।

ब्रह्मचारीः—[१६]भवतु मन्त्रभवने स्थितिस्तथापि मदुक्तानि सर्वाण्यक्षराणि महाराजाय मन्त्रिणे च निवेदयेति पुनः प्रार्थितोऽयं निद्राभङ्गक्रुद्धः कनकदण्डमुद्यच्छन् ' दुष्ट दूरमपसर, न चेत् ताडयिष्यामि दण्डेनानेन, कोलाहलोऽपि मन्त्रविधौ विघ्नं कुरुते ' इत्युक्त्वा मह्यमर्द्धचन्द्रं दातुं प्रवृत्तस्ततोऽहं च तं चपेटाप्रहारेण पातयित्वा राजसमीपमागतः ।

दन्तवक्रः—[१७]अतीवाऽयुक्तं कृतं, द्वारपालतिरस्कारो हि राजतिरस्कार एव ।

ब्रह्मचारी—[१८]मदान्धा द्वारपालास्तिरस्कारमेवार्हन्ति । श्रीवैकुण्ठस्थयोः श्रीविष्णुद्वारपालयोरपि ततः पतनं तदीयोन्मत्ततयैव जातमिति नाऽविदितं महामात्यस्य ।

दन्तवक्रः—[१९]क्षणं विलम्ब्य यद्यागमनमकरिष्यस्त्वं तर्हि का हानिरभविष्यत् ? यस्या भयात्त्वयेदृशं स्वीकृतं साहसम् ।

---

यात्राचङ्क्रमणं च स्वपावित्र्यमाहात्म्यप्रकटनाय तेन च द्वारपालमनसि स्वस्य पूज्यत्वोत्पादनेन स्वागमनस्य सद्योनिवेदनीयत्वम् ॥ वैधवेय इति ' स्त्रीभ्यो ढक् ' । गजनिमीलिकापदमनादरपर्यायः ।

( १५ ) दन्तवक्रेण द्वारपालाचरणस्य निर्दोषत्वं साध्यते ।

( १६ ) ब्रह्मचारी, आगन्तुकनिवेदनमावश्यकं मन्वानो द्वारपालस्य स्वं प्रति दण्डोद्यमनं महापराधं कथयन् स्वकर्त्तृकचपेटाप्रहारस्याप्यनपराधतामेव दृढयित्वा स्वप्रवेशस्य कार्यगौरवमावेदयति ॥

( १७ ) दन्तवक्रस्तु ब्रह्मचारिवर्त्तनमसाम्प्रतमेव सिषाधयिषुः ' द्वारपालतिरस्कारो हि राजतिरस्कार एवे ' ति ब्रुवाणस्तमधिक्षिपति ॥

( १८ ) ब्रह्मचारी तु मदान्धद्वारपालानामयोग्यत्वं योग्यागन्तुकानादरेण चाऽधःपातभागित्वं श्रीविष्णुद्वारपालयोर्जयविजययोरधःपातकथा—निदर्शनेन प्रस्तौति ।

( १९ ) 'क्षणं विलम्ब्य यदी' त्यादि दन्तवक्रवचनं बीजोद्भेदाङ्गम् ॥

ब्रह्मचारी—[२०](स्वगतम्) नायममात्यो महाराजो वा मां तत्त्वतोऽद्यावधि वेत्ति, सोऽयं भूमिकाग्रहणपाटवस्य प्रभावः ।
(प्रकाशम् प्रहस्य)[२१]महती हानिरभविष्यत् । 'का हानिः समयच्युतिः' गतानि क्षणरत्नानि पुनर्नायान्ति । किञ्च—

आदानस्य प्रदानस्य कर्त्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिवति तद्रसम् ॥

इति नीतिरपि द्वारपालेनेव भवता महामात्येनापि नावलोकितेति नाऽल्पमाश्चर्यस्थानम् ।

दन्तवक्रः—([२२]स्वगतम्) नाऽयं केवलं भिक्षादक्षिणामात्रलाभलुब्धो ब्रह्मचारी, कश्चिद्रूपान्तरेण राजा राजामात्यो वेति प्रतिभाति । (प्रकाशम्) ब्रह्मचारिणः ! किन्नामधेयाः श्रीमन्तः ?

ब्रह्मचारी—[२३]यादवकन्दनानन्दनामाऽहम् ।

राजामात्यौ—([२४]सहर्षाश्चर्यम्) द्वारपाल गच्छ गच्छ स्वाधिकारमशून्यं कुरु । नाऽयं कश्चिद् बाह्यो ब्रह्मचारी किन्त्वाभ्यन्तरः प्रियहितकर्त्ता च राज्यस्य कोऽपि महात्मा वर्तते ततस्तत्कृतं तर्जनमपि परमानन्ददं मन्तव्यम् ।

द्वारपालः—यथाज्ञा देवस्य । (इत्युक्त्वा निष्क्रान्तः)

---

(२०) ब्रह्मचारिस्वगते 'सोऽयं भूमिकाग्रहणपाटवस्य प्रभावः' इतीदं दूतकौशलं नाम नाट्यालङ्कारः ।

(२१) समयच्युतिरूपाया हानेरप्रतिविधेयतासमर्थनाय—'आदानस्येत्यादि' प्राचीनं नीतिवचनमुदाहृतम् ॥

(२२) उपालम्भकर्त्तुरेवोपालम्भपात्रताप्रदर्शनाय 'द्वारपालेनेव भवता महामात्येनाऽपि' इति नीतिविस्मरणसाधर्म्येण दन्तवक्रस्यापि द्वारपालसाम्यमापादयतो वर्णिनो विशिष्टव्यक्तित्वमाकलयन् दन्तवक्रः स्वगते 'राजा राजामात्यो वेति' विकल्पनापूर्वकं प्रश्नयति 'किन्नामधेयाः श्रीमन्तः ?' इति सबहुमानम् ॥

(२३) नामकथनमात्रेणैव संशयमपाकुर्वन्निव ब्रह्मचारी 'यादवकन्दनानन्द' इत्यात्मनो नाम कथयति । (२४) तावदेव राजामात्यावुभावपि नामार्थबोधजनितहर्षेण वेषापरिज्ञानजन्याश्चर्येण च युतौ सम्भावना

शिशुपालः—[२५]परमहितैषिवर्य ! इदानीं त्वदीयं तत्त्वं निवेद्य कुरुष्व नः सानन्दान् ।

ब्रह्मचारी—[२६]मायाशतज्ञाननिधिं यदूनां
निकन्दने बद्धदृढप्रतिज्ञम् ।
अवेहि मां मोहितसर्वलोकं
पृथ्वीपते शम्बरमात्ममित्रम् ॥ १ ॥

शिशुपालः—( [२७]साश्चर्यम् ) अहो परमं मित्रं मे शम्बरः ? सुदिनमिदम् ।

( इति वदन् सिंहासनात् समुत्थाय दृढमालिङ्गति )

दन्तवक्त्रः—[२८]आर्य ! प्रणमाम्यहम् । कथमियं भूमिका स्वीकृता महाराजेन यया वयं भवदनादरपरापराधपात्रतामुपनीताः ।

शम्बरः—[२९]यदा चारा अपि यादवसत्कृतास्तदीयं रहस्यं न निवेदयामासुस्तदा तदीयरहस्यवृत्तान्तज्ञानायैव भूमिकेयं मया गृहीता ।

दन्तवक्त्रः—[३०]उत्तमोत्तम एष प्रकारः परकीयरहस्यवृत्तान्तज्ञानस्य ।

---

मात्रेण किञ्चिदुद्गतप्रत्यभिज्ञाच्छायाविव द्वारपालं विसृजतः । ( २५ ) तं ब्रह्मचारिणमात्मीयं निश्चिन्वानः शिशुपालस्तत्त्वं प्रश्नयति ‘ परमहितैषिवर्य ’ इति सम्बोधयन् ॥

( २६ ) ब्रह्मचारी एकेनैव वाक्येन सर्वं निवेदयति । अत्र मायाशत ज्ञाननिधिं मोहितसर्वलोकमिति विशेषणद्वयेन स्वसामर्थ्यं प्रदर्श्य, यदूनां निकन्दने बद्धदृढप्रतिज्ञम् इत्यनेन कार्यप्रवणत्वं, शम्बरमिति नामनिवेदनेन आत्ममित्रमिति आभ्यन्तरत्वख्यापनेन च शिशुपालस्य मनसि कमपि प्रत्ययं जनयति ॥

( २७ ) ज्ञाततत्त्वः शिशुपालो दृढमालिङ्गति ॥

( २८ ) दन्तवक्त्रस्तु प्रणामपूर्वकं तदनादरप्रयुक्तस्वापराधं वर्णिभूमिकापरिग्रहान्तरि न प्रत्यभिज्ञानेन परिहरन् पृच्छति । कथमियमिति ॥

( २९ ) इदानीं शम्बरः परपक्षभेदे स्वीयं पाटवं प्रकटयन् तादृशभूमिकाग्रहणप्रयोजनमाह ‘ तदीयरहस्यवृत्तान्तज्ञानायैवेति ’ ॥

( ३० ) दन्तवक्त्रोऽनुमनुते ‘ उत्तमोत्तम ’ इत्यादि ॥

शिशुपालः—[३१]कस्को रहस्यवृत्तान्त उपलब्धो मदीयमित्रमणिना भवतेति निवेद्यताम् ।

शम्बरः—तदर्थमेवाऽत्राऽऽगमनं मे । श्रूयताम् । गृहीतब्रह्मचारिभूमिकोऽहं यदुकुलाचार्यं श्रीगर्गाचार्यं विद्यागुरुमकरवम् ।

शिशुपालः—( [३२]सपरितोषम् ) सम्यक्कृतमेतत् । ततस्ततः ।

शम्बरः—[३३]परमपरिचर्यापरितुष्टो गुरुवर्यो मां स्वपुत्रप्रेम्णाऽपश्यत् । वृद्धावस्थाविवशश्च न क्वचिन्मया विना गतागतमकरोत् ।

दन्तवक्रः—स्वभावसिद्धमेव सद्गुरूणां शिष्येषु पुत्रवात्सल्यम् । ततस्ततः।

शम्बरः—[३४]एकदा वसुदेवेन सादरमाहूतो मे गुरुवर्यो रथमारुह्य तत्सदनमगच्छत् । अहं च तदाज्ञया गुरुचरणानां पुस्तकानि धृत्वा तत्र गतः ।

शिशुपालः—तदीयरहस्यज्ञानस्य समीचीनः समयः सम्पादितः । ततस्ततः

शम्बरः—आद्वारमभिगम्य प्रणम्य वसुदेवेन पाद्यार्घ्यादिभिः पूजितः श्रीगर्गाचार्यः काञ्चनसिंहासनमधिरुह्य क्षणं विश्रामसुखमन्वभवत् ।

दन्तवक्रः—[३५]वसुदेवस्य गुरुभक्तिरुत्तमोत्तमा खलु । ततस्ततः ।

---

( ३१ ) शिशुपालो वृत्तान्तोपलम्भाय प्रश्नयति ' निवेद्यतामिति । '

( ३२ ) शम्बरेण ' गर्गाचार्यं विद्यागुरुमकरव ' मित्युक्ते तदुत्तर वृत्तान्तं ज्ञातुं त्वरमाणः शिशुपालः सानुमोदनमाह ' ततस्ततः ' इति ॥

( ३३ ) कपटपटुना शम्बरबटुना परिचर्याराधितः स्थविरो गुरुर्गर्गस्तस्मिन् स्वपुत्रनिर्विशेषभावोऽभवदित्याकर्ण्य ' स्वभावसिद्धमेव सद्गुरूणां शिष्येषु पुत्रवात्सल्य ' मिति दन्तवक्रवचः सामान्येन विशेषसमर्थनरूपमर्थान्तरन्यासमवगमयति ॥

( ३४ ) इदानीं गर्गस्य गुरुकरणे प्रयोजनं प्रकाशयति ' एकदेत्यादि । '

( ३५ ) आद्वारमभिगम्येत्यादि वसुदेवकर्तृकगुरुसपर्यादि श्रुत्वा ' वसुदेवस्य गुरुभक्तिरुत्तमे ' ति दन्तवक्रवचनं, प्रतिपक्षिणोऽपि प्रशंसामिषेण दुर्जयत्वमावेदयति । गर्गाचार्यसदृशगुर्वाज्ञावशवर्त्तिनस्तस्याधृष्यत्वाध्यवसायेन स्वोत्साहभङ्गध्वनिः ॥

शम्बरः—'वत्स ! वसुदेव ! किमर्थमाहूतोऽहं तन्निवेदय' इति गुरुणाऽऽज्ञप्तो वसुदेवः साञ्जलिबन्धं प्रणम्य 'भगवन् ! श्रीकृष्णचन्द्रस्याष्टोत्तरशताधिकेषु षोडशसहस्रेष्वपि कुलीनकलत्रेषु नैकस्यापि पुत्रः पुत्री वाऽऽद्यापि समजनि, तेन खिद्यते मे चेतस्तद् दयार्णवा यूयं मयि दयादृशं विधाय सत्पुत्रप्राप्तिपूर्वकं वंशवृद्धये कमप्युत्तमोत्तमुपायं वदत' इति विज्ञापितवान् ।

शिशुपालः—([३६]स्वगतम्) कीलितानि मदीयैर्मित्रैरसद्ग्रहैस्तासां सर्वासामुदराणि, कथं प्रसवः स्यात् । गर्गोऽपि तत्र किं कुर्यात् । (प्रकाशम्) मित्रवर्य ! ततः किमुक्तमाचार्येण ?

शम्बरः—[३७]ततो मद्धस्तात् स्वनिर्मितशास्त्रपुस्तकं गृहीत्वा विलोक्य च 'वसुदेव ! केनापि सर्वासां सन्तानावरोधः कृतोऽस्ति' इत्युक्तं तेन ।

दन्तवक्रः—अहो शास्त्रस्य शास्त्रकर्तुश्चातीन्द्रियज्ञानप्रावल्यम् । ततस्ततः

शम्बरः[३८]ततो 'गुरुवर्याः ! तर्हि किं विधेयं येन सर्वासां सन्तानप्राप्तिर्भवेत् ?' इति वसुदेवेन पृष्टः श्रीगुरुवर्यो मे 'वत्स वसुदेव !'

अनपत्यादिदोषेषु महामयभयेषु च ॥
आयुष्यवृद्धये चापि रुद्रो जाप्यो न संशयः ॥ २ ॥

---

(३६) गर्गेण निजाह्वानप्रयोजनं पृष्टो वसुदेवो यदा श्रीकृष्णचन्द्रस्य सन्ततिप्राप्त्युपायं याचितवान् तदा शिशुपालः श्रीकृष्णचन्द्रराज्ञीनामुदरकीलने व्यापृतानामसद्ग्रहाणां स्वमित्राणां पराक्रमं प्रशंसन् 'गर्गोऽपि तत्र किं कुर्यात्' इति साधिक्षेपं गर्गोपदिष्टोपायानां व्यर्थत्वं मन्वान इव 'ततः किमुक्तमाचार्येण ?' इति कुत्सार्थककिमा वक्ष्यमाणमर्थजातमनादरकक्षायां निक्षिपन्नाह ॥

(३७) 'केनापि सर्वासां सन्तानावरोधः कृतोऽस्ती' ति गर्गवचनश्रवणेन तस्याऽतीन्द्रियज्ञाननिधित्वबोधकदन्तवक्रवाक्येन विस्मय उद्भावितः ॥

(३८) अत्र शम्बरोक्तौ वसुदेववचनेन सर्वासां श्रीकृष्णपत्नीनां सन्तानावाप्तेरुपायः पृष्टो गर्गमुनिना च स्मृतिसारसमुच्चयोऽनुष्टुभा कथितः । अनपत्यादिदोषेष्वित्यादि ।

इति [39]शास्त्रसिद्धमेव । ततः श्रीकृष्णेन क्वापि तपोवने गत्वा प्रतिदिनं श्रीसाम्बसदाशिवपदारविन्दयो रुद्राभिषेकं विधाय कमलसहस्रमर्पणीयं, ततः सद्यः सत्पुत्रप्राप्तिर्भविष्यति सन्तानावरोधकराः सर्वेऽपि दुर्ग्रहा दूरे पलायिष्यन्ते च' इत्यादिष्टवानाचार्यः ॥

---

(३९) तथाचोक्तं रुद्रकल्पद्रुमे—

विना महेश्वरं देवं नान्यस्त्रातुमघौघतः । इत्यतः परम्—
यः शतरुद्रीयमधीते सोऽग्निपूतो भवति स वायुपूतो
भवति स सुरापानात्पूतो भवति स सुवर्णस्तेयात्पूतो
भवति गुरुतल्पगमनात्पूतो भवति स ब्रह्महत्यायाः
पूतो भवति तस्मादविमुक्तमाश्रितो भवति । इति श्रुतिमुदाहृत्य ।

यः श्रद्धया युतो नित्यं शतरुद्रियमभ्यसेत् ।
अग्निदाहात् सुरापानाद्दुष्कृताचरणात्तथा ।
मुच्यते ब्रह्महत्याया इति वै कल्पशाखिनः ॥
इति श्रुत्यर्थानुविधायि वाक्यमुपन्यस्तम् ॥

स्मृतिमहार्णवे च—मद्यं पीत्वा गुरुदारांश्च गत्वा ।
स्वर्णं हृत्वा ब्राह्मणं चापि हत्वा ॥
भस्मस्नायी भस्मशय्यां शयानो ।
रुद्राध्यायी मुच्यते सर्वपापैः ॥

स्मृतिदर्पणेऽपि—रुद्रार्चनं रुद्रजपस्तथा चैकादशी व्रतम् ॥
वाराणस्यां च मरणं मुक्तिरेषा चतुर्विधा ॥
रुद्रजापी शिवः साक्षात् चतुराश्रमधर्मकः ॥
तस्मादन्यत्परित्यज्य रुद्रजापी भवेत् सदा ॥
सर्वरोगविनाशाय परमाभ्युदयाय च ॥
मनोरथफलप्राप्त्यै रुद्रजापी भवेत्सदा ॥

वायुपुराणे च—अनपत्यत्वदोषेषु शाकिन्यादिग्रहेषु च ॥
सर्वज्वरोपशान्त्यै च रुद्रो जाप्यो न संशयः ॥
रोगवान् पापवांश्चैव रुद्रं जप्त्वा जितेन्द्रियः ॥
रोगात्पापाच्च मुक्तोऽसावतुलं सुखमश्नुते ॥

इत्यादिशास्त्रवाक्यसमुदायसाधितमर्थमेकयैव कारिकयोपदिष्टवता मुनिना

शिशुपालः—[४०]मित्र ! ततो वसुदेवेन किमुक्तम् ? ।

शम्बरः—'[४१]गुरुवर्याः! यथायुष्मदाज्ञं निसर्गतो महामाहेश्वराग्रेसरं श्रीकृष्णं श्रीमहेश्वरसमाराधनाय तपोवनं प्रेषयिष्यामि' इत्युक्तं वसुदेवेन ।

दन्तवक्त्रः—[४२]हा ! ! महाननर्थ आपतितः ।

शिशुपालः—[४३]एवमेतद् यथाह भवान् । शृणु मित्र !

आराधयिष्यति यदीश्वरमिन्दुमौलिं
श्रीकृष्ण आत्मजवराप्तय आशुतोषम् ।
निःसंशयं तनयरत्नशतानि लब्ध्वा
नो भक्तिकल्पलतिका विफलाऽत्र शम्भोः ॥ ३ ॥

एवं च सति एकोऽपि श्रीकृष्णः केनाप्यजय्यः पुनस्तादृश पुत्रशतान्वितस्तु देवानामप्यजय्यो भविता । ततस्ततः ।

शम्बरः—[४४]ततो भवदुक्तमेवाभिप्रायं मनसिकृत्य 'गुरुवर्याः ! शिरीषकुसुमसुकोमलाङ्गेन श्रीकृष्णेन तपोवनं गत्वा महेश्वराराधनं कर्तुमतिदुष्करं ततः कमप्यन्यमुपायं सन्तानाप्तये समाज्ञा

---

गर्गेण उक्तोपायस्याश्ङ्गस्येन फलाव्यभिचाराय पुना रुद्राभिषेकसहकारितया शैवमन्त्रेण कमलसहस्रार्पणविधिरुक्तो येन दुर्ग्रहादिप्रतिबन्धकनिवृत्त्या कारणानां कार्योत्पादसामर्थ्यमावेदितम् । प्रतिबन्धकाभावविशिष्टस्यैव कारणस्य कार्योत्पादकत्वात् ।

(४०) यथार्थोपायोपदेशश्रवणानन्तरं वसुदेवाध्यवसायं ज्ञातुमुत्ताम्यन् शिशुपालः पृच्छति 'ततः' इत्यादिना । (४१) तदुत्तरमाह शम्बरः—'गुरुवर्या' इत्यादिना वसुदेववचोनुवादेन ।

(४२) दन्तवक्त्रस्तु वसुदेवोक्तं श्रीकृष्णस्य तपस्यार्थं तपोवनप्रेषण निश्चयमाकर्ण्य 'महाननर्थ आपतित' इति वचनेन श्रीकृष्णकृतशिवाराधनेन तदिष्टसिद्धिमप्रत्यूहां शङ्कमानोऽनिष्टापत्तिमाह ।

(४३) तदाशयमाकलय्य शिशुपालोऽपि 'आराधयिष्यति यदी' त्यादि पद्येन शम्भुभक्तेः फलाविनाभावमावेदयन् दन्तवक्त्रशङ्कां द्रढयन् कैमुतिकन्यायेन श्रीकृष्णस्य पुत्रशतान्वितस्याजय्यतरत्वमाह ॥

(४४) शम्बरः पुनः स्वयुक्तेरकिञ्चित्करत्वं कथयन् कृष्णस्य तपोनुष्ठा-

पयिष्यन्त्यत्रभवन्तो भवन्तः ' इति साञ्जलिबन्धं मया प्रार्थिता गुरुवर्याः, वृद्धत्वसुलभरोषावेशाः सकम्पसकलशरीरा भृकुटीभङ्ग-भीषणाकृतयः ' रे रे पठितमूर्ख ! ब्राह्मणनिर्विशेषवेशाचारोऽपि कश्चिदसुरोऽसीति प्रतिभासि मे । विनाऽसुरप्रकृतिं को महेश्वराराधनं दुष्करमिति ब्रूयात् ? शृणु रे बालवुद्धे !

[45]यः केवलेन पयसा सितभस्मना वा
वन्यैः फलैरपि दलैः कुसुमैश्च भक्त्या ।।
आराधितः सकृदपि प्रददाति तुष्टो
वाञ्छाधिकान्यपि फलानि निजाश्रितेभ्यः ।। ४ ।।
[46]तं दयालुं सुखाराध्यं दुराराध्यं ब्रुवन् भवान् ।
आराधिताऽस्मचरणोऽप्यज्ञातज्ञेय एव हा ।। ५ ।।

---

नाशक्तिमिव वदतो मम गुरुः क्रोधाविष्टो भर्त्सनपूर्वं " रे रे पठितमूर्ख " इत्यादिना ' विनाऽसुरप्रकृतिं को महेश्वराराधनं दुष्करं ब्रूया ' दित्यन्तेन ज्ञातवानिवासुरंभावमाह ।।

( ४५ ) शिवस्याशुतोषत्वसमर्थनायाऽऽह य इति ।। केवलेन जलेन, भस्मना, वन्यैः फलैरमूल्यलभ्यैरित्यर्थः । दलैः पत्रैः कुसुमैश्चेति चकारो वार्थे । एकैकेनाप्येषामन्यतमेन सकृदेवाराधितः सन् तुष्टो वाञ्छितादप्यधिकानि फलानि प्रददाति । अत्र ' भक्त्या ' ' निजाश्रितेभ्यः ' इति पदद्वयेन भक्ति-भरेण समाश्रयणमेव शिवतोषजनकं न पुनस्तत्रोपचारसामग्रीप्राचुर्यमपेक्ष्यत इति ध्वनिः ।।

तथाच दीक्षितवर्याः—

अर्कद्रोणप्रभृतिकुसुमैरर्चनं ते विधेयं
प्राप्यं तेन स्मरहर ! पदं मोक्षसाम्राज्यलक्ष्मीः ।।
इत्थं जानन्नपि शिव शिव व्यर्थयन् कालमात्मन्
आत्मद्रोही करणविवशो भूयसाऽधः पतामि ।।

( ४६ ) समर्थितमर्थमनुवदति ' तं दयालुमिति' । सुखाराध्यमपि दुरा-राध्यं ब्रुवतो गुरूपासनावैफल्यं द्योतयति ' आराधितास्मचरणोऽपी ' त्यादिना । नहि कपटपाटवेन चाटुकाटवमपह्नोतुं क्षममिति श्रीकृष्णस्याहिताशंसी अहं गुरुभिर्ज्ञातमात्र एव ' नेतः परमत्रावस्थानं क्षेमावह ' मिति मत्वा गुरो रथा

अथवा श्रीकृष्णस्यापाततो हितैषितां दर्शयन् मनसात्वहितमेवाचरसीति मे प्रतिभाति ' इति वदन्नुत्थाय रथमारूढः । वसुदेवस्तु ' भगवन् क्षमस्व क्षमस्व, क्षन्तव्यं बालजल्पितं, सर्वं यथायुष्मदाज्ञमेवाऽहं करिष्यामीति ' वदन्नाऽऽद्वारदेशमनुव्रज्य निवृत्तः । अहं च पुस्तकभारं स्कन्धे निधाय सकम्पसकलगात्रो गुरोर्दृष्टिपातादात्मानं रक्षन् गुरुभुवने पुस्तकालये पुस्तकानि निःक्षिप्य पलायितः ।

शिशुपालः—[४७]मित्र ! भाग्यवानसि यद् रोषावेशवशेन गुरुणा ज्ञानदृशा—'कोऽयमस्ति '—इति न विलोकितम् । ततस्ततः ?

शम्बरः—[४८]ततोऽहमपि द्वारकाधीशस्यैतां प्रवृत्तिं सन्मित्रमणये तुभ्यं निवेदयितुमागतोऽस्मि । अतःपरं महाराजेन यथास्वेच्छं विधेयम् ।

शिशुपालः—[४९]सन्मित्रमणे ! शम्बर ! महता प्रयासेन सम्यग् रहस्यं गृहीतम् । तपस्तुष्टो महादेवस्तमवश्यं सत्पुत्ररत्नसहस्रसमन्वितं परमाभ्युदयनिःश्रेयसशालिनं च कर्त्तैव । ततोऽस्माभिस्तत्तपो भङ्ग एव विधेयः ।

दन्तवक्रः—[५०]तत्तपोभङ्गायाहमेव प्रयतिष्ये, न तद्विषये देवेन चिन्ता विधेया । ( इति ब्रुवन् निष्क्रान्तः )

शम्बरः—[५१]महाराज ! दन्तवक्रेण तपोभङ्गे कृते न काचित् कृष्णस्य

---

रोहणोत्तरमेव पुस्तकभारं गुरुगृहे निःक्षिप्य पलायितः । अनेन गुरुदृष्टिगोचरत्वे शापाशङ्कया पलायनमेव शरणं मन्वानस्य शम्बरस्यात्रागमनमिति सन्धिः ।

( ४७ ) शिशुपालस्तु, स्वज्ञानदृशाऽतीन्द्रियमपि ज्ञातुं समर्थस्यैतावता त्वत्तत्त्वजिज्ञासैव नोदितेति महद् भाग्यं तवेत्युक्त्वा श्रोतुमुत्क आह ततस्तत इति ॥

( ४८ ) शम्बर उपसंहरति ' द्वारकाधीशस्यैतां प्रवृत्तिं निवेदयितुमागत ' इति ॥

( ४९ ) इदानीं पुत्रप्राप्त्युपायानुष्ठानप्रवणं श्रीकृष्णमवगम्य चिन्तातुरः शिशुपालस्तत्तपोभङ्गमेव स्वाधीनमुपायं विदन् सूचयति ।

( ५० ) स्वामिकार्यमप्रेरितमेव कर्तुः सेवकस्योत्कर्षमाकाङ्क्षन्नाह दन्तवक्रः । ' तत्तपोभङ्गायाहमेव प्रयतिष्ये ' इति ।

( ५१ ) शम्बरस्तु दन्तवक्त्रप्रयोगस्य वैफल्यपक्षेऽपि जातानामपि पुत्राणां समुद्रे प्रक्षेपं प्रतिजानानः शिशुपालं प्रोत्साहयति महाराजेत्यादिना ।

कार्यसिद्धिर्भविष्यति, तथापि यदि कदाचित् कृष्णस्य पुत्रा भविष्यन्ति तर्हि रुक्मिण्यास्तु सर्वान् पुत्रानहं सूतिकागाराद् गृहीत्वा समुद्रे क्षेप्स्यामीत्यसंशयं मन्तव्यम् ।

शिशुपालः—मित्रमणे ! परमो मैत्रीधर्मः प्रदर्शितः ( इति वदन् सास्त्रं दृढमालिङ्गति )

शम्बरः—गच्छामीदानीं मन्नगरम् । ( इति ब्रुवन् प्रणम्य निष्क्रान्तः )

शिशुपालः—[५२]( स्वगतम् ) गतो दन्तवक्त्रः शम्बरश्च स्वस्वकार्याणि साधयितुं, तदहमपि कृष्णपरिभवकरणायाऽन्यानपि प्रेषयामि । ( इत्युक्त्वा निष्क्रान्तः ) ( विष्कम्भकः । )

( ततः प्रविशति वसुदेवो देवकी च )

वसुदेवः—[५३]देवि ! परमकृपापीयूषपारावारस्य श्रीपरमेश्वरस्य कृपया साम्प्रतं पराः सुखपरम्परा अनुभवामः ।

देवकी—[५४]आर्यपुत्र ! युक्तमुक्तं प्राणनाथेन । सोऽयं सर्वोपि प्रभावः श्रीपार्वतीप्राणनाथचरणपरिचर्यायाः । तदानीं क्व कंसकारागारनिवासदुःखानि, क्व जातमात्रतनुजप्राणप्रणाशविलोकनत्रासपरम्पराः, क्वाऽनेकपुत्ररत्नविरहानलजन्या दुःसहा हृदयसन्तापाः, क्व चेदानीं श्रीद्वारावत्यां मणिमयभव्यभवननिवाससुखानि, क्व श्रीकृष्णचन्द्रबलभद्रभद्रमुखचन्द्रदर्शनसुखपरम्पराः, क्व चाऽखण्डसौभाग्यवतीनां सौशील्यवसतीनां रुक्मिणीरेवतीप्रभृति–वधूनां सानन्दवदनचन्द्रविलोकनानन्दः । किमेतत् सर्वं, विना विश्वेश्वरकृपावलोकलहरीः सम्भवति ?

---

( ५२ ) दन्तवक्त्रशम्बरयोर्गमनानन्तरमनन्तरकरणीयं विचारयन् शिशुपालः श्रीकृष्णपरिभवमेव मनसिकृत्योपायान्वेषणव्यापाराय निष्क्रान्तः ( विष्कम्भकः )

( ५३–५४ ) वसुदेवः सुखपरम्परानुभवस्य परमेश्वरप्रसादनिदानकत्वमाह । तदेव देवकी कंसकारागारवासादिपूर्ववृत्तानुकथनपूर्वं द्वारवतीराज्यावाप्तिमारभ्य रुक्मिण्यादिपुत्रवधूसुखावलोकनान्तेन वृत्तान्तोपन्यासेन समर्थयति । निगमयति च 'किमेतत्सर्वं विनाविश्वेश्वरकृपावलोकलहरीः सम्भवेत्' इति काकूक्त्या ।

वसुदेवः—[५५]सत्यं देवि ! सत्यं, श्रीसदाशिवपदारविन्दपरिपूजाया एवाऽयं प्रभावः ।

([५६]ततो रुक्मिणीप्रमुखा अष्टौ पट्टराज्ञ्यः प्रविश्य स्वस्वाभिधान ग्रहणपूर्वं प्रणमन्ति)

देवकीवसुदेवौ—वत्साः ! श्रीमदपर्णाप्राणप्रियप्रसादेनाखण्डसौभाग्य वत्यः सत्पुत्रफलप्राप्तिमत्यश्च भूयास्त ।

रुक्मिण्यादयः—[५७]श्वशुरचरणसेवामेव तीर्थानि विद्मो

निजपतिमनुवेलं श्रीपरेशं च विद्मः ॥
यदि हृदि सपदि श्रीशैलजेशस्तदानी-
मभिलषितमशेषं यच्छतु श्रीमहेशः ॥ ५ ॥

( इत्युक्त्वा पुनः प्रणम्योपविशन्ति सर्वाः । )

देवकी—[५८]प्राणनाथ ! यद्यपि भगवता भक्तवत्सलेन श्रीचन्द्रचूडेन पूरिता नः सर्वे मनोरथास्तथापि पौत्रमुखदर्शनसुखान्यनुभवितुं नितरामातुरतरा मे दृष्टिः ।

वसुदेवः—( [५९]स्वगतम् ) अस्माकं कुलगुरुभिः श्रीगर्गाचार्यैर्यत् सत्पुत्ररत्नप्राप्तय उपदिष्टं तत् स्वीकारयितुमयमवसरः ।

---

( ५५ ) वसुदेवः पुनस्तदेव दृढयति देवकीवचनानुवादविधया ।

( ५६ ) रुक्मिण्यादिपट्टराज्ञ्यष्टकप्रवेशो हि अत्रावसरे श्रीकृष्णचन्द्राभ्युदयस्य पुत्रलाभलक्षणस्य काव्यार्थबीजभूतस्य वापार्थं देवकीवसुदेवोक्ताशीर्वचनरूपक्षेत्रीकरणसंस्कारद्वारा वस्तूद्भेदाङ्गोपक्षेपप्रयोजनः ।

तदुक्तमभियुक्तैः—

आशीरूपेण भाव्यर्थसूचनं यत्र जायते ।
वस्तूद्भेदाख्यमङ्गं तन्नाटकेषु निगद्यते ॥

( ५७ ) अत्र रुक्मिण्यादीनां वचने श्वशुरपदमेकशेषाभिप्रायेणोभयपरम् । तथाच श्वशुरयोस्तीर्थबुद्धया पत्यौ च परेशबुद्धया परेशप्रसादस्तेन चाभिलषितसिद्धिरप्रत्यूहेति साश्वासं पुनः प्रणामोपवेशने ।

( ५८ ) देवकीमुखादपि पौत्रमुखदर्शनाभिलाषप्रदर्शनेन मनोरथाकारः स्फुटीकृतः ।

( ५९ ) वसुदेवः स्वगते गुरूपदिष्टप्रकारस्वीकारणायावसरं विदन्

(प्रकाशम्) प्रिये ! सत्यमुक्तं देव्या । कोहि कल्याणेभ्यः परितृप्यति ? परमेतदर्थं वत्सेन श्रीकृष्णचन्द्रेणैव परमया भक्त्या श्रीमहेश्वराराधनं विधेयं येन सद्य एव सर्वासामेतासां सत्पुत्ररत्नप्राप्तिर्भविष्यति ।

देवकी—[६०]प्राणनाथ ! सत्यं भवत्वार्यपुत्रस्य वचनं, परमिदानीं दर्शनागताय श्रीकृष्णचन्द्राय देवेनैव स्वयं सत्पुत्रप्राप्तिफलदः श्रीसाम्बसदाशिवपूजनप्रकार उपदेष्टव्यो; न खलु गुरुजनगौरवविनम्रो लोकलज्जाजलनिधिश्च स्वयं कदाचिदपि तादृशं प्रश्नं करिष्यति ।

वसुदेवः—[६१]देवि ! तथा करिष्यामि, मा चिन्तां कुरु ।

(नेपथ्ये-)

[६२]संसारातपतापतप्तमनसां निःशेषसन्तापहा
स्वीयस्वान्तचकोरपोषणपरो विश्वम्भराह्लादकः ॥
दैत्यध्वान्तनिवारणैकनिरतो नित्यं प्रवृद्धोदयः
श्रीकृष्णोऽद्भुतचन्द्रमा विजयते राजाधिराजाधिपः ॥ ६ ॥

इन्द्रादयोऽमरवरा मुनयो महीन्द्रा
नत्वा प्रभोः पदयुगं ददताऽऽशुमार्गम् ॥
देवर्षिणाऽनुगत एष महाप्रभुः श्री—
पित्रोः समीपमुपसर्पेति भक्तियुक्तः ॥ ७ ॥

---

देवकीमनोरथत्वेन स्वमनोरथमाविष्कुर्वन् सत्पुत्ररत्नप्राप्तिमतिनिश्चितामचिरेण च बोधयितुं श्रीकृष्णकर्त्तृकमहेश्वराराधनमुपायं निर्दिश्य तदर्थं तपोवनगमनानुज्ञासम्पादनाय देवकीमुत्तेजयति ।

(६०) देवकीतु श्रीकृष्णस्य लज्जाविनयादिवशेन सङ्कोचशालिस्वभावतया तदभ्यर्थनावेक्षणमन्तरेण स्वयमेव तादृशोपायोपदेशः कर्त्तव्य इति सानुरोधं वसुदेवमुद्बोधयति 'प्राणनाथ' इत्यादिना ।

(६१) वसुदेवस्तु 'तथा करिष्यामीति' देवकीमाश्वासयति ।

(६२) नेपथ्ये श्रीकृष्णस्य नारदेन महर्षिणा सह प्रवेशसूचनार्थं तस्याद्भुतचन्द्रमस्त्वप्रत्यायनाय साङ्गपरम्परितरूपकमुपवर्णयति । संसारातपतापतप्तमनसामित्यादि ।

(अन्यतः) जय जय जय जीव पाहि पाहि प्रणतजनप्रिय पाहि नः स्वकीयान् ।
निरवधिकरुणासुधैकसिन्धो नहि भवतः परमस्ति दैवतं नः ॥८॥

वसुदेवः—([६३]साश्चर्यानन्दम्) देवि ! एकतः श्रीकृष्णचन्द्रस्याग्रे प्रधावतां सुवर्णवेत्रिणां कोलाहल, इतरतश्च श्रीकृष्णचन्द्रं प्रणमतां मुनीनां मनुजानां च श्रूयते कोलाहलस्तन्मन्येऽधुनैव समागच्छति वत्सः कृष्णचन्द्र इति ।

देवकी:—[६४]प्राणनाथ ! एवमेव, महामुनिना नारदेन सहाऽऽगच्छतीति परमं प्रियं नः ।

(ततः प्रविशति नारदः)

नारदः—[६५]जयतु जयतु देवो देवकीनन्दनोऽयं
जयतु जयतु देवो वासुदेवोऽन्तरात्मा ॥
जयतु जयतु देवो देवदेवाधिदेवो
जयतु जयतु देवः श्रीयुतः कृष्णचन्द्रः ॥ ९ ॥

देवकीवसुदेवौ:—([६६]सहसैवोत्थाय) अहो भगवान्नारदः समागतः । महद् भाग्यं नः ॥
सुरासुरशिरोरत्न—राजिनीराजिताङ्घ्रये ॥
श्रीमत्सुरर्षये तुभ्यं प्रणमावो मुहुर्मुहुः ॥ १० ॥

नारदः—आर्यौ !
[६७]जगत्पितामहस्यापि पितुर्यौ पितरौ युवाम् ।
अस्य श्रीकृष्णचन्द्रस्य तयोः कुर्याच्च शिवः शिवम् ॥ ११ ॥

---

(६३) वेत्रिणां, जय जयेत्यादि च मुनीनां वाक्यमाकर्ण्य वसुदेवः श्रीकृष्णचन्द्रस्य मुनिभिः सहागमनं शङ्कते 'मन्येऽधुनैवेति' ।

(६४) देवकी नारदस्य सहागमनं प्रियं मत्वाभिनन्दति परममिति ।

(६५) नारदः प्रविश्य, देवकीनन्दनपदेन मातृभक्तत्वं, वासुदेव पदेन पितृभक्तत्वं, देवदेवाधिदेवपदेन शिववरप्राप्तं सर्वाधिकत्वं, श्रीयुतः कृष्ण चन्द्र इति पदाभ्यां च लक्ष्मीवल्लभत्वपर्यन्तोदयं च प्रदर्शितवान् जयकथन पूर्वकमिति ।

(६६) अत्र 'सुरासुरेत्यादि' विशेषणेन जगद्वन्द्यत्वं देवर्षेरुक्त्का मुहुः प्रणामस्य विशेष उपपादितः ।

(६७) जगतां पितामहस्य ब्रह्मणो यः पिता नारायणस्तस्य श्रीकृष्ण-

( प्रविश्य श्रीकृष्णः )

श्रीकृष्णः—[६८]अदूरगमनं तीर्थं सुधावर्ष्यसुधाकरम् ।
दैवतं चाऽतपस्तुष्टं पित्रोर्वन्दे दयेक्षणम् ॥ १२ ॥

वसुदेवः—[६९]वत्स ! दीर्घायुरारोग्य-पुत्रपौत्रप्रपौत्रवान् ।
श्रीमहेशप्रसादेन सुखी भूया निरन्तरम् ॥ १३ ॥

देवकी—[७०]सम्प्राप्तसत्पुत्रफलैः कान्ताकल्पलताशतैः ।
वृतः कल्पतरुर्भूया अर्थिनामखिलार्थदः ॥ १४ ॥

नारदः—[७१]आर्यौ ! सत्यानि सन्तु त्वरया युवयोराशीर्वचनाक्षराणि ।

वसुदेवः—[७२]मान्य महामुने ! कदा भवन्तः समागताः कुतश्च समायाताः ?

---

त्वेनावतीर्णस्य यौ युवां पितरौ, तयोः शिवं कल्याणं शिवः कुर्यादिति सम्बन्धः। अत्र देवकीवसुदेवयोः श्रीकृष्णमातापितृत्वेन महिमानं प्रकटयतो मुनेराशीरुच्चारणेन तयोरेव शिवाभ्यर्थनेन श्रीकृष्णचन्द्रस्य स्वाधीनसिद्धिकस्यानपेक्षमेव कल्याणमयत्नसिद्धमित्यभिसन्धिः ।

( ६८ ) अदूरगमनं दूरगमनानपेक्षं तीर्थं, सुधाकररहितं सदेव सुधावर्षि, तपोनुष्ठानानपेक्षमेव तुष्टं परं दैवतं, मातापित्रोर्दयेक्षणं दयार्द्रमवलोकनं वन्दे, प्रह्वीभावगोचरीकरणेन भावये इत्यर्थः ।

( ६९ ) अत्राशीर्वचने दीर्घायुःपदेनापरितोषं विदन्नारोग्यमनन्तरमेवाह । यतश्चरकाचार्येण—नह्यतः पापात् पापीयो यदनुपकरणस्य दीर्घमायु—रिति ब्रुवता अनुपकरणपदमनारोग्यस्याप्युपलक्षणमिति विवृण्वता च आरोग्यासहकृतस्य दीर्घायुषोऽनिष्टत्वबोधनात् । पुत्रपौत्रप्रपौत्रवान् इतीदमाशीःपदं पुरुषार्थोत्कर्षप्रापणाय । यथाह मनुः—

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥

( ७० ) वसुदेववचनापेक्षया देवकीवचने कल्पतरुत्वाशीरूपे सत्पुत्रेषु फलत्वारोपेण कान्तासु च कल्पलतात्वारोपेण कल्पलताकल्पवृक्षयोर्योगेनार्थिनामखिलार्थदो भूया इत्यन्तेन परम्परितरूपकगर्भकथनेन, सम्पल्लाभो हि पात्रप्रतिपत्तिफल एव पुरुषार्थतापर्यवसितो नान्यथेति ध्वनिरूपोऽतिशयः ।

( ७१ ) नारदकृतमनुमोदनमुभयोरुत्साहप्रवर्द्धनाय ।

( ७२ ) मुनिदर्शनजन्यसम्भ्रमवशादेतावत्पर्यन्तं श्रीकृष्णविषयिणी चिन्तोपक्रान्ताऽनुवृत्ता इदानीं पुनः ऋषिं 'कदा कुतश्चागता' इति पृच्छति ।

नारदः—' पितरौ ' ( इत्यर्द्धोक्ते )

वसुदेवः—[७३]अयुक्तमयुक्तमुक्तमेतन् महामुनिना ।

नारदः—[७४]मद्वृत्तान्तं पश्चात् कथयिष्यामि, प्रथमं तु किमयुक्तमुक्तं मयेति भवद्भ्य एव श्रोतुमिच्छामि ।

वसुदेवः—[७५]भगवन् ! मान्यानामपि मान्येन साक्षाद् ब्रह्मपुत्रेणाऽत्र भवता ब्राह्मणकुलपादपद्मरजःपरमाणू आवां प्रति ' पितरौ ' इति सम्बोधनमयुक्तमेवोक्तम् ॥

नारदः—( [७६]प्रहस्य )

ब्रह्मा साक्षान् मम पिता तस्य नारायणः पिता ।
स साक्षात् कृष्णचन्द्रोऽयं तस्यापि पितरौ युवाम् ॥ १ ॥

अतो लोकत्रयेऽपि केषां युवां 'पितरा' विति न सम्बोधनार्हौ ?

वसुदेवः—[७७]तत् सर्वं तस्यैव मायाविलसितं । क ' साक्षादजोऽनन्तः शाश्वतोऽयं पुराणः साक्षी चेताः केवलो निर्गुणश्चे ' त्यादि पदैर्

---

( ७३ ) तदुत्तरदानाय यावन्नारदः ' पितरा ' विति सम्बोध्योपक्रमते तावदेव ' पितरौ ' इति स्वसम्बोधनमयोग्यं मन्वानो वसुदेवस्तद्वचनावसानमप्रतीक्ष्यैव मध्ये ' अयुक्त ' मित्यादिना मुनिं वैदग्ध्यभङ्गमानयति ।

( ७४ ) नारदः स्ववृत्तान्तप्रश्नोत्तरमदत्त्वैवान्तरोपनीतमयुक्तत्वमेव परिजिहीर्षुराह प्रथमं त्वित्यादिना ।

( ७५ ) अत्र वसुदेवः—

दशवर्षं ब्राह्मणं च क्षत्रियं शतवार्षिकम् ।
पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता ॥

इति मनुवचनमनुसन्दधानः साक्षाद्ब्रह्मण आत्मजे गौरवमाभाष्य स्वोक्तं नारदवचसोऽयुक्तत्वं समर्थयति ।

( ७६ ) नारदस्तु तस्य परमात्मतत्त्वानभिज्ञत्वं पुरस्कृत्य प्रहासपूर्वमाह ब्रह्मेत्यादि । अत्र स्वपितुरात्मयोनेरपि परमकारणस्य नारायणस्य श्रीकृष्णत्वेनावतीर्णस्य जनकतया मम पितुरपि पितामहकल्पयोर्युवयोर्युज्यत एव पितराविति सम्बोधनं मदीयमिति नात्रायुक्तत्वसम्भावनापि । लोकत्रयेऽपीति कैमुतिकसिद्धमर्थमनूद्य स्वोक्तं सत्यापयति ।

( ७७ ) नारदोक्तमूरीकुर्वन्निव ' अजोऽनन्त ' इत्यादिलक्षणस्य

निरूपणीयो नारायणः, क्व चावां यदुकुलसागरतरङ्गपरम्पराशीकरौ, तयोर्गृहे तादृशस्य परमात्मनो जन्मवार्त्तापि सम्भवेत् ? तत एव तन्मायाविलासितमेतदखिलमिति मन्येऽहम् ॥

नारदः—[७८]यावत्तस्य तादृशं मायाविलसितं तावदस्माभिरपि तदनुसारेणैव वर्त्तितव्यम् । किञ्च—कार्यभेदेनाऽधिकारभेदः । यदाऽस्माकं धर्मोपदेशदानायाऽऽगमनं भवेत्तदा वयं गुरवो, यूयं च शिष्याः । यदा चाऽस्माकमनेन कृष्णचन्द्रेण सह मैत्रीरससुखानुभवायाऽऽगमनं भवेत्तदा यूयं गुरवो वयं गर्भरूपाः । अतो न किञ्चिदयुक्तम् ।

वसुदेवः—[७९]भगवन् ! सङ्कल्पमात्रेणाऽनन्तब्रह्माण्डनिर्माणनिपुणस्य श्रीपरमेष्ठिनः पुत्रस्य तवाऽग्रे के वयमुक्तिप्रत्युक्तिकल्पनायां ? तत्प्रकृतमेवानुसृत्य कृतार्थय माम् ।

नारदः—[८०]यथाज्ञाऽऽर्यस्य । अहं खलु ब्रह्मलोकाद् भवदीयगेहे पुत्रतां प्राप्तस्यास्य श्रीकृष्णचन्द्रस्यैश्वर्यवैभवादिसमृद्धीर्विलोकयितुं मासादर्वागत्र समागतोऽस्मि ।

---

नारायणस्य जन्मवार्त्तापि सम्भवातिगा तत्रापि यदुकुलसागरशीकरतुल्ययोरावयोर्गृहे परमात्मनो जन्मेति विस्मयमादर्श्य तदेतत्सकलं तस्यैव मायाविलसितमिति भगवतो जन्मादि मायाविलसितपदेनाभिलपति वसुदेवः ।

( ७८ ) वसुदेवोक्तं मायाविलसितमेवाग्रे धृत्वा वाङ्मनसयोरगोचरस्य चिद्विलासस्यानवसरमेव प्रकटय्य व्यवहारानुसरणव्याजेन कार्यभेदप्रयुक्ताधिकारभेदं शास्त्रसिद्धमाह ॥ तदेव विशदयितुं ' यदे ' त्यादि निरूपणम् । तथाच अन्यदा देवर्षित्वोपाधिकमस्तु गुरुत्वमस्माकमिदानीं तु श्रीमत्पुत्रस्य मित्रत्वेनागतस्य मम श्रीकृष्णसमानकक्षतया गर्भरूपतैव, ततश्च न किञ्चिदयुक्तमिति निगमनम् ।

( ७९ ) नारदोक्तपरिहारस्यानुत्तरविधेयतामाकलय्य प्रत्युक्तिमदत्त्वैव प्रकृतानुसरणाय प्रेरयति वसुदेवः । अत्र नारदस्य परमेष्ठिपुत्रताकथनं तादृक्सङ्कल्पसृष्टिनिर्माणनैपुणं पितरि विद्यमानमवश्यं पुत्रेऽपि तत्समानजातीयं कमप्यतिशयमुपजनयति, कारणगुणाः कार्यमुपसङ्क्रामन्तीति न्यायात् । अतश्च के वयमुक्तिप्रत्युक्तिकल्पनायामिति वचनं, तवाग्रे वयमसमर्था वक्तुमित्यभिप्रायकम् ।

(८०) आगमनोद्देशं स्पष्टमेव कथयति नारदः । अहं खल्वित्यादिना ।

वसुदेवः( [८१]साश्चर्यम् ) अहो !! मासादर्वाक्समागतेनापि भगवताऽहं तु इदानीमेव दर्शनदानेनानुगृहीत इति चित्रम् ।

नारदः—[८२]न तद्विषये जनोऽयमुपालम्भपात्रं किन्तु भवदीयपुत्रस्यास्य श्रीकृष्णचन्द्रस्य मनोवचोऽगोचरा ऐश्वर्यविभवसमृद्धय एवोपालम्भपात्रं; यासां प्रतिदिनमासूर्योदयादासूर्यास्तं विलोक्य विलोक्याऽपि मासेनाप्यपाराणां पारो न मयाऽऽसादितस्तत्प्रवृत्तिपरतन्त्रतया च न युष्मत्समीपमुपसर्त्तुं प्राभवं तत् क्षन्तव्यम् ।

वसुदेवः—[८३] तादृशविभवसम्पत्प्राप्तिः श्रीचन्द्रचूडप्रसादेन भवादृशां महामुनीनामाशिषा चेति मन्येऽहम् ।

नारदः—[८४]आर्य ! किं वर्णये भवदीयपुत्रविभवमहिमानम् ।

नैन्द्रे पुरे न च कुबेरपुरे प्रचेतःपुर्यां न धर्मसदनेपि च यन्न दृष्टम् ।
तद्वस्तु ते तनयसद्मसु रम्यरम्यं सर्वं विलोकितमलौकिकमद्भुतं च ।१६।

---

( ८१ ) मासमतीतोऽपि नैतावत्पर्यन्तं दृष्ट इत्याश्चर्यनिदानम् । तदेव मुनेरपराधहेतुताभिवापादयन्नुपालभते चित्रमित्यन्तेन ।

( ८२ ) नारदस्तु श्रीकृष्णमेवोपालम्भपात्रतां नयँस्तद्व्याजेन श्रीकृष्णवैभवस्य मनोवचोऽगोचरत्वकथनपूर्वकमपारत्वमाह ।

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ गी० अ० १० श्लो० ४०

इति भगवता स्वयमेव गीतासु निरूपितं विभूतीनामानन्त्यमनूद्य स्वस्यानपराधत्वे समर्थितेऽपि क्षन्तव्यमिति क्षमाभ्यर्थना, वृद्धेषु विनयपारतन्त्र्यमावेदयति । सन्तो हि माननीयेषु नित्यमात्मानमपराधिनमेवाऽऽशङ्कमानाः क्षमाभ्यर्थनादि समुचिताचारपरिपालनपरिपाटीमप्रमादेनाऽनुरुन्धन्ति ।

( ८३ ) हर्षप्रकर्षावसरेऽपि महात्मनामीश्वरानुग्रहानुभावनं प्राकृतं स्मयं प्रतिबध्नाति । तदेव वसुदेव आह ' तादृशविभवसम्पत्प्राप्तौ हेतुः श्रीचन्द्रचूडप्रसादस्तत्सहकारिणी भवादृशामाशीरेवे ' ति ।

( ८४ ) नारदस्तु पुनरपि प्रकृतं विभवमेव वर्णयति । आर्य इति । भवदीयपुत्रविभवमहिमानं किं वर्णये ? वर्णनातिगो हि तन्महिमेत्यर्थः । तदेव विशदयति । नैन्द्र इति । ऐन्द्रे पुरे स्वर्गे इत्यर्थः, कुबेरपुरेऽलकायां, प्रचेतःपुर्यां—वरुणनगर्यां, धर्मसदने—यमनगर्यां, यन्न दृष्टं तद्वस्तु श्रीकृष्णसद्मसु अलौकिकाकार

किम्बहुना—

[८५]नोर्द्ध्वं सर्वेषु लोकेषु नाऽधः सर्वेषु या मया ॥
दृष्टा, दृष्टास्तु ताः सर्वाः श्रियः श्रीकृष्णसद्मसु ॥ १७ ॥

वसुदेवः—( [८६] दीर्घमुष्णं च निःश्वस्य ) आः किन्ततोऽपि।

नारदः—[८७]आर्य ! कथमेवमपरिमितविभवविभूषितेष्वपि स्वपुत्रभवनेषु न सन्तोषं भजति मानसं वः ?

वसुदेवः—मान्यमुनीन्द्र !

[८८]नवरत्नमयानि मन्दिराणि प्रमदारत्नशतावृतानि चेत् स्युः ॥
अतुला विभवोच्चयाश्च किन्तैर्यदि दोला नहि वालकेलिलोला ॥१८॥
[८९]हसितेन्द्रगजा गजा यदि स्युर्विजितेन्द्रार्करथा रथा अथाश्वाः ॥
अनिलोत्तमवेगिनोऽपि तैः किं यदि दोला नहि वालकेलिलोला ॥१९॥

---

समद्भुतं च सर्वं विलोकितमिति श्रीकृष्णसम्पदां व्यतिरेकबोधनेन सर्वातिशायिवैभवप्रयुक्तप्रमोदावसरो दत्तः।

( ८५ ) प्रमोदावसरं प्रवलयितुमाह किम्बहुनेत्यादि। ऊर्द्ध्वाधोविभागेनावस्थितेषु चतुर्दशस्वपि भवनेषु श्रीकृष्णसद्मश्रीसादृश्यमपि नावलोक्यते एवञ्च श्रीकृष्णसम्पदामुत्कर्षवर्णनं कियताप्यंशेन न शक्यते कर्त्तुमिति भावः।

( ८६ ) सम्पदुत्कर्षश्रवणसमनियतमाकाङ्क्षिततमवस्तुस्मरणमत्र दीर्घोष्णनिःश्वासनिदानतामावहति तदुद्गाराक्षराणि ' आः !! किन्ततोऽपी ' त्यादीनि।

( ८७ ) प्रमोदावसरेऽपि निःश्वासः कश्चिदसन्तोषं मनसि स्थितं गमयतीति नारदः अपरिमितविभवविभूषितेषु इति स्वपुत्रभवनानां विशेषणमुपाददानः, सन्तोषहेतावपि सन्तोषाजननलक्षणां विभावनामाविष्कुर्वन् पृच्छति कथमिति।

( ८८ ) इदानीं वसुदेवः स्वमनसि स्थितां सुतवैभवन्यूनतां मुनिप्रश्नोत्तरव्याजेन प्रकटयँस्तदुपायानुष्ठाने मुनेरनुमोदनमर्थयमान इव श्लोकाष्टकेन प्रस्तावमुपदर्शयति। नवरत्नमयमन्दिरादिभिरपि किं ? यदि क्रीडद्भिर्बालकैर्लोला—चला दोला—बालशयनीया चेन्नास्ति।

( ८९ ) उक्तविशेषणोपलक्षितैर्गजाश्वरथैरपि किं ? यदि वाललोला दोला नास्ति।

[१०]वसनाभरणानि दिव्यदिव्या—
न्यपि कोशा हसितालकेशकोशाः ॥
विलसन्ति गृहेषु चेत् ततः किम् ।
यदि दोला न हि बालकेलिलोला ॥ २० ॥
[११]विजितेन्द्रसभा सभा गृहे चेत्
प्रबलानीह बलानि दुर्जयानि ॥
सुहृदः सुहृदश्च चेत् ततः किम् ।
यदि दोला न हि बालकेलिलोला ॥ २१ ॥
[१२]अखिलं जगदेव शून्यवत् हृदये तस्य विभात्यहर्निशम् ।
मनुजस्य तु यस्य मन्दिरे विलसन्तीह न बालकेलयः ॥ २२ ॥
[१३]तनयातनयाननेन्दवोऽभ्युदयन्ते भवनेषु येष्वलम् ॥
भवनानि तु तानि तान्यहो शिशुशून्यं भवनं वनं मतम् ॥ २३ ॥
[१४]मुने ! श्रीकृष्णस्योल्लसति परमा सद्मसु रमा
सदा सम्पूर्णास्ते धनदनिधयो निस्तुलधनाः ॥

---

( १० ) दिव्येष्वपि दिव्यभावभाञ्जि वसनान्याभरणानि, अलकेशस्य कुबेरस्य कोशान् स्वतो निकृष्टत्वेन हसन्तः कोशाश्च सन्तु तैरपि किम् ? यदीत्यादि पूर्ववत् ।

( ११ ) सुधर्मापेक्षयाप्युत्तमाः सभाः प्रबलानि च बलानि सैन्यानि शोभनान्तःकरणाश्च सुहृदः स्युस्ततोपि किम् ! यदीत्यादि पूर्ववत् ।

( १२ ) यस्य मनुजस्य मन्दिरे बालकेलयो न विलसन्ति तस्य हृदये अखिलं जगत् अहर्निशं शून्यवदेव विभाति इति सम्बन्धः ।

( १३ ) एतावता बालक्रीडाविरहितवेश्मनामनभ्यर्हिततमत्वमुक्त्वा-बालदोलाव्यतिरेकेण च मणिमयभवनादिसुहृत्पर्यन्तस्य सकलस्यापि वैभव-सम्भारस्य आक्षेपार्थककिमाऽपुरुषार्थपर्यवसायित्वमाभाष्य तदेव पुनरन्वय-व्यतिरेकमुखेन द्रढयति । येषु भवनेषु तनयानां पुत्रीणां तनयानां पुत्राणां च आननेन्दवो मुखचन्द्रा अभ्युदयन्ते, अहो—याथार्थ्येन तान्येव भवनानि, शिशु-शून्यं भवनं तु न भवनपदाभिलप्यतार्हं किन्तु तद्भवनं वनं वनतुल्यं मतम् ।

( १४ ) एतावत्पर्यन्तं सामान्येन वर्णितोऽर्थः पुनरिदानीं स्पष्टमेव श्रीकृष्णोद्देशेन वर्ण्यते—'मुने' इत्यादिना । अस्मिन् पद्येऽनुक्तमपि 'यद्यपि' इतिं

फलैर्नम्राः कम्राः प्रतिपदममी कल्पतरव—
स्तथाप्येनं मन्येऽभ्युदयमखिलं हा खिलमिव ।। २४ ।।

[१५]नमन्ति क्ष्मापाला मणिगणमयोपायनकराः ।
सदैव श्रीकृष्णप्रणयरससम्पूर्णहृदयाः ।
मुदा तं सेवन्ते श्रिय इव पराः सुस्त्रिय इमाः
विना पुत्रैर्मन्येऽखिलमुदयमेनं खिलमिव ।। २५ ।।

नारदः—( [१६] स्वगतम् ) अहो पितृचरणानां पौत्रमुखचन्द्रदर्शनस्पृहयालुता काऽप्यद्भुतैव भवति । ( प्रकाशम् ) आर्याः ! तर्हि तद्विषये किं विधेयम् ?

वसुदेवः—[१७]तदेवोच्यते—( श्रीकृष्णमुद्दिश्य )

वत्स ! श्रीकृष्ण ! सत्पुत्र–रत्नानां प्राप्तयेऽधुना ।
पुत्रपौत्रार्थदं शम्भोश्चरणं शरणं व्रज ।। २६ ।।

---

पदमध्याहार्यम् । तथाच यद्यपि श्रीकृष्णस्य गृहेषु परमा रमा, सर्वोत्कृष्टा लक्ष्मीर्वरीवर्त्तीत्यर्थः । किञ्च निधयोऽपि निस्तुलधना अतुलधनाः, फलैर्नम्रा अत एव कम्रा मनोहराः कल्पतरवश्च पदे पदे दृश्यन्ते तथापि एनमखिलं कृत्स्नमपि अभ्युदयं, हा इति खेदे खिलमपरिपूर्णमिव मन्ये ।

( १५ ) अपिंच मणिगणप्रचुरोपायनहस्ता राजानो नमन्ति, कुतः सदैव श्रीकृष्णप्रणयरससम्पूर्णहृदयाः । इमाश्च सुस्त्रियः साक्षादवतीर्णाः श्रिय इव तं कृष्णं मुदा—परमेण प्रेम्णा सेवन्ते तदपि पुत्रैर्विना एनं सकलमुदयं खिलमिव—अपूर्णमिव मन्ये ।

( १६ ) नारदः स्वगते वसुदेवस्य पौत्रमुखदर्शनाकाङ्क्षामत्युत्कटामालक्ष्य श्रीकृष्णाभ्युदयैषितया तदुपायविवित्सया पृच्छति तर्हीत्यादिना ।

( १७ ) किं विधेयमित्यस्यैवोत्तरमाह ‘ तदेवोच्यत ’ इत्यादिना वसुदेवः । वत्सेति श्रीकृष्णेति च सम्बोधनद्वयं वात्सल्यप्रेरितेन स्वयमेव बोधनार्थमुद्यतेनांतरा श्रीकृष्णपदोपादानेनोपदेशग्रहणयोग्यतयानुष्ठाननिश्चयादभीष्टलाभस्य नैयत्यं सूच्यते । शम्भोश्चरणं शरणं व्रज शरण्यत्वेनाश्रयेत्यर्थः । अधुनेति पदेन विलम्बासहत्वं, सत्पुत्ररत्नानां प्राप्तये इति कामनानिर्देशः, पुत्रपौत्रार्थदमिति चरणविशेषणमाश्रयितुरिष्टार्थदानोचितसामर्थ्यं चरणस्य व्यनक्ति ।

[९८]न श्रीमहादेवमहानुग्रहभाजनतामनासाद्य जनता
स्वाभिलाषसिद्धिमधिगच्छतीति नाऽविदितं वत्सस्य ।

[९९]श्रीरोहिणीरमण आशु यमाशुतोषं
श्रीशैलजापतिमुपास्य दयापयोधिम् ॥
कान्त्या स्वया विमलयाऽतुलया च कीर्त्या
युक्तो बभूव भयदामयराजमुक्तः ॥ २७ ॥

[१००]धीमान् विरिञ्चिरपि यश्च चिरं निषेव्य
वेदानवाप चतुरश्चतुरोऽपि साङ्गान् ॥
लोकत्रयस्य च पितामहतामलभ्या—
मभ्यर्थितानि च पराणि परःशतानि ॥ २८ ॥

[१०१]श्रीमाननन्यशरणः करुणामृताब्धिं
संसेव्य यश्च तपसा परमेण भक्त्या ॥
लोकत्रयीपतिरभूत् सकलामराणां
वन्द्यो रमापतिरुमापतिवल्लभश्च ॥ २९ ॥

---

( ९८ ) तदेव व्यतिरेकविधया दृढयति । अनासादितश्रीमहादेवानुग्रहा जनता स्वाभिलाषसिद्धिं नाधिगच्छतीति विदितमेव भवत इत्यर्थः ।

( ९९ ) इदानीं स्ववंशमूलभूतस्य चन्द्रस्य राजयक्ष्मोपशमः श्रीशिवराधनेनैव जात इति बोधयितुमुपक्रमते। श्रीरोहिणीरमण इति । दयापयोधिमाशुतोषमिति पदद्वयी आराध्यतां पुष्णाति । योहि न दयालुः कृच्छ्रेण तुष्यति न तमाराधयितुं कोऽप्युत्सहेत । तादृशं यमुपास्य भयदान्मृत्युभयदायकादामयराजाद्यक्ष्मणो मुक्तः स्वया कान्त्याऽतुल्या कीर्त्या च युक्तो बभूवेति सम्बन्धः ।

( १०० ) धीमान्—बुद्धिसमष्टयभिमानी हिरण्यगर्भो विरिञ्चिरपि यं परशिवं चिरं निषेव्य साङ्गाँश्चतुरो वेदान्, अन्यैरलभ्यां लोकत्रयपितामहतां परःशतानिच पराणि अभ्यर्थितानि वांछितानि अवाप ।

( १०१ ) किञ्च रमापतिः श्रीनारायणोऽपि परमेण तपसा भक्त्या च यमेव करुणाब्धिं संसेव्य लोकत्रयीपतिः सकलामराणां वन्द्य उमापतिवल्लभश्च अभूत्। एवंविधवरलाभे योग्यताबोधकं श्रीमान् अनन्यशरण इति विशेषणद्वयम्।

नारदः—(१०२स्वगतम्) अहो वसुदेवस्य महेश्वरे भक्तिरसातिरेकः कोऽप्यपूर्व एव ।

श्रीकृष्णः—(स्वगतम्)१०३ तपोवनगमनानुमोदनमिदानीमनायासेन जातम् ।।

वसुदेवः—१०४श्रीमन्महेश्वरमुमासहितं दयाब्धिं
प्रेम्णा समर्चय समर्चय वत्स ! नित्यम् ।।
तस्याशुतोषहृदयस्य दयावलोकैः
सत्पुत्ररत्ननिकरो नहि दुर्लभस्ते ।। ३० ।।

देवकी—१०५वत्स कृष्णचन्द्र ! युक्तैवोक्तिस्ते तातचरणानाम् । शृणु—
स्मरहरचरणाब्जद्वन्द्वसेवाप्रभावात्
कति कति न हि देवा दानवा मानवा वा ।।
अधिगतपुरुषार्थाः सम्बभूवुर्भवन्ति
त्वमपि तत उमेशं पूजय श्रीमहेशम् ।। ३१ ।।

---

(१०२) नारदः स्वगते वसुदेवस्य महेश्वरभक्तिरसातिरेकं 'कोप्य—पूर्व एव' इति पदैः प्रशंसन् मनोरथसिद्धिमचिरभाविनीं निश्चिनोति ।

(१०३) श्रीकृष्णश्च तपोऽर्थं वनगमनाय प्रथममेवोत्सुकस्तत्र च पितृचरणानामनुमोदनमनायासोपनतं ज्ञात्वा हृष्यति ।

(१०४) उमासहितं दयाब्धिं श्रीमन्महेश्वरं प्रेम्णा नित्यं समर्चय, समर्चय इति वीप्सा आभीक्ष्ण्ये—पौनःपुन्येनार्चयेत्यर्थः । एवं कृते च हे वत्स ! आशुतोषहृदयस्य तस्य दयावलोकैः सत्पुत्ररत्ननिकरस्ते न दुर्लभो भविष्यतीति शिवप्रसादावश्यम्भावे स्वीयं विश्वासं हीत्यनेनाह ।

(१०५) देवकी अपि वसुदेवोक्तमनुमोदते युक्तैवेत्यादिना । तदुपपादयितुं च 'शृणु' इत्युपक्रम्य शिवसेवाप्रभावं वर्णयति । स्मरहरचरणाब्जसेवनप्रभावात् कति कति देवा दानवा मानवाश्चाधिगतपुरुषार्था न सम्बभूवुरपितु सर्वेऽपि लब्धयथेष्टफला अभूवन्नित्यर्थः । नैतत्पूर्ववृत्तमपितु इदानीमपि भवन्त्येव ततस्त्वमपि श्रीमहेशमुमेशं पूजय । अत्रोमेशमिति महेशविशेषणत्वेनोपात्तं श्रीपार्वतीपरशिवयोरुपासनमखिलार्थनिदानमितिबोधनार्थम् । आह च भगवान्पूज्यपादः श्रीशङ्कराचार्यः ।

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं—
नचेदेवं देवो न खलु कुशलः स्पन्दितुमपि ॥

श्रीकृष्णः—अयि मातृचरणास्तातचरणाश्च !

[१०६]पूज्यते प्रतिदिनोदयं मया श्रीमहेश्वर उमाहृदीश्वरः ।
तन्नचाऽस्त्यविदितं हि वस्तथाप्येष विस्मयकरो वचश्चयः ॥३२॥
पीयते नहि मया पयोऽप्यहो भोजनस्य तु कथैव दूरतः ।
श्रीमहेश्वरसमर्चनं विनेत्येतदस्त्यविदितं किमत्र वः ॥ ३३ ॥

देवकीवसुदेवौ—[१०७]बाल्यतोऽपि बलदेवसंयुतो
बालचन्द्रयुतभालमीश्वरम् ॥
भक्तवत्सलमुमाहृदीश्वरं
सेवसे ननु दयामयाशयम् ॥ ३४ ॥

---

तलवकाराणामुपनिषदि च—

' उमासहायं परमेष्ठिनं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥ '

इति सर्वत्रोमासंवलितस्योपास्यत्वनिर्देशेनात्रापि तादृशमेवोपास्यस्वरूपं प्रतिबोधितं श्रीदेवक्या श्रीकृष्णं प्रति ।

( १०६ ) अधुना श्रीकृष्णः स्वीयं चिरन्तनमाचारं मातापित्रोः पुरतः प्राप्तावसरं निवेदयति ' पूज्यते ' इत्यादि श्लोकद्वयेन । प्रतिदिनोदयं मया उमाहृदीश्वरः श्रीमहेश्वरः पूज्यते तदेतद् युष्माकं विदितमेवास्ति तथापि एषः प्रागुक्तः ' समर्चये ' त्यादि वचोनिकरो मम विस्मयकरो भवति । कारयितुमिष्टं स्वयमेवानुतिष्ठन् न भवितुमर्हति प्रेरणव्यापारविषय इति । तदेव पुना राध्नोति। मया श्रीमहेश्वरसमर्चनं विना जलमपि न पीयते भोजनकथा तु दूरापास्ता अहो एतदपि किं वोऽविदितं ? सकलमेतज्जानन्त्येवाऽत्रभवन्त इत्यर्थः ।

( १०७ ) श्रीकृष्णोक्तमनूद्यापेक्षितमंशमुदीरयतो देवकी वसुदेवौ—बाल्यत इति श्लोकैः । बालचन्द्रयुतभालमित्यनेन भक्तसन्तापहरण साधनसम्पन्नताम्, ईश्वरमित्यनेन भक्ताभीष्टदानप्रभुताम्, भक्तवत्सलमित्यनेन भक्तचिन्तितोपनये विलम्बाऽसहिष्णुताम्, उमाहृदीश्वरं दयामयाशयमित्याभ्यां पदाभ्यां प्रेयसीप्रणयिनो दयार्द्रचित्तस्य सेव्यतातिशयं च व्यञ्जयति । बलभद्रसंयुत इत्यनेन बलभद्रस्य शेषावतारत्वेन शिवभूषणतया तस्याऽऽजन्मसिद्धं शिवाराधकत्वं तत्सहचरत्वेन तवाऽपि तत्तादृशमेवेति । एतादृशं परमशिवं त्वं सदा सेवसे इत्येतदस्माकमविदितं नास्ति, नित्यं स्वयमेव शिवार्चने रत एवासि त्वमिति तु वयं जानीमः, किन्तु क्वचिदपि देशे काले वा स इन्दुशेखरः पुत्रसुखलिप्सयेति, निमित्तार्थे तृतीया, पुत्रसुखलाभेच्छां निमित्तीकृत्य त्वया

वत्स नास्त्यविदितं हि तत्तु नस्त्वं स्वयं परशिवार्चने रतः ॥
किन्तु पुत्रसुखलिप्सया त्वया नार्चितः क्वचिदपीन्दुशेखरः ॥३५॥
साम्प्रतं तु सुतरत्नलिप्सया त्वं समर्च्य तपसा महेश्वरम् ॥
तत्कृपादृगवलोकतो द्रुतं पुत्ररत्नशतलाभमर्जय ॥ ३६ ॥

श्रीकृष्णः—([108]सविनयम्) यद्येवमेव मातापित्रोर्निदेशस्तर्हि कल्याणीयं वेला तपोवनप्रयाणाय, मातापितृभ्यां तपोवनगमनायाऽऽज्ञप्तमात्मानमिच्छामि।

नारदः—([109]स्वगतम्) अहो श्रीकृष्णस्य कलाकौशल्यं यदनायासेन तपोवनगमनाभ्यनुज्ञा मातापित्रोः सम्पादिता।

(प्रकाशम्) [110] मान्यौ मातापितरौ त्वरया तपोवनप्रयाणायाऽऽज्ञाप्यतां श्रीकृष्णचन्द्रः सद्यःसिद्धिप्रदोऽयं मुहूर्त्तः।

वसुदेवः—(सबाष्पम्)[111]देवर्षे! पौत्रमुखदर्शनसुखलाभलोभेन पुत्रमुखदर्शनसुखलाभवियोगं कतिपयदिवसपर्यन्तं सहिष्यावहे।

---

नार्चित इत्युत्तरेण सम्बन्धः। तर्हीदानीं किमनुष्ठेयमित्याह। साम्प्रतं तु सुतरत्नलिप्सामुद्दिश्य त्वं तपसा महेश्वरं समर्च्य तदीयकृपादृगवलोकतः पुत्ररत्नशतलाभम् अर्जय, पुत्रशतमाप्नुहीत्यर्थः। अत्र द्रुतमिति पदेन परित्यज्य प्रमादं सहसा तपसे कृतनिश्चयः प्रस्थातुमर्हसीति ध्वनितम्।

(१०८) श्रीकृष्णस्तु वाञ्छिताधिकार्थलाभमिव मन्वानस्तपोवनगमनायानुज्ञामर्थयते यद्येवमित्यादिना। स्वयमेव तपोवनं जिगमिषोः पित्रोरपि तदेवादिशतोरयत्नसिद्धमिष्टं कदाचित्कालविलम्बेन वात्सल्यातिरेकोद्गमे पुनः प्रतिषिद्ध्येतेति भिया 'तपोवनगमनाय इयमेव कल्याणी वेले'त्याह 'तपोवनगमनायाज्ञप्तमात्मानमिच्छामी'ति पर्यायोक्तेन 'सद्योऽनुजानीते'ति वचनध्वनिः।

(१०९–१०) तदेतत्सकलं मर्मज्ञतया जानन्नारदः स्वगते स्पष्टमेवान्वाह। प्रकाशन्तु 'सद्यःसिद्धिप्रदोऽयं मुहूर्त्तस्तस्मादविलम्बेनैव तपोवनगमनायाज्ञाप्यतां श्रीकृष्ण' इति श्रीकृष्णेष्टमनुकूलयति।

(१११) वसुदेवः स्वहृदयदार्ढ्यं प्रचिकटयिषुरायतौ निश्चितोऽधिकलाभः साहयति वर्त्तमानलाभवैगुण्यमपीत्याशयेन श्रीकृष्णवियोगस्य कथंचित्सोढव्यत्वं समर्थयति देवर्षे इत्यादिना। उच्यमानमपि वियोगदुःखमाहन्त्येव

नारदः—एवमेतत् [११२]। श्रीमत आशुतोषस्य परशिवस्य प्रसादादाश्वेव पुत्रमुखदर्शनसुखानि पौत्रमुखदर्शनसुखानि च प्राप्स्यथेति मे प्रतिभाति।

सकलाः परमादरार्चिताः परितुष्यन्ति चिरेण देवताः
परितुष्यति चाऽऽशु शङ्करः प्रथिता तस्य यदाशुतोषता ॥३७॥

वसुदेवः—सत्यानि सन्तु श्रीमतां वचांसि ।

[११३]पायाच्छ्रीपरमेश्वरः परशिवः कारुण्यरत्नाकर—
स्त्वां च श्रीपरमेश्वरी परशिवा विश्वैकरक्षामणिः ॥
वत्स ! श्रीयदुवंशभूषण ! दयादृष्ट्या तयोः सान्द्रया
सर्वे सन्तु मनोरथास्तु सफलाः श्रीकृष्णचन्द्राऽऽशु ते ॥ ३८ ॥

देवकी—[११४]विश्वाभिरक्षणपरायणमानसा श्री—
विश्वेश्वरप्रणयिनी जगदम्बिका त्वाम् ॥

---

वात्सल्यसम्भृतमन्तःकरणमिति 'सबाष्पम्' इति क्रियाविशेषणेनाऽऽख्यातवान् कविः ।

(११२) नारदोऽनुमनुते एवमेतदित्यादिना, आशु एव प्रथमं तपश्चरणफलं श्रीसाम्बसदाशिवात्पुत्रप्राप्तिरूपवरं लब्ध्वा प्रतिनिवृत्तस्य श्रीकृष्णस्य मुखदर्शनेन तदनन्तरं चाचिरेण शिवप्रसादपरिणतौ श्रीकृष्णचन्द्रराज्ञीनां पुत्रलाभे पौत्रमुखदर्शनेन तज्जन्यसुखानि प्राप्स्यथेति मे प्रतिभाति । अस्मिन्विषये आशुतोषेतिनाम्नो निरुक्तिकथनपूर्वं देवतान्तरात्परमशिवोत्कर्षं व्यतिरेकविधया प्रदर्श्य स्वोक्तं समर्थयति । अत्र परमादरेणार्चिताः न तु यथा कथंचिदिति । एवं च आदरशब्दोऽत्रोपचारसम्भारस्याप्युपलक्षकः । तथा च नैकविधोपचारार्चिता अपि शिवेतरदेवताश्चिरेण परितुष्यन्ति, शङ्करस्तु आशु तुष्यति यतस्तस्य आशुतोषता प्रथिता, श्रुतिस्मृतिपुराणेतिहासादिषु परःशतैराख्यानैरुपबृंहितेत्यर्थः ।

(११३) वसुदेवो नारदोक्तमाशीरूपेण प्रतिगृह्णाति 'सत्यानि सन्तु श्रीमतां वचांसी'त्यनेन । स्वयं च श्रीकृष्णचन्द्रमाशिषा युङ्क्ते । परशिवस्य कारुण्यरत्नाकरत्वेन भक्तावनव्यसनिता, परशिवायाश्च विश्वरक्षणदीक्षिताया भक्तरक्षणप्रवणता स्वाभाविक्येवेति ध्वनिः । तयोरेतयोरेवंविधयोर्दयादृष्ट्या मनोरथसाफल्यं सुलभमेव भवितेत्यर्थः ।

(११४) देवकी 'स्त्रीणां स्त्रीषु विश्रंभभराधिक्यनैयत्येन' जगदम्बिकामेव प्रथममभिगृणाना श्रीकृष्णरक्षायै 'विश्वाभिरक्षणपरायणमानसेति'

रक्षत्वनन्यशरणं शरणागतानां
चिन्तामणिः प्रणतवत्सलतैकसीमा ॥ ३९ ॥

तपसा परितोष्य तावुभौ द्रुततोषौ गिरिजामहेश्वरौ ॥
उपलभ्य तयोर्दयादृशा सुतरत्नाप्तिकरं वरं वरम् ॥ ४० ॥

अयि वत्स महेश्वरीमहेश्वरयोः पूर्णकृपावलोकनात् ॥
परिपूर्णमनोभिवाञ्छितो द्रुतमानन्दय लोचनानि नः ॥ ४१ ॥

वत्स ! साधयतु भवान् तपोवनगमनाय, शिवाः सन्तु ते पन्थानः, शिवाः सन्तु ते सर्वा दिशः, शिवा वान्तु ते वायवः शिवानि सन्तु ते सर्वत्र सर्वाणि सलिलानि ।

श्रीकृष्णः—[११५]वत्सलरसपीयूषपारावारौ मान्यौ मातापितरौ ! युवयोराशीर्वचनवर्णा एवैते मे रक्षामणयः, श्रीमहेश्वरप्रसादश्च युष्मदाशिषा सुलभतम एवेति मन्येऽहम् ॥

आराध्याश्रितवत्सलं त्रिजगतामेकं परं दैवतम् ।
कारुण्यामृतसागरं गिरिसुताप्राणप्रियं प्रेमतः ॥
सन्तुष्टात् परमेश्वरात् परशिवात् सम्प्राप्तवाञ्छाधिका—
भीष्टार्थो युवयोरुपैष्यति पदद्वन्द्वं जनोऽयं द्रुतम् ॥ ४२ ॥

न काचिच्चिन्ता मे विधेयाऽयं मे प्रयाणप्रणामपुष्पाञ्जलिः ।

( इति उक्त्वा नारदेन सह निष्क्रान्तः )

---

तां विशिनष्टि, तदभीष्टसाधनसामर्थ्यं च 'शरणागतानां चिन्तामणि' रित्यनेनोत्तरङ्गयति । पार्वतीपरमेश्वरौ तपसा प्रसाद्य ततश्च सुतरत्नदं वरं लब्ध्वा परिपूर्णमनोरथो द्रुतमेवास्माकं नयनानि नन्दयेत्यादिश्यानुजानानैव तपोवनप्रयाणमध्वदेशवायुसलिलानां शिवङ्करतामाशास्ते, तेषामानुकूल्यमारोग्यदत्वेन तपःसहकारीत्यर्थः ।

( ११५ ) पित्रोरनुज्ञामासाद्य तयोरनिर्वेदाय तदीयाशीरक्षराणां रक्षामणितामुक्त्वा तेनैव च महेश्वरप्रसादस्य सुलभतामाभाष्य तावाश्वासयति श्रीकृष्णः । आराध्येत्यस्मिन् पद्ये आश्रितवत्सलमित्यादिविशेषणैः शिवमहिमानमुपवर्ण्य तत एव 'सम्प्राप्तवाञ्छाधिकाभीष्टार्थः' इत्यनेन परमशिवस्य परमुत्कर्षं बोधितवान् श्रीकृष्णः । यदाहमातृगुप्ताचार्यः ।

महान्तोऽभ्यर्थिताः स्वल्पं फलन्त्यल्पेतरत् स्वयम् ।
पयोर्थिने वदान्योऽदाद् दुग्धाब्धिमुपमन्यवे ॥

वसुदेवः—[११६]देवि देवकि ! गतो वत्सः श्रीकृष्णचन्द्रस्तपोवनं श्रीसाम्बशिवं समाराधयितुम् । प्रयाणसमयसञ्जातैः शुभनिमित्तैरेव निवेद्यते शीघ्रतराभिवाञ्छितार्थसिद्धिः श्रीकृष्णस्य । तथापि अकुशलशताशङ्कीनि सुहृदां चेतांसीति नाविदितं ते । तदेहि आवामपि देवमन्दिरमुपेत्य वत्सस्य निर्विघ्नतपःसिद्धये श्रीसर्वमङ्गलाप्राणप्रियं परमेश्वरमुपास्वहे ।

देवकी—[११७]आर्यपुत्र ! यथाज्ञा प्राणनाथस्य । ( इत्युक्त्वा उत्थाय ) इत इतः प्राणनाथः ( इति वदन्ती वसुदेवेन सह निष्क्रान्ता )

इतिश्रीसद्गुरुवर्यकेशव—कृपाकल्पवल्लरी—पल्लवायमाने
महामहोपाध्यायशीघ्रकविशङ्करलालकृतौ
श्रीकृष्णचन्द्राभ्युदय—नाम्नि नाटके
द्वितीयोऽङ्कः ॥

---

शिवाराधनासादितेष्टवरश्च शीघ्रमेव युवयोश्चरणमूलमुपैष्यति जनोऽयमिति प्रथमपुरुषेणात्मनो निर्देशोऽभिमानराहित्यप्रकटनाय । प्रयाणसामयिकः प्रणामपुष्पाञ्जलिरित्यर्थः । नारदेन सहैव निष्क्रमणं तपश्चरणप्रकारपरिज्ञानाय समपेक्षितदीक्षादिविचारणाय । मुनिर्हि सौहार्दानुकम्पाभ्यामुभयाकाङ्क्षापर्याप्त इत्यर्थः ।

( ११६ ) इदानीं वसुदेवो देवकीं रणरणकाकुलान्तरङ्गामाशङ्कमानः सद्योवृत्तश्रीकृष्णवियोगजनितामात्मनोऽप्याकुलाशयतां परिजिहीर्षुः प्रयाण सामयिकैः शुभनिमित्तैर्दक्षिणाक्षिस्फुरणादिभिः श्रीकृष्णस्याचिरादेवेष्टसिद्धिमभिलपन्, स्वापत्यानिष्टशतचिन्ताकुलान्येव भवन्ति वृद्धानां चेतांसीति सामान्येन विशेषसमर्थनरूपमर्थान्तरन्यासं व्यञ्जयन् श्रीसर्वमङ्गलाप्राणप्रियाराधनेन सर्वमङ्गलावाप्तिः सुकरेति परिकरगर्भवाक्येन श्रीकृष्णस्य तपःसिद्धिं निर्विघ्नामाशासानो महेश्वराराधनाय देवमन्दिरं गन्तुकामो देवकीमपि तत्रागमनाय प्रेरयति, तदेहीत्यादि ।

( ११७ ) देवकी तु श्रीकृष्णचन्द्रस्य कुशलमतितमामाकाङ्क्षमाणा वसुदेवोक्तमनुमोदनपुरस्सरमूरीकृत्य उत्थाय ' इतइतः प्राणनाथ ' इति मार्गं निर्दिशन्ती वसुदेवेन सह निष्क्रान्ता ।

इति श्रीसद्गुरुवर्यकेशवकृपाकल्पवल्लरीपल्लवायमानश्रीकृष्णचन्द्राभ्युदय—नाम्नो
नाटकस्य टीकायां ज्योत्स्नाभिधायां द्वितीयोऽङ्कः सम्पूर्णः ।

## अथ तृतीयोऽङ्कः।

( [1]ततः प्रविशन्ति श्रीकृष्णपत्न्यः )

रुक्मिणी—[2]अयि जाम्बवति ! सत्यभामे ! अप्रज्ञा एव प्रमदा इति प्राक्तनानां प्रज्ञानामुक्तिरवितथैव यदस्माभिः सत्पुत्रप्राप्तिलोभेन प्राणनाथोऽपि तपसे तपोवनं प्रेषितः। इदानीं कृतोऽनुतापोऽपि निष्फलस्तथापि न हृदयादपैत्यनुतापः। तथाहि—

[3]पीताम्बरं परिविहाय च वल्कलं यत्
सन्धारितं भगवता मृदुले शरीरे ॥
दूये हि तेन हृदये हृदयेश्वरोऽयं
स्वार्थान्धया वत मया तपसे नियुक्तः॥ १॥

जाम्बवती—देवि एवमेतत्। प्राणप्रियेण नः श्रीकृष्णचन्द्रेण—

[4]निरुपमतममुक्तामालिकाः संविहाय
स्फुटतरमुखमुद्राऽधारि रुद्राक्षमाला॥

---

यस्याः प्रसादमासाद्य मासाद्याति बुधेन्द्रताम्।
तामाश्रितश्रमहरां श्रियं श्रेयःश्रिये श्रये॥

(१) इदानीं श्रीकृष्णवियोगेन दुस्तरां प्रियविरहवेदनामनुभवन्तीनां तत्र चात्मानमेव निमित्तं मत्वाऽनुशयवतीनां श्रीकृष्णपत्नीनामवस्थावेदनाय तन्मुखेनैव प्रस्तावमारचयति 'ततः प्रविशन्तीत्यादिना'।

(२) आत्मनोऽपरामृष्टकारितां निगदेन ख्यापयित्वा 'प्राणनाथोऽपि' इत्यपिपदेन प्राणानां नाथस्य दूरीकरणे प्राणरक्षा कथं भवित्रीति अविचार्यैव 'तपसे तपोवनं प्रेषितः' इत्याह। अनेन आयतिकलनाविकलानामप्रज्ञा इति निर्देश उपपादितः प्रमदानां रुक्मिण्या। तथाच निष्फलोऽप्यनुतापो हृदयान्नापयाति किन्तु शल्यायत इत्यर्थः।

(३) पीताम्बरादिविशिष्टा या खल्वाकृतिर्मनोमोहनमाचरन्ती नित्यं परिचिता सैवेदानीं वल्कलादि दधाना मनो दूनोतितरामितिभावः। तदेतत्स्वार्थान्धया मया प्रयोजककर्त्र्याऽनुष्ठितमिति खेदातिशयनिदानतामुपयातीति 'तपसे नियुक्त' इत्यनेनावगमयति।

(४) सर्वदा श्रीकृष्णचन्द्रो यद्यपि रुद्राक्षमालां कण्ठे दधात्येव तथापि

प्रियतमहृदयस्य प्रेयसी पूर्वतः सा
त्वपि मणिगणहीना खेदयत्येव सर्वान् ॥ २ ॥

सत्यभामा—[५]युक्त मुक्तं देवीभ्याम् ।
हरिचन्दनशीतलाङ्गरागानपहाय प्रभुणाऽखिले शरीरे ॥
उररीकृत आशु भस्मलेपः स मनः कस्य सविस्मयं न कुर्यात् ॥ ३ ॥

सत्याः—देव्यो ! ममाप्येतन्मनसि शल्यायते
[६] मृदुतर कुसुमैः समास्तृते स—
न्मणिमयतल्पतलेऽतिकोमलाङ्गः ॥
य इह समभजच्छ्रमं सदेवः
कथमवनौ शयिता घने वने हा ॥ ४ ॥

भद्राः—[७]मृदुलकुसुममालाकल्पिते स्वच्छतल्पेऽ
प्यनधिगतसुनिद्रस्ताम्यतिस्म प्रियो यः ॥
अतिमृदुलशरीरः सोऽवनौ काननान्तः
कथमिव शयिता हा जीर्णपर्णास्तृतायाम् ॥ ५ ॥

लक्ष्मणा—[८]देव्यो ! विचारयत चेतसि यो नितान्तं
सौवर्णरत्नकलशस्थिततीर्थतोयैः ॥

---

नित्यधारणयोग्यायां मालायां रुद्राक्षैः साकं मुक्तामाणिक्यमरकतवज्रवैडूर्यादि मणिगणयुक्तत्वमिदानीं तु तपःप्रवृत्त्यानुगुण्याय मणिगणहीना केवलरुद्राक्षाणां मालाऽधारि तदेतदस्मान् खेदयति । रुद्राक्षधारणं हि नित्यं महते फलाय च ।

(५) हरिचन्दनाङ्गरागस्थाने भस्मोद्धूलनं विस्मयं करोति । विस्मय हेतुश्चात्र भक्तेष्टसाधनसमर्थस्यापि भगवतः स्वेष्टसिद्ध्यर्थं तपश्चर्यानुगुणसाधनाडम्बर एव ।

(६) यो मृदुकुसुमास्तृततल्पे नित्यं शेते स कथं वनभूमौ शयनं करिष्यतीति विचार एव सत्यामनसि शल्यायते ।

(७) सत्यया कथितमेवार्थं प्रकारान्तरेण निरूपयन्ती भद्रा, मृदुकुसुमकल्पिततल्पेऽपि ताम्यति योऽनधिगतनिद्रः स कथं जीर्णपर्णास्तृतायां काननभूमौ सुखनिद्रां लप्स्यत इति भृशं चिन्ताकुला 'हा' निपातेन खेदातिशयं प्रकटयति ।

(८) लक्ष्मणा, नित्यमनुष्ठीयमानां भगवतः स्नानावसरसेवामेवावर्णयन्ती, वने स्वयमाहृतैः कूपादिजलैः स्नानं कुर्वतो भगवतस्तत्र चास्माकमसन्निधानादनेकविधक्लेशाननुभवतः कीदृशी दशा स्यादित्यनुसन्दधाना खिद्यतितराम् ।

सस्नौ हि नः करकुशेशयकोशमुक्तैः
स्नाता कथं स निजहस्तभृतैः पयोभिः ॥ ६ ॥

मित्रविन्दा—[9]अमलकमलनेत्रो वन्दिगीतैर्मनोज्ञै-
रुषसि महति निद्रामुज्जहौ योऽतिहर्षात् ॥
तरुवरशिखरस्थैः पक्षिभिर्हा वितीर्णैः
कलकलकलरावैः सोऽद्य निद्रां जहाति ॥ ७ ॥

कालिन्दी—[10]हे देव्यः ! श्रीकृष्ण आनन्दसिन्धु-
र्नानापात्रेषूच्चचामीकराणाम् ॥
भक्ष्यं भोज्यं चोष्यमप्यत्र लेह्या—
न्यस्माभिर्यः साकमादन्मुदाढ्यः ॥ ८ ॥
सोऽयं देवः कानने क्वापि घोरे
व्यालोलूकैराकुले निर्मनुष्ये ॥
एको भुङ्क्ते स्माद्य शीर्णान्ययत्नाद्
वन्यान्यारात् सत्फलानीश्वरोऽपि ॥ ९ ॥
इति स्मारं स्मारं न मे मनः शान्तिमाप्नोति—
( इति वदन्त्यश्रूणि मुञ्चति )

रोहिणी—[11]मूर्द्धाभिषिक्तवसुधावलयाधिनाथै—
र्गोष्ठीः समं समभजज्जगदीश्वरो यः ॥

---

( ९ ) मित्रविन्दा तु--राजधान्यां स्थितो यो मनोज्ञैर्बन्दिगीतैर्निद्रां जहातिस्म स इदानीं तपोवने तरुस्थितपक्षिरावैर्जागर्त्तीति वदन्ती 'हा' निपातोच्चारणेन खेदं प्रकटयन्त्यपि पुत्रप्राप्तिरूपफलहेतुतया न तत्र न्यक्कारबुद्धिमादधाति, अन्यथा पाण्डवसन्तक्षणोद्यतद्रौपदीवत्—'जहासि निद्रामशिवैः शिवारुतै'रित्यत्रेव हीनताबोधकमशिवात्मकं शिवारुतादि किमप्युपन्यस्येत् । पक्षिरुतैर्निद्रात्यागो हि नाप्रशस्तो नाप्यमङ्गलः किन्तु केवलमेकलत्वेन खेदहेतुः, स एव यदि मङ्गलगीतसम्पृक्तस्तर्हि महामङ्गलमयो भवति । लोकेऽपि भवति कश्चित्पदार्थः खेदहेतुर्भवन्नपि प्रियो यथा जनयित्र्याः पुत्रप्रसवस्तथैव चायं प्रसङ्ग इति ध्वनिः ।

( १० ) चतुर्विधभोजनं जुषमाणस्य स्वयं विशीर्णैर्वन्यफलैराहारवृत्तिं शोचन्ती कालिन्दी, वनस्य व्यालोलूकाकुलत्वं चिन्तानिदानत्वेनाग्रे करोति ।

( ११ ) रोहिणी तु राजाधिराजैः साकं गोष्ठीसुखमनुभवतो, वने च

सोऽयं घनेऽतिविजनेऽद्य वने विधत्ते
देव्यो ! मृगैः परिचयं हृदयेश्वरो नः ॥ १० ॥

किमेतदल्पं विषादस्थानं ? परं तदानीं ग्रहगृहीता इव न किञ्चिदवेदिष्म ।

रुक्मिणी—[१२]प्रियस्वसारो मे ! यज्जातं तज्जातमिदानीं तु यथा सम्प्राप्तसर्वाभिलाषः प्राणेश्वरो नः सद्य एवास्मल्लोचनगोचरः स्यात्तद्विधेयम् । व्यतीतविषयविचारविषादेन न किञ्चित् फलम् ।

सत्यभामा—[१३]युक्तमुक्तं भवत्या, तर्हि प्राणनाथस्य सद्योभीष्टसिद्धये किमस्माभिः कर्त्तव्यमित्यत्रभवती भवती निवेदयतु ।

जाम्बवती—देवि ! देव्याः सत्यभामाया उक्तिमक्षरशोऽनुमोदामहे ।

रुक्मिणी—देव्यो ! यदि यूयं मामेव पृच्छथ तर्हि अस्माकं प्राणनाथेनेवास्माभिः सर्वाभिरिहैवोपवने पर्णकुटीषु स्थित्वा श्रीमदपर्णाप्राणप्रियस्योपरि तपो विधेयं येनाशु प्रसन्न आशुतोषोऽस्माकं प्राणप्रियं श्रीकृष्णचन्द्रं सद्यःप्राप्तसर्वाभिलाषमत्र प्रेषयिष्यति ।

सर्वाः पट्टराज्ञ्यः—[१४]देवि ! सज्जाः स्मस्तथा कर्त्तुं सर्वा अपि वयम् । नमो मणिमयभवनेभ्यो, नमो दिव्येभ्यो वस्त्राभरणभारेभ्यो, नमो दिव्येभ्यो भोगेभ्यश्च, यावच्छ्रीकृष्णचन्द्रागमनमिदमेवो-

---

तादृशसमागमालाभान्मृगैः परिचयं कुर्वतो भगवतोऽवस्थाविशेषमनुसन्धाय तत्र स्वदत्तानुज्ञामास्मृत्य, तदानीं ( अनुज्ञादानसमये ) ग्रहगृहीताभिरिवास्माभिर्न किञ्चिदेतच्चिन्तितमिति महदिदमनुशयनिदानमिति ध्वनयति ।

( १२ ) व्यतीतविषयकविचारस्य वैफल्यं वदन्ती रुक्मिणी प्राप्तकालाचरणे सर्वाः प्रेरयितुं लब्धेष्टार्थस्य श्रीकृष्णचन्द्रस्य दर्शनार्थमुपायप्रश्नं तासामेव मुखादुत्थापयति 'यज्जात' मित्यादि फलमित्यन्तम् ।

( १३ ) सत्यभामाजाम्बवतीभ्यां पृष्टेऽनुमोदिते चोत्तरमुपक्रमते—रुक्मिणी—यथाऽस्मत्प्राणनाथेन बटुकाचले ( 'बरडा' इति प्रसिद्धे ) बिल्वकानने तप आस्थीयते एवमस्माभिरपि सर्वाभिरिहैव स्वे स्वे उपवने पर्णकुटीर्विरचय्य तपो विधेयं येन सद्य एवाशुतोषो महेश्वरः प्राप्तसर्वाभिलाषमस्मत्प्राणनाथमत्र प्रेषयिष्यतीति विश्वासातिशयः ।

( १४ ) रुक्मिणीनिर्द्दिष्टोपायानुष्ठाने सर्वाः सङ्कल्पानुगुण्यं प्रकटयन्ति 'सज्जाः स्म' इत्यादिना ॥ अत्र 'नमो मणिमयभवनेभ्य' इत्यादिषु नमःशब्दो—

पवनं भव्यं भवनं, वल्कलान्येव नो दिव्याम्बराणि, भस्मोद्धूलनमेव नो दिव्याङ्गरागो, रुद्राक्षमाला एव च नो मौक्तिकमाला, वन्यानि फलान्येव च नो भव्यानि भक्ष्यभोज्यानि।

(इत्येवं वदन्त्यः, काश्चन सालतरुतलेषु, काश्चन शालतरुतलेषु, काश्चन तालतरुतलेषु, काश्चन तमालतरुतलेषु, काश्चन हिन्तालतरुतलेषु काश्चन कदलीतलेषु, काश्चन वटविटपितलेषु, काश्चन चलदलतरुतलेषु बद्धासना भूत्वा परमेण प्रेम्णा परमया भक्त्या विशुद्धया श्रद्धया च श्रीपार्वतीप्राणेश्वरस्य परमेश्वरस्य स्फटिकमणिमयानि, मुक्तामणिमयानि, वैदूर्यमणिमयानि, वैक्रान्तमयानीन्द्रनीलमणिमयानि माणिक्यमणिमयानि लिङ्गानि नित्यसेव्यानि निजनिजपुरतः संस्थाप्य तदर्चनाचरणपरायणान्तःकरणा विस्मृतदेहगेहस्नेहमानाभिमानाः स्वकीयप्राणप्रियवियोगिन्योऽपि महायोगिन्य इव श्रीशिवाराधनैकप्रवणाः स्थिताः)

सर्वाः—(सहैव)[१५]शिव शिव शिव पाहि पाहि पाहि
प्रणतजनप्रिय जीवितेश्वरं नः॥
सदयहृदय पूर्णचन्द्रवक्त्रं
घनघनवर्णमुमेश कृष्णचन्द्रम्॥ ११॥
(इति वदन्त्यो मूर्च्छया पतन्ति)

---

नमोऽस्त्वधन्याय धनाय तुभ्यमित्यादाविवाऽनादरपर्य्यवसायी बोध्यः॥ अग्रे च श्रीकृष्णचन्द्रागमनपर्यन्तं स्वोपवनादिषु भव्यभवनत्वाद्यारोपेण सारोपलक्षणया सर्वत्यागलक्षणमहाव्रताङ्गीकारपूर्वकपरशिवाराधनदीक्षाग्रहणेन स्वेष्टसिद्धेरदूरभावित्वमिव मन्वानानां तासां न केवलं सङ्कल्पशूरत्वमपि तु तदनुगुणानुष्ठानमपीति, 'काश्चनसालतरुतलेषु' इत्यादिना 'परमया भक्त्या विशुद्धया च श्रद्धया' 'परमेश्वरस्य स्फटिकमणिमयानि' इत्यादिना च स्वानि स्वान्याराध्यलिङ्गानि पुरस्कृत्य तदर्चनप्रवणाः स्थिता' इत्यन्तेन वर्णितम्।

(१५) इदानीं सर्वाः सहैव प्रार्थनामुपक्रमन्ते—शिवशिवेत्यादिना। 'शिवेति' त्रिरुच्चार्य 'नः प्राणेश्वरं पाहि' इत्यपि त्रिरुच्चारयन्ति। प्रणतप्रिय! सदयहृदय! इति सम्बोधनद्वयेन—एतादृशस्य तव नैसर्गिकमेतद्रक्षणमिति सम्बोध्य पूर्णचन्द्रवक्त्रं घनघनवर्णमिति विशेषणद्वयार्थानुसन्धानेन श्रीकृष्णस्वरूपानुध्याननिष्ठास्ताः स्वशरीरेन्द्रियादिविस्मरणपूर्वकं मूर्च्छयेव पतन्ति स्मेत्यर्थः।

( [१६]ततः प्रविशति, लीलावती-ललिता-चन्द्रावली-विशाखाभिः सहिता श्रीराधा )

राधा—[१७]सख्यः ! सेयं द्वारका गोकुलतः प्रस्थिताभिरस्माभिरेकमासा समासादिता। मणिमयमहामन्दिरेषु सुवर्णमयसकलप्रदेशेषु कल्पवृक्षमयाखिलोपवनेषु विहरतोऽस्मन्मनोमानतस्करस्य श्रीकृष्णचन्द्रस्य गोकुलग्रामो गोकुलप्रदेशा गोकुलोपवनानि च कथमिव स्मृतिपथमप्यवतरेयुः।

ललिता—[१८]देवि ! यदि परिचयप्राबल्यात् स्मृतिपथमुपगच्छेयुस्तथाप्युपहसितसुरपुरसुन्दर्यस्तस्य सुन्दर्यस्त्वरितं विस्मारयेयुः।

चन्द्रावली—[१९]अथ किम् ?। सर्वः स्वार्थमपेक्षते। अस्मत्स्मरणं तासामनिष्टकरमेव।

विशाखा—[२०]देवि ! त्वमिव त्वमेव जगति दयार्द्रहृदयाऽसि या सपत्नीरपि प्रियविरहविषण्णाः समाश्वासयितुं गोकुलाद् द्वारावतीमागतासि।

---

( १६ ) अत्रावसरे चतसृभिः सह सखीभी राधायाः प्रवेश उपनिबद्धः कविना भक्तिरसपरिपोषाय। नहि रसध्वनेरध्वनि सञ्चरतः कवेः कथानिरूपण एवाहितभरत्वमपितु वृत्तान्तान्तरोपक्षेपेण रसानुगुणभावोपबृंहणमावश्यकमित्यतो भगवत्तत्वसतत्त्वभूतायाः श्रीराधाया द्वारीकरणेन तन्मुखेनैव सर्वासां मोहापगमं वर्णयति।

( १७ ) अत्र राधावचने 'सेयं द्वारका' इति नेयं प्रत्यभिज्ञा किन्तु 'यस्या' इति पदमुत्तरवाक्यादावध्याहृत्य, यस्या मणिमयमहामन्दिरादिषु विहरतो भगवतो गोकुलग्रामः कथमिव स्मृतिपथमवतरेदिति सम्बन्धः।

( १८ ) ललिता पुनरत्र—प्रचुरपरिचयेन स्मरणे सत्यपि अधिकतरसुन्दरवस्तुपरिशीलनं हि तत्र विस्मृतिप्रयोजकतामुपयातीत्याह, उपहसितसुरपुरसुन्दर्य इत्यादिना।

( १९ ) चन्द्रावली ईर्ष्यावेशविवशाशया 'अस्मत्स्मरणं तासामनिष्टकरमेव' इति सावधारणं स्ववाक्यं 'सर्वः स्वार्थमपेक्षते' इति पामरेषु प्रचुरप्रचारवता लौकिकन्यायेन समर्थयति।

( २० ) विशाखा तु चन्द्रावलीवाक्येनाकम्पनीयहृदयां श्रीराधामु

लीलावती—[21]तेनैवोत्तमेन सद्गुणेन देव्या वशीभूतोऽस्ति चतुर्दश-भुवननाथो यदुनाथः ।

श्रीराधा—[22]अलं प्रसङ्गान्तरेण, श्रीरुक्मिणीमुख्याः श्रीकृष्णचन्द्र-धर्मपत्नीर्विलोकयितुं बलवत्युत्कण्ठा मे ।

ललिता—इत इतो देवी, गोपुरस्यान्तः प्रमदवने सर्वाः साम्प्रतं तिष्ठन्तीति श्रुतं तासां दासीभ्यस्तदेहि तत्र गच्छाम ।

( पुरतोऽवलोक्य ) इदमेव प्रमदवनं ( निपुणं निर्वर्ण्य ) [23](साश्चर्यम्) देवि ! किमेतत् ! ! एताः सर्वा युगपदेव मूर्च्छावेशविवशा लक्ष्यन्ते ।

श्रीराधा—[24] ( विलोक्य साश्रुपातम् ) किमिवात्राश्चर्यम् । श्रीकृष्ण-चन्द्रविरहवेदनैवेमाः पदे पदे मूर्छापरतन्त्राः करोति तदेत वयमासां मूर्छापनयनोपचारान् कुर्मः ।

---

दाराशयत्वारोपेण स्तौति ' देवि त्वमिव त्वमेव ' इत्यादिनाऽनन्वयालङ्कारगर्भेण वाक्येन । अत्र, वयं तु चन्द्रावलीस्वभावमनुरुन्धानास्त्वं तु न तादृशी किन्तु निर्वैरभावासि या सपत्नीरपि दुःखिताः समाश्वासयितुमतिदूराद् गोकुलादत्र द्वारकायामागतासि । वाक्येऽस्मिन् सपत्नीरपीत्यपिना पूर्वोक्तो निर्वैरभावः सुतरामुपपादितः ।

( २१ ) लीलावती तादृशनिर्वैरभावफलं चतुर्दशभुवननाथवशीकार-मुक्त्वा श्रीराधायाः सौभाग्यातिशयं ध्वनयतिस्म ।

( २२ ) तदेतल्लीलावतीवचनमात्मस्तुतिरूपमरोचमानमाक्षिपति श्री-राधा ' अलं प्रसङ्गान्तरेणे ' त्यनेन । नायमवसरो मम स्तुतेः किन्तु श्रीकृष्ण-राज्ञीनामाश्वासनस्येत्यत आह—श्रीकृष्णधर्मपत्नीर्विलोकयितुं बलवती उत्कण्ठा मे इति । स्वस्तुतावरुचिर्हि महतां स्वभाव एव यथाह भोजः—

अद्यापि दुर्निवारं स्तुतिकन्या वहति कौमारम् ।
सद्भ्यो न रोचते साऽसन्तस्तस्यै न रोचन्ते ॥

( २३ ) ललिता, दासीतः प्रमदवने सर्वासामवस्थितिमवगम्य याव-द्राधिकां तत्र नयति तावत्सर्वाः श्रीकृष्णराज्ञीर्मूर्छिता विलोक्याश्चर्यचकिता वदति किमेतदित्यादि ।

( २४ ) श्रीराधा तु दर्शनमात्रेणाधिगततत्त्वा साश्रुनेत्रा, सर्वासां

( इत्युक्त्वा स्कन्धे वीणां निधाय गायति )

भुवो भारं हर्त्तुं सकलमुपकर्त्तुं सुरकुलं
विहर्त्तुं गोपीभिर्निजहृदयरूपाभिरिव यः ॥
विभर्त्तुं च स्वीयानजनि वसुदेवस्य सदने
स एव श्रीकृष्णो नयनपथपान्थो भवतु नः ॥ १२ ॥

ललिता—[२५]परप्रेमालोकामृतलहरिकामज्जनसुखै-
र्निराबाधां राधां हृदयदयितां स्वां रचयितुम् ॥
शरद्रात्रीश्चक्रे य इह वितता निस्तुलरसः
स एव श्रीकृष्णो नयनपथपान्थो भवतु नः ॥ १३ ॥

चन्द्रावली—[२६]कृपापीयूषाब्धिर्य इह यमुनायामहिनदे
निपीयाम्भः सद्योमृतमखिलगोगोपतिकुलम् ॥
दयावृष्ट्या दृष्ट्या पुनरुपगतप्राणमकरोत्
स एव श्रीकृष्णो नयनपथपान्थो भवतु नः ॥ १४ ॥

---

मूर्छानिदानं श्रीकृष्णविरहं वदन्त्येव तासां मूर्छापनयनायोपचारमुपक्रममाणा 'तदेते' त्यादिना सखीः प्रोत्साह्य स्वयं वीणामादाय श्रीमद्भगवद्यशो गायति 'भुव' इति । अत्र भुवो भारहरणेन सकलसुरकुलोपकारवत् स्वीयानां भरणं गोपीभिर्विहरणं च भगवदवतारप्रयोजनत्वेनोपनिबद्धं; तदेतादृशप्रयोजनसिद्धये 'स एव' इत्यन्यव्यावृत्तिफलकैवकारेण स्वीयानामस्माकमेतादृशापदि दर्शनदानं प्राप्तकालमिति ध्वन्यते ।

( २५ ) तदेव प्रार्थ्यते ललितयाऽपि । परमत्र पद्ये 'परप्रेमैवामृतं तल्लहर्यां मज्जनेन यानि सुखानि तैः स्वां हृदयदयितां राधां निराबाधां रचयितुं यः शरद्रात्रीर्वितताश्चक्रे; निस्तुलरसः स एव श्रीकृष्णो नो नयनपथपान्थो भवतु' इत्युक्त्या, येन परप्रेमार्पणेन पूर्वं राधानुग्रहः कृतः स एवेदानीमपि दर्शनदानेन तदनुग्रहाय यत्नमातिष्ठतामिति पूर्ववृत्तस्मारणेनावश्यकर्त्तव्यस्यानुग्राह्यानुग्रहस्य बोधनेन यत्नसाफल्याशंसा ध्वन्यते ।

( २६ ) चन्द्रावली पुनर्भगवतः कृपासागरत्वं कथयन्ती तत्र च कालियदमनेन विषमयजलपानमृतानां गोपानामुज्जीवनवृत्तान्तं प्रमाणयन्ती दयालुतयैव श्रीकृष्णसान्निध्यमर्थयते ।

विशाखा—[27]कृपापारावारो मधुवनविहारो व्रजवधू-
परप्रेमाधारोऽखिलभुवनसारो यदुपतिः ॥
य आनन्दाकारः स्फुरति च मनोवृत्तिषु सतां
स एव श्रीकृष्णो नयनपथपान्थो भवतु नः ॥ १५ ॥

श्रीराधा—[28]सुधासाराकारानधरगतवेणोर्मधुरवान्
वितन्वन् यश्चक्रे जगदखिलमानन्दजलधौ ॥
निमग्नं श्रीकान्तः सजलजलदश्यामलरुचिः
स एव श्रीकृष्णो नयनपथपान्थो भवतु नः ॥ १६ ॥

ललिता—[29]वसानः श्रीपीताम्बरमनुपमं सन्मणिमयान्
दधानोऽलङ्कारान् विकचवनमालाश्च नितराम् ॥
विहारान् यश्चक्रे सह सहचरैर्गोपशिशुभिः
स एव श्रीकृष्णो नयनपथपान्थो भवतु नः ॥ १७ ॥

चन्द्रावली—[30]घनश्यामो दामोदर उदयदानन्दजलधिः
कृते श्रीमत्स्रष्ट्रा निखिलनिजवत्सापहरणे ॥

---

( २७ ) विशाखा तु न केवलं मधुवनविहारित्वेनैव किन्तु व्रजवधूपर-प्रेमाधारत्वेन सतां मनःसु सदानन्दाकारस्फुरणरूपत्वेन च भगवतः सद्यः सान्निध्यमाकाङ्क्षमाणा सार्वात्म्यबोधकपदैरेव भगवन्तमुपश्लोकयति ।

( २८ ) पुनरपि श्रीराधा द्विः स्तोतुमुपक्रममाणा सुधाया आसारो धारासम्पातः ( 'धारासम्पात आसार' इत्यमरः ) तत्समानाकारान् अधरगत-वेणोर्मधुतुल्यान् रवान् वितन्वन् योऽखिलं जगदानन्दजलधौ निमग्नमकरोत् । एतावता आनन्दजलधौ जगन्निमज्जयतस्सन्तापजलधौ निमज्जतां स्वजनानां तत उद्धरणं विलम्बासहमेवेति प्रेरणांशध्वनिः । अग्रे च श्रीकान्तः सजलज-लदश्यामलरुचिरिति भगवत्स्वरूपध्यानगर्भपदाभ्यां प्रयत्नस्याव्यवधानेन फलावाप्तिः सूच्यते ।

( २९ ) ललिताऽपि श्रीराधया पूर्वश्लोकान्त उपक्रान्तं भगवत्स्वरूपध्या-नमेव साक्षात्कारे परमोपायं मन्वाना तदेव पूर्वानुभूतविशेषणभावनया प्रस्तौति 'वसान' इत्यादिना । अत्र पीताम्बरमणिमयालङ्कारवनमालादि धारयतो भगवतो गोपशिशुभिः क्रीडतो ध्यानं, गोपशिशुवत् सद्यस्तोषो भूत्वाऽस्माकं नयनपथपान्थो भवत्वित्यभिसन्धिमत् ।

( ३० ) चन्द्रावल्या तु घनश्यामो दामोदर उदयदानन्दजलधिरपि

अभूत्तत्तद्रूपो निखिलजगदात्मा प्रणयतः
स एव श्रीकृष्णो नयनपथपान्थो भवतु नः ॥ १८ ॥

विशाखा—[३१]वकाद्याः कंसाद्याः सपदि वृषकेशिप्रभृतयो
जरासन्धाद्याश्च प्रवलवलवन्तश्च रिपवः ॥
जिता येनाऽनेकेऽतुलवलवता शौर्यनिधिना
स एव श्रीकृष्णो नयनपथपान्थो भवतु नः ॥ १९ ॥

ललिता—[३२]अतुलरसिकलीलासागरः कृष्णचन्द्रः
सजलजलदनीलो राधिकास्वान्तकान्तः ॥
अनुवनमनुकुञ्जं चानुधाराकदम्बं
विहरणरसिकोऽस्मन्नेत्रयुग्मातिथिः स्तात् ॥ २० ॥

---

ब्रह्मणा वत्सापहरणे कृते तत्तद्रूपः स्वयमभूद् यतो निखिलजगदात्मा; एवमधुनापि प्रणयतः स एव श्रीकृष्णः प्रणयिनीनामस्माकं नयनपथपान्थो भवतु । निखिलजगदात्मनस्तस्यात्र दर्शनदानमनायाससाध्यमेवेति भावः । उदयदित्यत्र 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं चक्षिङो ङित्करणाज् ज्ञापकात् । अत एव माघः 'उदयति विततोर्ध्वरश्मिरज्जा' विति रैवतकवर्णने प्रयुक्तवान्; मुरारिरपि 'स्फायन्निर्मोकसन्धिप्रसरदविगलत्सम्मदस्वेदपूरा' इति नागिनीवर्णने स्फायदिति प्रायुङ्क्त । नक्षत्रमालाकारेणापि श्रीनीलकण्ठाचार्येणोक्तम् ।

आर्या—अनुदात्तेत्त्वप्रथितं युवति निबोधात्मनेपदमनित्यम् ।
उदयति सविता चन्द्रो न निर्गतं यौवनं तु तथा ॥

परिभाषाप्रत्याख्यानपक्षेऽपि उत्पूर्वादिधातो रूपसिद्धेः सर्वमनवद्यम् ।

(३१) बकादिबलवद्रिपूणां जेताऽस्मद्दृग्गोचरो भवतु । अत्र यथा स्वानुग्राह्यानुग्रहप्रतिबन्धकीभूताञ्जरासन्धादीञ्जित्वा भक्तानुग्रहं कृतवानेवमस्मन्मनोरथपरिपन्थिपातकपराजयकर्मणि स एव शौर्यनिधिर्भवत्विति विशाखाशयः ।

(३२) अतुलविशेषणं यद्यपि रसिकलील्योरुभयोरपि समन्वयं भजते तथापि रसिके सम्बन्धमाप्नुवद्भवति लीलास्वपि वैशिष्ट्याधायकं न पुनर्लीलान्वितं रसिके कमप्यतिशयमाधत्तेऽतश्च अतुलो यो रसिकस्तत्कृताया लीलास्ता अप्यतुला एव भवन्ति तासां सागर इवेत्युपमितसमासः सजलजलदनील इति ध्यानानुगुणं विशेषणं; राधिकास्वान्तकान्त इत्यनेन राधाहृदयेनाभिलषित इत्याकारकार्थबोधनेन साकमेव आराधनकर्त्रीणां स्वान्तैः काम्यमान इत्यर्थ-

श्रीराधा—[33]अहं स राधारमणो रमण्यः
श्रीकृष्णचन्द्रोऽद्य समागतोऽस्मि ॥
युष्माकमाकर्षणविद्ययेवा—
ऽपर्णेश्वरप्रार्थनयाऽनयाऽहम् ॥ २१ ॥
तस्मादिदानीमखिला भवत्यो
मा खिद्यत प्रेमपवित्रभावाः ।
उन्मील्य नेत्राणि विलोक्य हर्षान्
मामात्मनाथं भवताऽऽप्तकामाः ॥ २२ ॥

सर्वाः पट्टराज्ञ्यः—[34]( सद्यश्चक्षूंषि समुन्मील्य )
सजलजलदवर्णं पीतवस्त्रावृताङ्गं
विकचकमलनेत्रं बर्हिपिच्छावतंसम् ॥

---

स्फुरणेन समासोक्तिगर्भत्वमस्य विशेषणस्यावसीयते । परस्ताच्च अनुवनम् अनुकुञ्जम् अनुधाराकदम्बमिति सामीप्यार्थेऽव्ययीभावः । एवं सर्वत्र विहरणरसिकस्य तस्य अस्मन्नेत्रातिथिभावे को वा श्रम इति हार्दम् । स्तादित्याशंसायां लोट् । तथाच विहारशीलो भगवान् भवत्वत्रापि विहारी येन वयं कृतार्था भवेमेति ध्वनिः ।

( ३३ ) इदानीं श्रीराधा सर्वासां राज्ञीनां मूर्छापनयनाय कौतुकमिव तन्वाना स्वयमेव श्रीकृष्णभावेन वक्ति । हे रमण्यः ! युष्माकं ( कर्तृषष्ठी ) युष्मत्कर्तृकयाऽनया ( किञ्चिद्व्यवहितयाऽपि बुद्धिसन्निकृष्टया ) श्रीमदपर्णेश्वर प्रार्थनया ' शिव शिव शिव पाहि पाहि पाहि ' इत्याकारकया आकर्षणविद्यया इव ( आकृष्ट इव ) स राधारमणः—राधावल्लभोऽपि—अद्य—इदानीमहं समागतोऽस्मि । अस्मिन् पद्ये प्रथमं राधयाऽऽत्मविशेषणत्वेनोपात्तमहम्पदं पुनः कृष्णान्वयितयोपात्तेनाहम्पदेन सामानाधिकरण्यमुपयातमुभयो राधामाधवयोरतितरां शक्तिशक्तिमतोरिवाभेदमापादयत्कमपि चमत्कारातिशयं पुष्णातीति नैतद् द्विरुक्तं मन्तव्यम् । मूर्छितास्ताः प्रबोधयितुमाह यस्मादहमिदानीमागतस्तस्माद् यूयं मा खिद्यत किन्तु भवतीनां प्रेमपवित्राशयत्वं ज्ञात्वैवागतं मामात्मनाथं विलोक्य आप्तकामा भवतेत्याश्वासनवचनम् ।

( ३४ ) सर्वासामासां श्रवणेषु मधुधारा वमदिवैनद्वचनमाकर्ण्य श्रीकृष्णव्याहारमेव मन्वानाः सर्वाः पट्टराज्ञ्यः सद्य एव चक्षूंषि समुन्मील्य सम्भूय प्रणिगदन्ति । सजलजलदवर्णमित्यादिविशेषणपञ्चकविशिष्टं कृष्णचन्द्रं नत्वेत्य-

अधरधृतसुवेणुं त्वां वयं कृष्णचन्द्रं
हृदयदयित नत्वा स्वागतं व्याहरामः ॥ २३ ॥

( निपुणं निर्वर्ण्य )

केयं माया क्व यातः श्रीकृष्णचन्द्रोऽद्य सत्वरम् ॥
कैषा शिष्यान्विता भाति योगिनीव वियोगिनी ॥ २४ ॥

रुक्मिणी—( [३५]साञ्जलिबन्धम् )

किं रमासि परमाथवा शिवा योगिनी किमथवा सरस्वती ॥

( किञ्चित् सप्रत्यभिज्ञमिव )

ज्ञातमास्त्वमसि राधिकाधिका प्राणतःप्रियतमा प्रियस्य नः ॥ २५ ॥

राधा—( [३६]साश्चर्यम् ) कदाप्यदृष्टे जने कथमेवमनुमासि ?

---

न्तेन ध्यानावधानधृतस्वरूपानुवादतया निर्दिश्य नमनमनुविधाय च स्वागतं व्याहराम इत्यत्र तुभ्यमिति शेषः । नेत्रोन्मीलने कृतेपि चिरानुध्यातवस्तुस्वरूपमेकपद एव नापैति तेन स्वागतं व्याहृतम् । यदा तु निपुणनिर्वर्णनेन वस्तुतत्त्वमवधारितं तदा कृष्णमपश्यन्तीनामग्रे च सखीसमन्वितां राधामप्रत्यभिजानानानां ससम्भ्रमो भवति वाग्व्यापारः केयमित्यादि । इयं पुरोवस्थिता का ? क्व यातः कृष्णचन्द्रः? अद्येत्यधुनैवागत्य सत्वरं क्व पलायित इति भावः । शिष्याभिरन्विता एषा का ? कृष्णस्थाने प्रतीयमानयाऽनया नूनं योगिन्या भाव्यं तथापि इयं वियोगिनीव—मुखमुद्राया ग्लानत्वेन काचिदस्मादृशेव लक्ष्यते, परमनुत्कटवेषतया योगिनीति अबोधि ।

( ३५ ) योगिनीं मत्वैव तत्र पूज्यबुद्धिपुरस्कारेण साञ्जलिबन्धं रुक्मिणी आत्मीयभावानुगुणमेव तर्कयन्ती पृच्छति किमिति । अत्रानवगततत्त्वतया सम्बोधनाभावः स्थाने । किं रमासि ? अथवा शिवासि ? आहोस्विद् योगिनीभावमापन्ना सरस्वत्यसि ? त्रिमूर्तिकलत्रमन्तरेणैवंविधमहानुभावत्वादि नैव सम्भवेदिति तर्कावष्टम्भः । अत्रान्तरे श्रीकृष्णनिर्मितस्वलीलागृहभित्तिचित्रावल्यां पूर्वदृष्टराधाचित्रेण संवादिनीमाकृतिं प्रत्यभिज्ञाय—किञ्चित्सप्रत्यभिज्ञमिवेतीवपदाहितः संशयोपि निर्णयावसानो भवति । आः इत्येतद्विस्मयावसानबोधकमव्ययम् । ज्ञातमित्यनेन संशयशान्तिरुच्यते । तदेवाहृत्य निगदति, त्वमसि राधिका, या नः प्राणप्रियस्य ( कृष्णस्य ) प्राणतोप्यधिका प्रियतमा ।

( ३६ ) ज्ञाततत्त्वां रुक्मिणीमदृष्टपूर्वमात्मानं जानन्ती राधा साश्चर्यं

रुक्मिणी—दृष्टपूर्वैव भगवती मे ?

राधा—[३७]क्व कदा वा दृष्टा राधा देव्या ?

रुक्मिणी—[३८]कालिन्दीपुलिने कदम्बकदलीकुञ्जे रहस्तिष्ठतो—
रन्योन्याननबद्धनेत्रयुगयोरानन्दमग्नात्मनोः ॥
प्रेमालिङ्गनलाभलब्धपरमप्रीत्योर्मनोहारिणो
राधामाधवयोर्विलोक्य युगलं चित्रेऽपि मोदामहे ॥ २६ ॥
तत् चित्रदर्शनपरिचयेन श्रीराधामेव त्वां जानामि ।

राधा—( [३९]स्वगतम् ) अहो ! रुक्मिण्याः स्वप्राणप्रियप्रेम्णा तदीयप्रेयस्यामपि मयि प्रीत्यतिशयः । ( प्रकाशम् ) देवि ! अवितथमेवानुमानं ते, सैवाऽहं राधा इमाश्च मे प्रियवयस्याः सन्ति ।

रुक्मिणी—देवि राधे ! कथमकस्मादेव श्रीमत्या अत्रागमनमिति ज्ञातुमीहामहे ।

---

पृच्छति—कथमेवमदृष्टपूर्वे जनेऽनुमासि ? लिङ्गदर्शनाभावे ह्यनुमानानुदयादिति भावः ।

( ३७ ) यदाहि रुक्मिण्या 'दृष्टपूर्वैव मे भगवती' त्युक्तं तदाऽऽत्मनि रुक्मिण्याः परिचयमनास्मरन्ती, क्व कदा वा दृष्टा राधा देव्या ? इत्यनेन कस्मिन् देशे कस्मिन्वा काले भवत्या राधा दृष्टा इति पृच्छति । अस्मिन्वाक्ये स्वनामोच्चारणं राधया नम्रभावप्रकटनायैव कृतम् ।

( ३८ ) रुक्मिणी स्वानुमानस्य परामर्शविकलत्वं परिहर्तुकामा सादृश्यलिङ्गकमनुमानमवतारयति । कालिन्दीपुलिने इत्यादिना । श्लोकोयं प्रथमाङ्के पूर्वं चित्रदर्शनप्रसङ्गे व्याख्यात एव । यमुनाकूले रहः केलिमनुतिष्ठतो राधामाधवयोश्चित्रं मया दृष्टं तत्परिचयेन त्वां राधामेवेत्येवकारेणायोगव्यवच्छेदार्थकेन जानामीति च निगमनेन स्वानुमानं निगमितं रुक्मिण्या ।

( ३९ ) राधा स्वगते, रुक्मिण्युदाहृतचित्रवर्णनपद्ये विशेषणार्थावगतं रुक्मिणीप्रेम बहु मन्यमाना तत्र च श्रीकृष्णविषयकं रुक्मिणीप्रेमाणं परां कोटिमारोपयन्ती 'अहो' इत्युक्त्वा सविस्मयाऽपि 'तदीयप्रेयस्यां मयी' तिपदेन—न केवलं रुक्मिणीप्रभृतीनां मयि प्रीतेः प्रवृत्तिनिमित्तं कृष्णविषयकं तदीयं प्रेमैवापितु किञ्चिदन्यदपि, तच्च मद्विषयकश्रीकृष्णकर्तृकप्रियतरत्वबोधकेयसुन्प्रत्ययेन व्यञ्जितं स्वीयं सौभाग्यातिशयमेव दर्शयन्ती रुक्मिण्याः प्रीत्यतिशयं शंसति । प्रकाशं च अवितथमेवानुमानं ते इत्यादिना तत्कृतमनुमानमनुमोदते ।

श्रीराधा—[४०]कालिन्दीपुलिने निकुञ्जकुहरे सत्स्फाटिके मन्दिरे
राधामाधवनाथसञ्ज्ञकमुमानाथं समर्च्यादरात् ॥
ध्यायन्ती क्षणनिद्रिताऽहमबलाः श्रीकृष्णचन्द्रं मुदा-
ऽपश्यं वल्कलवाससं धृतजटं रुद्राक्षभस्माङ्कितम् ॥ २६ ॥

विलोक्यैव तत्क्षणं त्यक्तनिद्रा 'हा किमेतन्मया दृष्टम्' 'क्व राजाधिराजमण्डलमौलिमणिमञ्जरीरञ्जितचरण-युगलः श्रीद्वारकाधीशः' क्व चायं तपस्विवेशः; केनापि महता कारणेन भवितव्यं, न मे स्वप्नो मिथ्या भवति, ततः श्रीद्वारकां गत्वा तद्विषये निर्णयं करिष्यामीति विचार्य तद्दिन एव गोकुलादेताभिः सह प्रस्थायैकेन मासा समासादिता श्रीद्वारावती; परमस्माकं सर्वासां जीवन-सर्वस्वं संसारसर्वस्वं सौभाग्यसर्वस्वं च श्रीकृष्णचन्द्रः क्वेदानीं विराजत इति ज्ञातुमीहामहे भवतीभ्यो वयम्।

---

(४०) रुक्मिण्या अकस्मादागमनस्य कारणं पृष्टा श्रीराधा स्वागमने प्रयोजकं प्रयोजनं च वर्णयति। 'कालिन्दीपुलिने' इत्यादिना। कालिन्दीतटे स्वप्रतिष्ठापितस्य श्रीराधामाधवनाथसञ्ज्ञकस्य शिवस्यार्चनं परमादरेण कृत्वा क्षणं ध्यायन्ती यावन्निद्रितकल्पाभवं तावन्मया स्वप्ने, हे अबलाः! (बलाधायकस्य नायकस्यासान्निध्याद्युक्तैवाबला इति सम्बुद्धिः) मुदा नतु खेदहेतुतया वल्कलवाससं धृतजटं रुद्राक्षभस्माङ्कितं श्रीकृष्णचन्द्रमपश्यं तत्क्षण एव त्यक्तनिद्रा सती 'हा किमे-तद्' इति विचारयन्ती, राजाधिराजस्य तपस्विवेशे कारणजिज्ञासाकुला तद्दिन एव गोकुलात्प्रस्थायैकेन मासा द्वारकां प्राप्ता। प्रातर्ब्राह्ममुहूर्त्ते उत्थाय यमुनास्नान-पूर्वं शिवार्चनानुष्ठाने रात्रिशेषतया ध्यानावस्थाविघ्नविधायकतन्द्राख्यलयकाले स्वप्नस्य सुलभतया तत्कालागतस्वप्नस्य 'अरुणोदयवेलायां दशाहाल्लभते फलम्' इति स्वप्नाध्यायादिष्टप्रकारेण फलावश्यम्भावं मन्वाना, 'न मे स्वप्नो मिथ्या भवति' इति स्वनिश्चयं पुरस्कृत्य ब्रूते। यद्यपि द्वारावती प्राप्ता तथापि यदर्थ-मत्रागमनं स श्रीकृष्णः क्वेदानीं विराजते, योऽस्माकं सर्वासां जीवनसर्वस्वं संसारसर्वस्वं सौभाग्यसर्वस्वं चास्तीति शेषः। तदेतद्भवतीनां सकाशाज्ज्ञातुमी-हामहे। अत्र श्रीराधायाः शिवाराधनमुपनिबद्धं कविना सद्यो निश्चिन्ततातये। श्रीराधाप्रभृतिगोपीनां शिवभक्तत्वं शिवाराधनलब्धश्रीकृष्णसमागमत्वं च श्रीमद्भागवते दशमस्कन्धे श्रीकात्यायनीव्रतमहिमोपवर्णनेन सूपपादितम्।

रुक्मिणी—[41]देवि राधे ! अस्माभिः सर्वाभिः सत्पुत्रप्राप्तये प्रार्थितः परममाहेश्वरोऽस्मत्प्राणनाथो 'न महेश्वरानुग्रहमन्तरा सत्पुत्ररत्नप्राप्तिरिति तमेवाशुतोषं तपोभिः सन्तोष्य युष्माकं सर्वासां मनोरथान् पूरयिष्यामी' त्युक्त्वा तपसे प्रस्थितः । तस्य च प्रस्थितस्य गत एको मासस्तथापि नास्ति क्वापि तत्प्रवृत्तिर्वयं तु तत्प्रयाणोत्तरदिवस एवानुतापतप्तास्तद्रक्षणाय तत्तपोभङ्गशान्तये त्वरिततरं तदीयदर्शनलाभाय च परित्यक्तसर्वसुखभोगा उपवनमिदमपि तपोवनं विधाय तपोभिः श्रीपार्वतीपरमेश्वरौ परया भक्त्याऽऽराधयामः परं कदा स आशुतोषः सदाशिवः परितुष्यति, कदा च श्रीमहेश्वरात्सम्प्राप्तसर्वसिद्धिवरप्रदानस्य नः प्राणप्रियस्य श्रीकृष्णस्य दर्शनं भविष्यतीति न ज्ञायते । इदमस्माकं सर्वासां मूर्खताया अविमृष्यकारिताया अदीर्घदृष्टितायाश्च फलम् ।

( इति वदन्त्यश्रूणि मुञ्चति )

सर्वाः—( [42]साश्रुपातम् ) देवि ! त्वमिव त्वमेव, या न कदापि कस्मिन्नपि श्रमे नियुक्तवती स्वामिनं, वयन्तु पुत्रलाभलुब्धास्तपोवनप्रयाणायाप्यनुमतिं दत्त्वेदानीं तद्विरहदुःखदुःसहानतिविरसान् वासरान् कथंकथमपि निर्गमयामः ।

---

अतः 'उमा कात्यायनी गौरी' इत्यमरानुशासनात्, समाराधने च 'भवानीं भवसंयुताम्' इति श्रीमद्भागवतादिष्टदिशैव सर्वा उमामहेश्वराराधनापरपर्य्यायकात्यायनीव्रतदीक्षिता एवेति तासां सर्वासामपि सुप्रसिद्धमेव शिवभक्तत्वम् । गोपीश्वरश्च गोपीभिः प्रतिष्ठापितोऽद्यापि यमुनापरिसरे वृन्दावने वर्त्तत एवेति शास्त्रदृशामनावृतमेव ।

( ४१ ) रुक्मिणी राधाप्रश्नस्योत्तरव्याजेन श्रीकृष्णप्रवृत्तिनिवेदनेन साकं स्वानुशयहेतुभूतां स्वप्रवृत्तिमपि निवेदयति 'देवि' इत्यारभ्य 'प्रस्थित' इत्यन्तेन । इदानीं 'श्रीकृष्णचन्द्रः क्वेदानीं विराजते' इत्यवशिष्टप्रश्नांशमुत्तरयति—प्रस्थितस्य तस्य मासे व्यतीतेऽपि प्रवृत्तिर्नासादिता । किञ्च वयन्तु तद्वियोगेन सर्वभोगपराङ्मुखास्तन्मनोरथसिद्धिमनुकूलयितुं प्रस्थानानन्तरमेव पार्वतीपरमेश्वरावाराधयामः परं कदा स प्रातेष्ट आगमिष्यतीति न ज्ञायते । कृताराधनोऽपि महेश्वर आशुतोषो न जायत इति चिन्तानिदानम् ।

( ४२ ) इयमेवास्मदीयाऽविमृष्यकारिता मूर्खताऽदीर्घदर्शिता चेति द—

राधा—[४३]अयि रुक्मिणीप्रमुखा देव्यो ! मा चिन्तां कुरुत, भक्तजन-भद्रङ्करः श्रीशङ्करः सर्वेषां श्रेय एव करिष्यति, परं किमप्याश्चर्यमिव मे प्रतिभाति ।

रुक्मिणी—किन्तत् ?

राधा—[४४]अप्रबुद्धहृदयेश्वराशया अश्रुतोद्धववचश्चया अहो ॥

भाथ मेऽत्र सकलाः कुलाङ्गनाः कृष्णचन्द्रविरहव्यथाकुलाः ॥२७॥

रुक्मिणी—कथमिव ?

राधा—[४५]शृणुत प्राणनाथस्य वो हृदयरहस्यम् । गोकुलेऽस्मान् विहाय श्रीमथुरानिवासवता निजेन परममित्रेणोद्धवेन सहेदं सन्दिष्टम् ।

रुक्मिणी—किन्तत् ?

राधा—[४६]भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् ॥

यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ॥
तथाऽहं च मनःप्राणभूतेन्द्रियगुणाश्रयः ॥
इति सञ्चिन्त्य पश्यन्त्यो नचिरान्मामवाप्स्यथ ।

---

दन्ती यावदश्रूणि मुञ्चति तावदेव सर्वाः स्वापराधप्रकाशनेन तादृशापराध-विमुखां राधां 'त्वमिव त्वमेवे' त्यनन्वयेन स्तुवन्ति ।

( ४३ ) इदानीं राधा सर्वास्ता आश्वासयन्त्यपि भङ्ग्यन्तरेणोपाल-भते । भक्तजनकल्याणकरस्य शङ्करस्य नामार्थान्वयेनैव श्रेयस्करता नियतेत्येव कारेण तासां मनसि विश्वासदार्ढ्यमाबध्नन्ती 'परं किमप्याश्चर्यमिव मे प्रति-भाती' ति वदति ।

( ४४ ) रुक्मिण्याऽऽश्चर्यरूपं पृष्टा राधा, भवतीभिः श्रीकृष्णहार्दं नावबुद्धं नचोद्धवोपदेशः कदापि श्रुतो येन एवं कृष्णचन्द्रविरहव्यथाकुला भवथेतीदमेवाश्चर्यमहोपदेन निर्दिशति ।

( ४५ ) 'अज्ञातहृदयेश्वराशया भाथे' ति वचनस्योपपत्तिमिव जिज्ञासमाना रुक्मिणी 'कथमिवे' ति पृच्छति—तदा राधा तदुत्तरव्याजेन नैजं गोकुलवृत्तान्तं वर्णयति 'शृणुत प्राणनाथस्य वो हृदयरहस्य' मित्यादिना 'उद्धवेन सहेदं सन्दिष्ट' मित्यन्तेन ।

( ४६ ) पुनरपि 'किन्तद्' इति रुक्मिण्या आतुरतायुतं वचनमु-त्तरयति राधा द्वाभ्यां श्लोकाभ्यामुद्धवोक्तसन्देशार्थं सङ्क्षिप्य । भवतीनां वियोगो

रुक्मिणी—[४७]ततः किम् ?

राधा–[४८]ततश्च सर्वत्र श्रीकृष्ण एव द्रष्टव्यो न तद्विहीनं तिलमात्रमपि स्थलं विद्यते ।

रुक्मिणी—[४९]भवतु किन्तथापि ?

राधा—[५०]श्रीकृष्णः सकलं चराचरमिदं भूतं भविष्यत्तथा
श्रीकृष्णः सकलं च साम्प्रतमिदं यद्दृश्यते श्रूयते ॥
श्रीकृष्णोऽहमिमाश्च यूयमपि च श्रीकृष्ण एव स्थ तन्
कस्मात्तद्विरहोऽन्यथा भवति वस्तन्नैव विद्मो वयम् ॥ २८ ॥

---

मे सर्वात्मना न हि कदापि भवति, सर्वान्तर्यामिणो मम न केनापि सर्वथा वियोगः सम्भवतीत्याशयः । तर्हि कथं न दृश्यसे इत्यत आह—यथाऽऽकाशादीनि शब्दादितन्मात्ररूपेण स्थूलभूतेषु तादात्म्येनैव वर्त्तमानानि न कुत्रापि ततः पृथग्भावमाप्नुवन्ति एवमेव अहम्=अस्मत्प्रत्ययगोचरः साक्षी–मनः-प्राणभूतेन्द्रियगुणानामाश्रयोऽधिष्ठानमित्यर्थः । तथाचाधिष्ठानाध्यस्तयोर्वियोगायोगादित्थम्भूतं मां सञ्चिन्त्य सम्यग्विचारेणावधार्य पश्यन्त्यः परमात्मत्वेन भावयन्त्यो नचिरादेव मां प्रत्यग्रूपेणैव अवाप्स्यथ ज्ञास्यथ । अयमेव भगवत आशयो यत्कारणमुपरिष्टात् ‘मामात्मानं परं मत्वा परमात्मानमेव च । आत्मा पुनर्बहिर्मृग्यः अहोऽज्ञजनताज्ञता ।’ इत्यादिवचनैः स्वयमेव विशदीकारात् ।

(४७) रुक्मिणी उद्धववचस आशयमनाकलयन्ती पृच्छति ‘ततः किम् ?’ इति । अनेन भवत्या अनूदितेनोद्धववाक्येन प्रकृते किमायातमित्यर्थः ।

(४८) राधा पूर्वोक्तमर्थं निगमयति—सर्वत्र श्रीकृष्ण एव द्रष्टव्यो न तद्विहीनं किमप्यस्ति जगति ।

(४९) केवलं पराग्दृष्टिमेवानुसन्दधाना रुक्मिणी—भवतु श्रीकृष्णः सर्वत्र तथापि यावदस्मन्नेत्रगोचरो न भवेत्तावत्कथं वयं प्रतीमस्तस्य सर्वत्रभावं, कथं वा दर्शनमनापन्ने तस्मिंस्तद्विहीनस्थले तदृष्टिमुपपादयाम इत्याशयेन ब्रूते ।

(५०) राधातूद्धवोपदेशेनावगतभगवत्तत्त्वा स्वानुभवं प्रमाणयन्ती बोधयति सर्वाः । इदं सकलं चरमचरं भूतं भविष्यत् सकलं साम्प्रतं वर्त्तमानं यद् दृश्यते श्रूयते वा तदखिलं कृष्ण एव । एवं ‘यदिदं किञ्च जगत्सर्वं दृश्यते श्रूयतेपि वा’ इत्यादि कठवाक्यनिरूपितं सार्वात्म्यमागृणन्ती स्वस्या रुक्मि-

रुक्मिणीप्रमुखाः सर्वाः—( साश्रुपातम् ) देवि ! [५१]तादृशी दिव्यदृष्टिस्त्वादृशीभिः परमपुण्याशयाभिः कथमपि परमदयालोः परमेश्वरस्य कृपयैव लभ्यते न सर्वाभिः । वयन्तु परिच्छिन्नदृष्टयः परिच्छिन्नमेव श्रीकृष्णं पश्यामस्तेन तद्वियोगाग्निर्नक्तन्दिनं दन्दहीति नः । कुतस्तादृशं नः पुण्यं स्याद्येन पुण्या पवित्रा च सर्वत्र श्रीकृष्णदृष्टिः स्यात् ।

( इति वदन्त्यो निःश्वासं मुञ्चन्ति )

राधा—( सकरुणं स्वगतम् ) ‘ यथा[५२]कण्टकविद्धाङ्गो जन्तोर्नेच्छति तां व्यथाम् ’ इतिन्यायेन मयाप्युद्धवमुखोद्गतश्रीकृष्णचन्द्रसन्देशवाक्श्रवणात्पूर्वं तादृश्येव तद्विरहव्यथानुभूतैव । ततो मया तासां विरहव्यथाविस्मरणाय प्रयत्नपरम्परा कार्यैव. (प्रकाशम्) प्रियस्वसारो मे ! मा चिन्तां कुरुत, शीघ्रमेव श्रीसाम्बसदाशङ्करः सन्तुष्यति । तत्प्रदत्तानेकवरलाभसन्तुष्टः प्राणनाथोऽपि नः सद्य आगमिष्यति, परं तदागमनपर्यन्तं वयमपि यूयमिव श्रीपार्वतीप्राणेश्वरं श्रीपरमेश्वरं दुष्करैस्तपोभिराराधयिष्यामः, प्रतिरात्रं च श्रीकृष्णचन्द्रस्य बाललीला अभिनेष्यामो येन तत्तल्लीलाविलोकनक्षणे श्रीकृष्णचन्द्रविरहव्यथाविस्मरणं भविष्यति ।

रुक्मिणी–महानयमुपकारभारोऽत्रभवत्या भवत्याः ।

( इत्युक्त्वा साञ्जलिबन्धं प्रणमति )

---

ण्यादीनामपि श्रीकृष्णरूपत्वमभिधाय, एवमात्मभूतस्य वस्तुनो वियोगासम्भवात् ‘ कस्मात्तद्विरहव्यथा वो भवतीति न वयं विद्मः ’ इत्यनेन विस्मयं दर्शयति ।

( ५१ ) इदानीं राधोपदिष्टराद्धान्ते तलस्पर्शमलभमानाः सर्वाः परेश्वरकृपालभ्या तादृशी दिव्यदृष्टिर्नास्माभिरधिगता—वैराग्यादिसम्पन्नैरुपलक्ष्यमाणा सा दृष्टिः परिच्छिन्नदृशामस्माकमनुपयोगावहैवेति कृष्णवियोगो दन्दहीत्येव नः । तादृशपुण्याभावादस्माकं सर्वत्र श्रीकृष्णदृष्टिर्दुरधिगमेत्यर्थः ।

( ५२ ) एवंवादिनीस्ता आलोक्य राधा स्वगते–कण्टकविद्धाङ्गन्यायेनात्मनो भूतपूर्वामवस्थामास्मृत्य तासां बोधानुदये स्वविस्मयमपाकरोति यथेत्यादि । तासां श्रीकृष्णविरहव्यथाविस्मारणाय सङ्कल्पं दृढयति ‘ प्रयत्न-

राधा—[५३]तर्हि वयमपि तपोवनभूतेऽस्मिन्नुपवने तपस्तप्तुं गच्छामः ।

( इति वदन्ती निष्क्रान्ता )

रुक्मिणी—सख्यो ! वयमपि सायंसमयकृत्यं कर्त्तुं गच्छामः ।

सर्वाः—यथेच्छा देव्याः ( इत्युक्त्वा ) इत इतो देवी ( इति वदन्त्यो निष्क्रान्ताः )

( ततः [५४]प्रविशन्ति चिरतपःप्रभावप्राप्तसाक्षाद्दर्शना उन्मत्तावस्थाः सर्वा राज्ञ्यो गोप्यश्च )

एका—[५५]कृष्ण कृष्ण परमेश्वर सर्वास्तावका वयमिह प्रतिवेलम् ॥
त्वद्वियोगविषवारिधिमग्ना नैव कञ्चिदपि विद्म उपायम् ॥ २९ ॥
त्वत्पदाम्बुरुहदर्शनसौख्यप्राप्तये प्रणयसागर तस्मात् ॥
केवलं परशिवं परमेशं पार्वतीपतिमुपास्महे एकम् ॥ ३० ॥
यदि मनोवचनैरपि कर्मभिः प्रतिदिनं परिपूजितमीश ते ॥
चरणपद्ममुमेश्वर तर्हि नः प्रियतमं परिपाहि रमापतिम् ॥ ३१ ॥

---

परम्परा कार्यैवेति । प्रकाशं च तदुपायद्वयमादिशति । अस्मत्कृततपसाऽऽराधितः शिवोऽबलासु कृपापरवशः श्रीकृष्णं वरैः सद्य एवोपच्छन्दयिष्यति ततश्च नचिरेणैव कृष्ण आगमिष्यति—किञ्च प्रतिरात्रं श्रीकृष्णबाललीलाभिनयव्यापारेण च विरहवेदनाव्यपोहः सुशको भविष्यति ।

( ५३ ) उक्तविरहवेदनापनोदनप्रकारद्वये रुक्मिण्या सप्रणामाञ्जलिदत्तानुमोदने राधा 'तर्हि तपोवनभूतेऽस्मिन्नुपवने तपस्तप्तुं गच्छाम' इत्युक्त्वा यावन्निष्क्रान्ता तावदेव सायंसमयकृत्यार्थं गन्तुकामां रुक्मिणीमनुसरन्त्यो निष्क्रान्ताः सर्वाः ।

( ५४ ) 'तद्भावनानिष्पत्तौ तद्भावापत्तिरिति' योगशास्त्रात् तपःप्रभावेन प्राप्तसाक्षाद्दर्शनाः—लब्धसाक्षात्कारकल्पाः—अत एव दर्शनविषयस्य भावनामात्रस्वरूपत्वेन तत्र च वास्तवतां मन्वानानामुन्मत्तावस्थत्वं गोपीनां राज्ञीनां चेति तदवस्थानामेव प्रवेश उपनिबद्धः ।

( ५५ ) इदानीं काचिद् राज्ञी पद्यद्वयेन कृष्णमभिमुखावस्थितमिव सम्बोधयन्ती 'त्वद्वियोगविषवारिधिमग्ना वयं तत्पारप्राप्तेरुपायं न विद्मः किन्तु त्वत्पदाम्बुरुहयुग्मदर्शनसुखप्राप्तये केवलं पार्वतीपतिमुपास्महे' इत्युक्त्वा—शिवाभिमुख्यसम्पादनार्थं पूर्वकृतं शिवाराधनं यदिपदेन निमित्ततामापाद्य तत्फलत्वेन स्वप्रियतम—श्रीकृष्णसंरक्षणमर्थयते । यदि मनोवचनैरित्यादि ।

अये गौरीनाथ ! प्रणतजनतावत्सल विभो
[५६]कृपापारावार ! प्रणयनिलयो नः प्रियतमः ॥
अनन्यस्ते भक्तः सफलसकलार्थोऽत्र भविता
कदा नः श्रीकृष्णो नयननलिनानन्दजनकः ॥ ३२ ॥
[५७]कति युगानि ययुर्जगदीश्वरं हृदयवल्लभमिन्दुमुखं विना ॥
नयनयोरतिथिर्भविता कदा स हि सदाशिवलब्धवरो हरिः ॥ ३३ ॥
[५८]आशुतोष तवं साशुतोषता क्वाधुना वद विभो पलायिता ॥
देवदेव ! यदुवंशभूषणे यत्तपस्विनि चिरान्न तुष्यसि ॥ ३४ ॥
[५९]हृदयदयित देवदेव मा मा व्रज तपसेऽद्य तपोवनं दयाब्धे ॥
तनयसुखमिहास्तु मास्तु वा नः कथमिव नाथ विना त्वया भवेम ३५
अन्या—[६०]जगदम्ब दयामयाशये ! जगतामेकगुरुं महेश्वरम् ॥
हृदयेश्वर आशु नः प्रिये परितुष्येत् स यथा तथा कुरु ॥ ३६ ॥

---

( ५६ ) पद्येऽस्मिन् गौरीनाथ इति सम्बोधनं सर्वदा गौर्या सनाथस्य तव नह्यविदितं वियोगदुःखमतः प्रणतजनतावत्सलोसि । किञ्च भक्तकर्माद्यपेक्षणं ते नोचितमिति कृपापारावारपदेन सम्बोध्य प्रणयनिलयस्तवानन्यभक्तश्चास्मत्प्रियतमः श्रीकृष्णः सफलसकलार्थः सन् कदाऽस्मन्नयनानन्दजनको भवितेति स्वमौत्सुक्यमाह ।

( ५७ ) कृष्णवियोगक्षणान्युगकल्पान्मन्वाना प्रथमोक्तमौत्सुक्यमक्षरान्तरैरुद्गिरति । कतियुगानीति ।

( ५८ ) फलाविलम्बाय हठभक्तिमादर्शयति । हे आशुतोष विभो ! तव सा आशुतोषता क्वाधुना पलायिता ? देवदेव ! तद्वद, यच्चिरात्—तपस्विनि यदुवंशभूषणे नाऽद्यापि तुष्यसि; नैतत्ते नामानुगुणमित्यर्थः ।

( ५९ ) पुनरपि श्रीकृष्णवियोगस्मृतौ तमुद्दिश्याह । हृदयदयित अद्य तपसे तपोवनं मा व्रज; चिरप्रस्थितस्यापि 'अद्य मा व्रजे' ति निरोधोक्तिरुन्मादमूला । तनयसुखं त्वद्वियोगोपायसाध्यं नोऽस्माकमस्तु मा वाऽस्तु परन्तु त्वया विना हे नाथ ! कथं भवेम; त्वद्विरहो दुःसह एवेत्यर्थः ।

( ६० ) अन्या काचिन्महेश्वरमनुकूलयितुं श्रीपार्वतीमर्थयते । दयामयाशये हे जगदम्ब ! जगतामेकगुरुं 'सर्वाधिको रुद्रो महर्षिः' इति श्वेताश्वतरश्रुतेः । विश्वगुरुं महेश्वरं तथा कुरु—प्रेरय—यथा नः प्रिये हृदयेश्वरे स आशु तुष्येत् ।

[६१]क्व वा महेशो नहि सन्निधत्ते चराचरात्मा भगवन् परात्मा ॥
इहैव तं तोषय तत्तपोभिस्तपोवनं मा व्रज नाथ घोरम् ॥ ३१ ॥
यदि हृदि दयिताग्रहग्रहस्ते परतपसेऽद्य तपोवनं प्रयातुम् ॥
सदयहृदय तर्हि देह्यनुज्ञां वयमपि नाथ सह त्वया प्रयामः ॥ ३८ ॥
इतरा—[६२]न मखैरखिलार्थदक्षिणैर्न तपोभिश्च सुदुष्करैस्तथा ॥
परितुष्यति शङ्करो यथाऽमलभक्त्याऽखिललोकशङ्करः ॥ ३९ ॥
इति नाविदितं तवाप्यहो तदपास्याग्रहमात्महृद्गतम् ॥
गृह एव सदा सदाशिवे कुरु भक्तिं निखिलार्थसिद्धिदाम् ॥४०॥
अपरा—[६३]शंभो शङ्कर! भक्तवत्सल भवद्भक्ताग्रणीनां मणिः
श्रीमान् श्रीयदुवंशमौक्तिकमणिः श्रीकृष्णचिन्तामणिः ॥
त्वां सन्तोषयितुं तपोभिरधुनाऽरण्यं सुपुण्यं गत—
स्तं त्वं पाहि कृपानिधे प्रतिपदं प्रेम्णेति मेऽभ्यर्थना ॥ ४१ ॥

---

(६१) सैव पुनरुन्मादावस्थावेशेनाह । भगवन्! चराचरात्मा अत एव परात्मा महेशः क्व वा न सन्निधत्ते? अपि तु सर्वत्रेत्याशयः। तदिहैव स्थितः संस्तपोभिस्तं तोषय—हे नाथ घोरं तपोवनं मा व्रज । यद्यत्रापि महेश्वरस्तर्हि तपोवनादिगमनं व्यर्थं किमर्थमूरीकरोषीति भगवद्वियोगभीरुर्भगवन्तं निरुन्धानापि 'तमत्रैव तोषये' ति वदन्ती स्वाभीष्टसिद्धये न प्रमाद्यतीत्यर्थः । अपि च यदि विक्षेपराहित्याय तपोवनगमनाग्रहस्तर्हि आज्ञां देहि, वयमपि त्वया सहैव प्रयामो वनमित्युपरितनेन सम्बन्धः ।

(६२) इतरा काचिद्गोपी—सर्वस्वदक्षिणैर्मखैर्दुष्करैस्तपोभिर्वा शङ्करस्तथा न तुष्यति यथा निर्मलभक्त्या तुष्यति; इति तव नास्त्यविदितं तस्मादाग्रहमपास्य गृहे एव स्थितः सन् निखिलार्थसिद्धिदां सदाशिवे भक्तिं सदा कुरु । चिरप्रयातस्य नैतत्तपोवनगमनवारणं किन्तु बहुक्लेशदं तपोवनवासमुत्सृज्य गृहानागच्छ, गृहगतस्यापि ते शिवाराधनेनेष्टसिद्धिर्भवित्र्येवेति भङ्ग्या विरहप्रतीकाराभ्यर्थनैषा ।

(६३) अपरा राज्ञी—शम्भो इत्यादि सम्बोधनैः कृपानिधित्वं शिवस्यावबोध्य, तव भक्ताग्रणीः तपोभिस्त्वां सन्तोषयितुमरण्यं गतस्तं त्वं पाहि—इत्याह । अत्र पाधातुवाच्यं रक्षणमिष्टसिद्धिसम्पन्नस्य कुशलेन सद्यः स्वगृहागमनपर्यन्तमर्थं गर्भीकरोति ।

अन्या—[६४]परमा चरमार्थनेति नः प्रणयिन् प्राणपते कृपानिधे ॥
युगकोटिसमः प्रयाति नः क्षण एकोऽपि विना प्रिय त्वया ॥४२॥
यदि हृदि तव शम्भुः शम्भुचित्तेऽसि च त्वं
यदि तव शिव आत्मा त्वं तथात्मा शिवस्य ॥
प्रिय! वद वद तर्हि प्राणनाथ! प्रयासो
घनवनमुपगन्तुं कान्त! कार्यः किमर्थम् ॥ ४३ ॥

एका—[६५]करुणावरुणालयाशये! जगदम्ब! प्रणतार्त्तिहारिणि ॥
हृदयप्रियमाशु दर्शय प्रणयापारपयोनिधिं प्रभुम् ॥ ४४ ॥
मातर्मातर्गिरिवरसुते गौरि कारुण्यपूर्णे-
ऽपर्णेऽपर्णे कुरु कुरु कृपापूरपूर्णान् कटाक्षान् ॥
अस्मास्वस्मत्प्रियतम उमे चापि संसारसारे
श्रीश्रीकृष्णे द्रुतमिह भवेद्यैः समस्तार्थसिद्धिः ॥ ४५ ॥

(एवं प्रार्थयन्त्यो मूर्छया पतन्ति सर्वाः)

(ततः प्रविशति दयार्द्रा श्रीपार्वती)

श्रीपार्वती—[६६]वत्सा! वत्सा! अलमलमिहानन्तया चिन्तया वः
श्रीकृष्णस्य प्रणयवसतेः प्राणनाथस्य राज्ञ्यः! ॥

---

(६४) अत्र अर्थनापदं केवलं विज्ञापनापरं, प्रार्थनीयस्य वस्त्वन्तरस्यानिर्देशात्। तथा च सद्य आगत्यास्मानानन्दयेति ध्वन्यते। तदेवाहृत्य परामृशति यदीत्यादिना। यदि शम्भोस्तव च परस्परहृदयाश्रितत्वं तर्हि परस्परात्मनोर्युवयोर्यत्र कुत्राऽपि सुशकमाराधनं तथा च तदर्थं वनमुपगन्तुं किमर्थः प्रयासः कार्यो, व्यर्थ इत्यर्थः।

(६५) एका काचिद्राज्ञी—जातिसामान्यप्रयुक्तं पक्षपातमाकाङ्क्षमाणा स्वेष्टमभ्यर्थयते। करुणावरुणालयाशये प्रणतार्त्तिहारिणि जगदम्ब इति सम्बोधनत्रयेण स्वेष्टसिद्धावाभिमुख्यमापाद्य हृदयप्रियं प्रभुमाशु दर्शयेत्युक्त्या सद्य आगमनमर्थितं तच्च स्वेष्टसिद्धिविकलं नेष्टमित्याह! मातरित्यादि। अत्र अपर्णे इति सम्बोधनस्य वीप्सा, यथा त्वमपर्णासि एवमस्मानप्यपर्णान्—अपाकृतानि ऋणानि यैस्ते तादृशान् कुरु 'प्रजया पितृभ्यः' इति पैत्रकऋणापाकरणार्थं प्रजादानेन धन्यान् कुर्विति ध्वनयितुम्। तदेतदुक्तम्। अस्मासु अस्मत्प्रियतमे च कृपापूर्णान्कटाक्षात् कुरु यैः समस्तार्थसिद्धिर्द्रुतं भवेदिति।

(६६) एवं प्रार्थयन्त्यो यावन्मूर्च्छिताः पतन्ति तावत् प्रविश्य

भक्ताभीष्टार्पणसुरतरुः शङ्करस्तत्र देवे
यस्मान्नित्यं सदयहृदयो वर्त्तते देवदेवः ॥ ४६ ॥

**सर्वाः**—केनेदममृतं कर्णेषु नः सिक्तम् ? ( इति वदन्त्यः किंचिन्नेत्राण्युन्मील्य श्रीजगदम्बां च विलोक्य साश्चर्यानन्दमुत्थाय पुष्पहस्ताः )

जय जय जय मातर्विश्वमातर्नमस्ते
जय जय जय विश्वाधीशकान्ते ! नमस्ते ॥
जय जय जय भक्तोद्धारधुर्ये ! नमस्ते
जय जय जय नित्यानन्दमूर्त्ते नमस्ते ॥ ४७ ॥

( इत्युक्त्वा सर्वाः पुष्पाञ्जलीन् श्रीपार्वतीपदयोरर्पयन्ति )

**श्रीपार्वती**—वत्साः ! सर्वासां भवतीनां निजप्राणप्रियश्रीकृष्णचन्द्रविरहविषादविषोदधिमग्नानां करुणकरुणानि प्रार्थनाशतानि निशम्य दयार्द्रहृदया श्रीकैलासादत्रागताऽहं तद् ब्रूत किं वः प्रियं करवाणि ?

**सर्वाः**—[६७]मातः ! सर्वासामस्माकं ज्येष्ठा श्रेष्ठा च श्रीरुक्मिण्येव प्रार्थयिष्यति ।

( इत्युक्त्वा तूष्णीं स्थिताः )

---

दयार्द्रा पार्वती—हे वत्साः राज्ञ्यः युष्माकं प्राणनाथस्य प्रणयवसतेः श्रीकृष्णस्य चिन्तया—श्रीकृष्णविषयिण्या चिन्तया अलं—चिन्ता नैव कार्येत्यर्थः । यतः स्वभक्तानामभीष्टापर्णे सुरतरुरूपः शङ्करः तत्र देवे—श्रीकृष्णे नित्यं सदयहृदय एव वर्त्तते । अतः स्वयमेवानुकूले देवदेवे चिन्ताभारोद्वहनं व्यर्थमेवेति भावः ।

श्रीपार्वतीवदनादुद्गतान्यक्षराणि मूर्च्छितानामपि तासां मनांसि चेतयन्ति तासां नेत्रोन्मीलने प्रयोजकभावमुपगम्य 'केनेदममृतं कर्णेषु नः सिक्त' मिति शब्दोच्चारपूर्वमुत्थापयन्ति । सर्वा जगदम्बां विलोक्य साश्चर्यानन्दं जगदम्बां स्तुवन्ति । जयेत्यादिना । अत्र विश्वमातरितिपदं विश्वेषां मातुस्तव भक्तावने स्वतः सिद्धं वात्सल्यं, विश्वाधीशकान्ते इतिपदं समर्थकान्तयोगेन सर्वकार्यसामर्थ्यं, भक्तोद्धारधुर्ये इतिपदं भक्तोद्धारकर्मणि प्रमादालस्यादिविरहं, नित्यानन्दमूर्त्ते इति च पदं भक्तेषु परानन्दाविर्भावप्रवणत्वं क्रमेण बोधयतीति एवंविधायास्तव जये भक्ताभीष्टार्थसिद्धिर्न दुरवापेति ध्वनिः ।

( ६७ ) सर्वाभिः पुष्पाञ्जलिसमर्चितपादपद्मा पार्वती, कैलासादत्र

रुक्मिणी—[६८]मातः ! सर्वाभिरस्माभिर्मतिमान्द्यात् स्त्रीस्वभावसुलभलाघवाददीर्घदृष्टित्वाच्च सत्पुत्रलाभलोभेन प्राणसर्वस्वं हृदयसर्वस्वं जीवितसर्वस्वं च प्राणेश्वरः श्रीकृष्णचन्द्रस्तपसे तपोवनं प्रेषितः। किञ्च तपोवनं प्रति प्रस्थितस्य च तस्य श्रीकृष्णस्य गताश्चत्वारो मासास्तथापि 'कुत्र तपोवने तपः कुरुते स भगवानिति' नाद्यापि प्रवृत्तिरधिगता काचित्। तद् द्वारावतीतः प्रस्थितस्य नः प्राणनाथस्य चरित्रमद्यावधिकं द्रष्टुमीहामहे। वयन्तु श्रीप्राणनाथस्य प्रस्थानक्षणोत्तरक्षण एव निजनिजमतिमान्द्यकृतापराधपश्चात्तापवत्यः श्रीकृष्णचन्द्रसंरक्षणाय सद्यस्तदीयतपःसिद्धये च यथाशक्ति तपः कर्त्तुं प्रवृत्ताः श्रीचन्द्रचूडामणिं मनोवाक्कायकर्मभिः समर्चयाम, इमाश्च श्रीराधाप्रमुखा व्रजवनिता अप्यस्माभिः सहैव तपः कुर्वन्त्यः समर्चयन्ति सकललोकशङ्करं श्रीशङ्करम्। तथाप्यस्मदीयमन्दभाग्यप्राबल्यादाशुतोषोऽपि भगवान्नाद्यापि परितुष्यतीति विस्मयमयपयोराशिपूरे निमज्जनोन्मज्जनव्याकुलानामस्माकमत्रभवती भवत्येव परमं शरणं नान्यत्।

( इत्युक्त्वा गलदविरलाश्रुजालं प्रणम्य मौनमालम्ब्य तिष्ठति )

श्रीपार्वती—[६९]अयि वत्साः श्रीरुक्मिणीमुखाः ! श्रीकृष्णधर्मपत्न्यः ! श्रीराधाप्रमुखा व्रजवल्लव्यश्च ! निःसीमसौभाग्यवसतीनां सर्वासां भवतीनां यदि द्वारावतीतस्तपोवनं प्रस्थितस्य श्रीकृष्णचन्द्रस्य सर्वं चरित्रं विलोकयितुं प्रबला वाञ्छा जागर्त्तितरां तर्हि सर्वमहं

---

ममागमने भवतीनां करुणप्रार्थनान्येव कारणमतो ब्रूत किं वः प्रियं करवाणीत्याह तदा सर्वा ज्येष्ठां श्रेष्ठां च रुक्मिणीमेव सर्वासां प्रतिनिधितया निगद्य तन्मुखेनैव प्रार्थनां कारयन्त्यस्तूर्ष्णीं तिष्ठन्ति।

( ६८ ) अतिसरलार्थं वाक्यम्। अस्मिन् वाक्ये—तपसे तपोवनं प्रति प्रस्थितस्य चत्वारो मासा व्यतीतास्तदेतदीयं चरित्रमद्यावधिकं ज्ञातुमीहामहे इत्येतावान् प्रार्थनांशः। कथमद्यापि लब्धाभीष्टो नायातः इति विस्मयसागरे मज्जन्तीनामस्माकं भवत्येव शरणमित्युक्त्या शरणान्तरव्यावृत्तेस्त्वत्पादपद्मप्रपन्नानामस्माकमिदानीं न दुरधिगमो विस्मयसमुद्रपारः।

( ६९ ) निवेदनीयं निवेद्य यावद्रुक्मिणी गलदश्रुधारा मौनमास्थाय तिष्ठति तावदेव 'अयि वत्साः ! इत्यादिना पार्वती तासामाश्वासनं कुरुते। अत्र

दिव्यदृष्टिप्रदानेन दर्शयिष्यामि मा चिन्तां कुरुत; परमिदानीं प्रत्यासीदति प्रदोषवेला ।

पश्यत—

[७०]अयमुदयमुपैति चन्द्रचूडामणिकरुणाधिगतेष्टसिद्धिरिन्दुः ।
शिवविमुखमिवान्धकारमेतत् प्रतिपदमेत्यखिलं लयं समन्तात् ॥ ४८ ॥

अपिच—

[७१]तरणिररुणवर्णो वारुणीसेवयाऽयं
गतरुचिरतिभीतो राजतेजःप्रभावात् ॥
पुनरुदयमवाप्तुं स्वर्णदीसङ्गताङ्गं
श्रयति शिवकरं श्रीरुद्ररूपं समुद्रम् ॥ ४९ ॥

तदहं समुद्रतीरे गत्वा श्रीमहेश्वरं समाराध्यागमिष्यामि यावत्तावदखण्डसौभाग्यवत्यो भवत्योऽपि सन्ध्याकृत्यं शिवपूजनादि परिसमाप्य स्वकीयप्राणप्रियस्य श्रीकृष्णचन्द्रस्य तपोवनवृत्तान्तं विलोकयितुं सज्जा भविष्यन्ति ।

---

'सर्वमहं दिव्यदृष्टिप्रदानेन दर्शयिष्यामीति भगवतीवाक्यं 'मा चिन्तां कुरुत' इत्यस्य हेतुत्वेनोपनिबद्धं श्रीपार्वत्या भक्तवात्सल्यमभिव्यनक्ति ।

( ७० ) प्रदोषवेलायाः प्रत्यासन्नत्वमेव वर्णयति अयमिति । अयं पुरस्तादिन्दुश्चन्द्रचूडामणेः करुणया अधिगतेष्टसिद्धिः उदयमुपैति । एतेनोदयप्राप्तौ परशिवप्रसादो हेतुरव्यभिचारीति बोधितम् । शिवविमुखमिव चैतदखिलमन्धकारं समन्तात्प्रतिपदं लयमेति । तथा च शिवविमुखस्याशिवाभिमुख्यलक्षणो लय एव भवतीति 'यदुन्मेषो जगत्सर्गो निमेषो लय उच्यते' इति वाक्यबोधितावुदयलयौ कथितौ ।

(७१) वारुणी पश्चिमा दिक् सुरा च । तरणिः वारुणीसेवया अरुणवर्णः गतरुचिरतिभीतश्च राजतेजःप्रभावात् । राजा चन्द्रो नृपश्च । पुनरुदयमवाप्तुं स्वर्णदीसङ्गताङ्गं शिवकरं श्रीरुद्ररूपं समुद्रं श्रयति । अष्टमूर्तेः शिवस्य समुद्रो जलमूर्तिः । अत्र सूर्यास्तवर्णने श्लिष्टविशेषणमहिम्ना कस्यचित्सुरापः परिस्फूर्त्तिर्भवति स्वर्णदीसङ्गताङ्गसमुद्रश्रयणेन च तत्प्रायश्चित्ताचरणरूपाचारस्फूर्त्तेश्चाऽत्र समासोक्तिमूलो ध्वनिः । समासोक्तिः परिस्फूर्त्तिः प्रस्तुतेऽप्रस्तुतस्य चेदिति लक्षणात् ।

श्रीरुक्मिणी—( साञ्जलिबन्धम् ) यथा श्रीपरमेश्वर्या आज्ञा तथा करिष्यामः ।

श्रीपार्वती—तदेषाऽहं गच्छामि. ( इति वदन्त्येवान्तर्हिता )

श्रीरुक्मिणी—[७२]श्रीराधाप्रमुखा व्रजवनिताः! श्रीसत्यभामाप्रमुखाः प्रियस्त्रसारश्च! गता श्रीपरमेश्वरी श्रीपरमेश्वरस्य श्रीसदाशङ्करस्य प्रदोषपूजां विधातुं, वयमपि श्रीपरमेश्वर्या आगमनात्पूर्वं स्वासु स्वासु पर्णकुटीषु स्थित्वा नित्यपूज्यानां स्वीयस्वीयशिवलिङ्गानां प्रदोषपूजाः परिसमाप्य पुनरत्रैव चन्द्रकान्तमणिमण्डपे सङ्गी-भूय स्थास्यामः ।

सर्वाः—यथाह देवी तथैव करिष्यामः । ( इत्युक्त्वा निष्क्रान्ताः )

इतिश्रीसद्गुरुवर्यकेशव—कृपाकल्पवल्लरी—पल्लवायमाने
महामहोपाध्यायशीघ्रकविशङ्करलालकृतौ
श्रीकृष्णचन्द्राभ्युदय—नाम्नि नाटके
तृतीयोऽङ्कः ॥

---

( ७२ ) पार्वती—समुद्रतीरे श्रीमहेश्वरं समाराध्य यावदागच्छामि तावद्यूयं सन्ध्याकृत्यं समाप्य श्रीकृष्णचन्द्रस्य तपोवनवृत्तान्तं विलोकयितुं सज्जा-भवतेति समयं दत्त्वा, श्रीरुक्मिण्या 'यथाज्ञा श्रीपरमेश्वर्या' इति कृतानुनया-ऽन्तर्हिता—तावद् रुक्मिणी, राधाप्रमुखा गोपीः सत्यभामामुख्याः पट्टराज्ञीश्च सम्बोध्य स्वासु स्वासु पर्णकुटीषु निजनिजशिवलिङ्गेषु प्रदोषपूजां विधाय चन्द्रकान्तमणिमण्डपे सङ्गीभावसङ्केतं दत्त्वा निष्क्रामति; तदनु सर्वाः 'यथाह देवी तथा करिष्याम' इति वदन्त्यो निष्क्रान्ताः ।

इति श्रीसद्गुरुवर्यकेशवकृपाकल्पवल्लरीपल्लवायमानश्रीकृष्णचन्द्राभ्युदय—नाम्नो नाटकस्य टीकायां ज्योत्स्नाभिधायां तृतीयोऽङ्कः सम्पूर्णः ।

श्रीकृष्णचन्द्राभ्युदयाभिधस्य सन्नाटकस्योपरि निर्मितायाम् ॥
ज्योत्स्नाभिधायां विवृतौ समाप्तिमङ्कस्तृतीयो व्यगमत्तु काश्याम् ॥

## अथ चतुर्थोऽङ्कः ।

( [1]ततः प्रविशन्ति श्रीरुक्मिणीप्रमुखाः श्रीकृष्णचन्द्रस्य पट्टराज्ञ्यः श्रीराधामुख्या गोप्यश्च )

श्रीराधा—देवि रुक्मिणि ! प्रयातैकयामा यामिनीति मे प्रतिभाति नाद्यापि मण्डपमेनमलङ्करोति भगवती परमेश्वरीति ताम्यन्ति नश्चेतांसि ।

रुक्मिणी—[2]अयि प्रियस्वसारो मे ! स्मृतिमात्रसाध्यसान्निध्या सा जगदम्बेति नाविदितं वस्ततस्त्वरिततरं तदीयदर्शनाय तस्याः स्मरणं कुर्महे ।

श्रीराधा—[3]उत्तमोत्तमोऽयं कल्पः ( इत्युक्त्वा गायति )

स्वाश्रितार्पितसमस्तमङ्गले मङ्गलेष्टकरि सर्वमङ्गले ।।
एहि देहि परमेशि दर्शनं तावकीभ्य इह नः कृपानिधे ! ।।१।।

---

श्रीः स्वयं रुक्मिणीत्वेनाऽवतीर्णाऽस्तु श्रिये सदा ॥
यदानन्देन सानन्दः स स्वयं नन्दनन्दनः ॥ १ ॥

( १ ) उपक्रममाणः कविश्चतुर्थाङ्कारम्भे, श्रीपार्वत्या गताङ्कान्ते प्रतिश्रुतं श्रीकृष्णतपोवनवृत्तान्तप्रदर्शनं मनसिकृत्य तामेव जगदम्बां प्रतीक्षमाणानां श्रीरुक्मिणीप्रमुखानां राधाप्रभृतीनां च प्रवेशमुपक्षिपति 'तत' इत्यादिना 'गोप्यश्चे' त्यन्तेन ।

( २ ) यामातीतायामपि यामिन्यां नागता भगवतीति श्रीराधया 'ताम्यन्ति न श्चेतांसी' ति वदन्त्या धैर्यवैधुर्यमावेदितं तावदेव रुक्मिणी परदेवतापरतत्त्वस्वरूपं संविदाना, देवतादर्शनं तत्प्रणिधानसाध्यं बोधयन्ती—

'याच स्मृता तत्क्षणमेव हन्ति नः सर्वापदो भक्तिविनम्रमूर्तिभिः ।'

इति श्रीमार्कण्डेयोक्तं देवोद्घुष्टमुपायं पुरस्करोति 'स्मृतिमात्रसाध्यसान्निध्ये' ति । 'तस्याः स्मरणं कुर्महे' इति च तमनुतिष्ठन्ति ।

( ३ ) सूचितमुपायमूरीकृत्य सर्वमङ्गलापदेन जगदम्बां स्तौति राधा । सर्वमङ्गलापदं प्रायेण सार्वविभक्तिकं विग्रहमादधाति । सर्वा मङ्गला, सर्वान् भक्तान् प्रति मङ्गला, सर्वैः कल्याणगुणैर्मङ्गला, सर्वेभ्यो मङ्गला—ननु महिषासुरादिहन्त्री तेभ्यः कथं मङ्गलेति चेत्—'लोकान् प्रयान्तु रिपवोऽपि हि

( तत आकाशमार्गेणाऽवतीर्य श्रीपार्वती )

श्रीपार्वती—[४]आगताऽस्म्यहमियं प्रियंवदा !
भक्तिभाववशवर्त्तिनीह वः ॥
रुक्मिणीप्रभृतयो हरिप्रिया
ब्रूत किं प्रियहितं करोमि वः ॥ २ ॥

( [५]सर्वाः सानन्दमुत्थाय सपुष्पबद्धाञ्जलयः )

सर्वाः—जय जय जय मातः श्रीमहेशप्रिये त्वं
प्रणतजनमनोभीष्टार्पणैकप्रवीणे ॥

---

शस्त्रपूता इत्थं मतिर्भवति तेष्वपि तेऽतिसाध्वीति ' समादधता मार्कण्डेयेन देवमुखेनैव तेभ्योऽपि मङ्गलप्रदत्वमद्धाऽऽवेदितमेव; सर्वेभ्यो महामङ्गलमयमूर्त्तिभ्यः शिवादिभ्योऽपि मङ्गला=मङ्गलतमेत्यर्थः । यदाहुः पूज्यपादाः—

विरञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं
विनाशं कीनाशो भजति धनदो याति निधनम् ॥
वितन्द्रा माहेन्द्री विततिरपि सम्मीलितदृशा
महासंहारेऽस्मिन् विहरति सति ! त्वत्पतिरसौ ॥

तत्र हेतुरपि तैरेवोक्तः—

सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीं
विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः ॥
करालं यत् क्ष्वेलं कवलितवतः कालकलना
न शम्भोस्तन्मूलं जननि तव ताटङ्कमहिमा ॥

सर्वेषु देशेषु कालेषु भूतेषु प्राणिषु च मङ्गलैवेत्यर्थः । मङ्गलार्थनावसरे भगवत्याः सर्वमङ्गलापदेन निर्देशः कवेरभिधानौचित्यज्ञतां प्रणिगदति । स्वाश्रितेभ्योऽर्पितानि समस्तानि मङ्गलानि यया, अतश्चाऽस्मभ्यमपि तावकीभ्यः कृपानिधे ! दर्शनं देहि । दर्शनदानं हि आगमनसाध्यमत उक्तमेहीति । अस्मिन्पद्ये सप्तकृत्त्व आवृत्तेन शक्तिबीजेन तेनैव चान्ते सम्बोधनेन सद्योऽभीष्टसिद्धिरूपस्थितेति रहस्यम् ।

( ४ ) आकाशमार्गेण अवतीर्य श्रीपार्वती रुक्मिणीप्रमुखाः सम्बोध्य ' युष्माकं प्रियं हितं च किं करोमि ? ब्रूत ' इति वराभ्यर्थनायै उपच्छन्दयति । आगतास्म्यहमित्यादिना ।

( ५ ) सर्वा यावज् ' जय जये ' त्यादि स्तुतिपूर्वं जगदम्बाचरणयोः

मणिगणमयमेतद्देवि ! सिंहासनं ते
चरणकमलयुग्मे चैष पुष्पाञ्जलिर्नः ॥ ३ ॥
( इत्युक्त्वा जगदम्बाचरणयोः पुष्पाञ्जलीन् विकीर्य )
यदुकुलतिलकश्रीकृष्णचन्द्रप्रवृत्तिं
भगवति ! करुणातो द्रष्टुमीहामहे ते ॥

श्रीपार्वती—( सिंहासनमधिरुह्य )
परमशिवकृपातो दृष्टिरानन्दवृष्टि-
र्भवतु सपदि दिव्या कृष्णपत्न्योऽधुना वः ॥ ४ ॥
( इत्याशिषं यावद्ददाति तावदेव )

सर्वाः—( [६]परितोऽवलोक्य साश्चर्यम् ) देवि रुक्मिणि ! कोऽयं पर्वतो दृश्यते ?

रुक्मिणी—प्रियस्वसारो मे ! यूयमिवाऽहमपि तत्रानभिज्ञा ततः श्रीपरमेश्वरीत एव सर्वं ज्ञास्यामः ।

सर्वाः—रुक्मिणि ! सर्वास्वस्मासु ज्येष्ठया श्रेष्ठया च त्वयैव श्रीपरमेश्वरी प्रष्टव्येति नः प्रार्थना ।

रुक्मिणी—प्रियस्वसारो मे ! तथा करिष्यामि मा चिन्तां कुरुत ( निपुणं निर्वर्ण्य ) ( श्रीपार्वतीं प्रति )
[७]मातः ! कोऽयं विविधविपिनालङ्कृताशेषदेशः
शैलः शैलप्रवरतनये रम्यगम्यप्रदेशः ॥

---

पुष्पाञ्जलीन्प्रक्षिप्यासनं निर्दिशन्ति, श्लोकार्धेन च भगवत्प्रवृत्तिजिज्ञासां वृणते तावदेव पार्वती सिंहासनमधिरुह्य ' परमशिवकृपातः ' इत्यर्धश्लोकेनाशीरूपवचनोच्चारपूर्वकं दिव्यदृष्टिं ददाति ।

( ६ ) दिव्यदृष्टिलाभसमकालमेव सर्वाः पर्वतमग्रे पश्यन्ति, रुक्मिणीं च पृच्छन्ति ' कोऽयं पर्वत ' इति ।

( ७ ) रुक्मिण्या ' अहमप्यनभिज्ञे ' त्युक्त्वा ' परमेश्वरीतः सर्वं ज्ञास्यामः ' इत्युक्तं तदा जिज्ञासाकुलाः सर्वा रुक्मिणीमुखेनैव प्रश्नयन्ति, रुक्मिणी च श्रीपार्वतीं पृच्छति 'मात' रित्यादिना । अत्र विविधविपिनालङ्कृताशेषदेशत्वं रम्यगम्यप्रदेशत्वे हेतुरिति परिकरालङ्कृतिः । शैलः शैलेति रम्यगम्येत्यादि च वृत्त्यनुप्रासो नाम शब्दालङ्कारः ।

श्रीपार्वती—[८]सोऽयं वत्से मणिमयमहाशृङ्गसम्भूषिताङ्गः
सौराष्ट्रस्थाखिलमनुजनुर्दैवतं रैवताद्रिः ॥ ५ ॥

सत्यभामा—[९]आः प्रख्यात एवायं गिरिवर्यो यत्राऽनेके सिद्धाः साधकाश्च निवसन्ति । नैतावदेव किन्तु तीर्थान्यप्यनेकानि तत्र सन्ति ।

पार्वती—वत्से ! सएवाऽयम् ।

रुक्मिणी—[१०]कस्यायमाश्रमवरो जगदम्ब यत्र
सिंहैर्मृगाश्च नकुलैः फणिनां गणाश्च ॥
अन्येप्यनेकपशवः सहजातिवैरा-
विस्मृत्य वैरमखिलं सह संरमन्ते ॥ ६ ॥

किञ्च—कश्चाऽम्बाऽस्मिन् मुनिगणमणिर्भस्मरुद्राक्षमाला-
धारी धीरो विलसति तपस्तेजसां राशिरेषः ॥
यस्मिन् दृष्टेऽप्यमलममलं मानसं नः कृपार्द्रे !
मातर्मातर्भजति पितरीवाऽद्भुतं भक्तिभावम् ॥ ७ ॥

---

( ८ ) सौराष्ट्रोद्भवमनुजानां दैवतं सोऽयं रैवताद्रिरिति पार्वती प्रति बोधयति श्लोकोत्तरार्धेन । अत्रापि शृङ्ग अङ्ग दैवत रैवत मनु जनुरित्यादिवर्णावृत्तिरनुप्रासः ।

( ९ ) सत्यभामा सप्रत्यभिज्ञं 'आः' इत्याश्चर्यबोधकाव्ययव्याहारेण न केवलं गिरेः प्रसिद्धिमन्वाह किन्तु सिद्धसाधकनिवासयोग्यतामपि तीर्थस्थानत्वेनागदीत् । सिद्धस्थाने कोटिगुणमित्यभियुक्तोक्तेः ।

( १० ) श्रीपार्वत्या 'स एवाय' मिति सत्यभामोक्तेऽनुमोदितेऽग्रे मुनेराश्रमं पश्यन्ती रुक्मिणी पृच्छति । पशवोऽपि यत्र परित्यक्तसहजवैराः सह संरमन्ते तत्र मनुजानां तु वैरवार्त्तापि दूरापास्ता, तादृशोऽयं कस्याश्रम ? इति । तस्मिन्नाश्रमे मुनिमवलोक्य तत्स्वरूपं वर्णयन्ती पृच्छति 'कश्चे' त्यादिना । दृष्टमात्रे एव यस्मिन् कृपार्द्रे–हे 'मातः मातः' इति वीप्सा विस्मयमूला,–नौ मानसं अमलं सत् पितरीव भक्तिभावं भजते, एषः–पुरोवस्थितः तपोजन्यतेजसां राशिर्भस्मरुद्राक्षमालाधारी धीरो मुनिगणे मणिरिव भासमानः को विलसतीति ।

पार्वती—[११]व्याघ्रपाद इति सन्मुनिवर्यः सम्बभूव शशिशेखरभक्तः ॥
तस्य सूनुरुपमन्युरयं श्रीचन्द्रचूडचरणैकनिकेतः ॥ ८ ॥

रुक्मिणी—( [१२]स्मृतिमभिनीय ) श्रुतपीतापूर्वं मया श्रीकृष्ण-
चन्द्रमुखचन्द्रमण्डलाद् गलन्ती तत्कीर्त्तिसुधाधारा ।
बाल्येऽपि यः सुतपसा परितोष्य शम्भुं
क्षीरार्थमात्मजननीवचनानुवर्त्ती ॥
श्रीशङ्करस्य कृपयाऽऽत्मवशं चकार
क्षीराब्धिमप्ययुतशिष्यगणाग्रभोजी ॥ ९ ॥
स एवायं भगवानुपमन्युः ?

पार्वती—अथ किम् ।

रुक्मिणी—[१३]धन्योऽयं दिवसो यदत्र वयं परमपुण्यदर्शनं परममाहे-
श्वरं मुनिवर्यमुपमन्युं पश्यामः ।

उपमन्युः—( दक्षिणेक्षणस्फुरणमभिनीय ) अयि शिष्याः ! पाद्यं पाद्य-
मर्घ्यमर्घ्यम् । अद्य खल्वत्र—
शङ्करो निखिललोकशङ्करः श्रीहरिः सरसिजासनोऽथवा ॥
आगमिष्यति न संशयः क्षणाद्दक्षिणं स्फुरति मे यदीक्षणम् ॥१०॥

---

( ११ ) पार्वती, यः पुरा व्याघ्रपादनामा शशिशेखरभक्तो मुनिः सम्बभूव तस्य सूनुरयमुपमन्युनामा, यः शिवभक्तात् पितुर्लब्धजन्मा स्वयं श्रीचन्द्रचूडचरणैकाश्रयतया सतां मुनीनां मध्ये वर्य उत्कृष्टः । उत्कर्षश्च पैतृकानुद्दरणेन ।

( १२ ) उपमन्युवृत्तमनुस्मरन्ती रुक्मिणी श्रीकृष्णचन्द्रमुखचन्द्रादेव श्रुतामुपमन्युकीर्त्तिमुद्गिरति—'बाल्येऽपीत्यादिना । यः क्षीरार्थं बाल्येऽपि,—अत्र अपि शब्दस्तपोयोग्यवयोभावेऽपीत्यर्थकः—सुतपसा शम्भुं परितोष्य—स्वजननी-वचनानुवर्त्ती, श्रीशङ्करस्य कृपया—नतु स्वयमभ्यर्थ्य—क्षीराब्धिमात्मवशं चकार, अयुतसङ्ख्यं शिष्यगणमग्रेभोजयतीति—ताच्छीलिको णिनिः—तादृशः स एव अयं भगवानुपमन्युरिति रुक्मिण्या पृष्टे ' अथ किमि ' त्युक्त्या श्रीपार्वती तदुक्तिमनुमोदमानोत्तरयति ।

( १३ ) रुक्मिणी, परममाहेश्वरमुनिवर्यस्योपमन्योः पुण्यप्रदर्शनेन तादृशदर्शनशालिदिवसस्य धन्यत्वमाह तावदेव स्वदक्षिणेक्षणस्फुरणलिङ्गेनानुमि-तमर्थमपावृण्वन् मुनिः, शिष्यानुपचारसम्भाराय प्रेरयति—' अयि शिष्याः '

शिष्याः—( साञ्जलिबन्धम् ) श्रीपूज्यपादाः ! यथायुष्मदाज्ञं सज्जाः स्म ।

पट्टराज्यः—[१४]अहो अखिलजगद्वन्द्यस्यापि भगवतोऽतिथिसत्कार-सम्भ्रमशालिशीलता लोकोत्तरा ।

( नेपथ्ये )

[१५]अयि मुनिवरशिष्य ! श्रीमुनीन्द्रं प्रणम्य
प्रणतजनमनोभीष्टार्पणैकप्रवीणम् ॥
जनमुपगतमेनं द्वारकातो निवेद्य
प्रियवद वद दाता दर्शनं श्रीगुरुर्मे ॥ ११ ॥

रुक्मिणी—( साश्चर्यानन्दम् ) अहो सजलजलधरध्वनिगम्भीरोऽतिधी-रोऽयं स्वरः प्राणनाथस्येव नः प्रतिभाति ।

सर्वाः—[१६]यथाह देवी रुक्मिणी ।

उपमन्युः—( साश्चर्यानन्दमुत्थाय )

---

इत्यादिना । पाद्यमर्घ्यं च सम्पाद्य सन्निहितमेव स्थापयत येनाविलम्बेनैवार्ह-णीयजनार्हन्ती सुकरा स्यात्तमेव च पुनः स्वदक्षिणाक्षिस्फुरणसूचितं विषयं विवरीवरीति ' अद्य खल्वत्रे ' त्यादिना । यतो मे दक्षिणमक्षि स्फुरति ततो—मन्ये—निखिललोकशङ्करः शङ्करः, श्रीहरिरथवा सरसिजासनो ब्रह्मा, त्रयाणामेक तमोऽद्याऽत्र निःसंशयमागमिष्यति । अत्र क्षणादिति पदमधुनैवागमिष्यतीत्यर्थं बोधयति ।

( १४ ) शिष्यैः ' श्रीपूज्यपादाः ! यथानिदेशमुपपादितसामग्रीका वयं सज्जाः स्मः ' इत्यावेदिते पट्टराज्योऽखिलजगद्वन्द्यस्यापि मुनेर्लोकोत्तरामति-थिसत्कारसम्भ्रमशालितामालोक्य विस्मयन्ते ।

( १५ ) 'अयि' इति शिष्योद्देश्यकमपि कोमलमामन्त्रणं श्रीकृष्णस्य विनयातिरेकमावहत्तपोवनमहिमानमावेदयति । अत्र—हे मुनिवरशिष्य ! प्रणतज-नमनोभीष्टार्पणैकप्रवीणं श्रीमुनीन्द्रं प्रणम्य—मत्कर्तृकप्रणामनिवेदनाय प्रह्वीभाव मुद्रां प्रदर्श्य—द्वारकातः उपगतमेनं जनं निवेद्य हे प्रियवद ! श्रीगुरुर्मे दर्शनं दाता ? किमिदानीं दर्शनदानानुग्रहं करिष्यति ? इति तं पृष्ट्वा वद ।

( १६ ) रुक्मिण्या—' सजलजलदध्वानगम्भीरः स्वरो नः प्राणनाथ-स्येव प्रतिभातीति ' साश्चर्यानन्दमाशङ्किते—तत्र सर्वाः ' यथाह देवी रुक्मिणी तत्तथैवेति शेषार्थबोधकवाक्येन स्वानुमोदनं निश्चायकतया प्रकटयन्ति ।

[17]स्वागतं भगवतो जगत्पतेः पावितोऽद्य कृपयाऽयमाश्रमः ॥
कृष्णचन्द्र भवदीयदर्शनादद्यमे सुफलितं तपोऽखिलम् ॥ १२ ॥

( इति वदन् हर्षादभिगच्छति )

( ततः [18]प्रविशति भस्मरुद्राक्षभूषितः श्रीकृष्णः )

श्रीकृष्णः—परमशिवपदाब्जद्वन्द्वलीनात्मवृत्ते !
निरवधिकरुणाब्धे ! श्रीगुरो ! हे महात्मन् ॥
चरणकमलदासस्तावकः कृष्ण एषः
प्रणमति कुरु हस्ताम्भोरुहं मूर्ध्नि मे स्वम् ॥ १३ ॥

( इति प्रणमति )

( सर्वाः पट्टराज्ञ्यः श्रीराधामुख्या व्रजवासिन्यश्चोत्थाय ससम्भ्रमं प्रणमन्ति श्रीकृष्णम् )

श्रीपार्वती—वत्साः ! व्यतीतमेतदलं सम्भ्रमेण ।

---

( १७ ) भगवद्वचनश्रवणाव्यवहितोत्तरकालमेव शिष्यागमनमप्रतिपालयन्नुपमन्युः स्वयमुत्थाय स्वागतं व्याहरति । भगवत आगमनमतिशोभनं, भवताऽऽगमनेन अद्य अयमाश्रमः पावितो, नैतावदेव हे कृष्णचन्द्र ! भवद्दर्शनेन मेऽखिलं तपः फलितमद्य । यद्दर्शनार्थमनेके महापुरुषास्तपश्चरन्ति तद्दर्शनलाभेनैतावता कालेनानुष्ठितस्य तपसः साफल्यमजनीति हर्षप्रकर्षः ।

( १८ ) भस्मरुद्राक्षभूषितत्वं श्रीकृष्णचन्द्रस्यात्र दीक्षाङ्गम् । वाञ्छितार्थसिद्धेः प्रतिबन्धप्रशमनार्थमिति तु तत्त्वम् । तथाच । अभियुक्तचरणाः—

एतानि तानि शिवमन्त्रपवित्रितानि
भस्मानि भूतदुरितक्षपणक्षमाणि ॥
भाले धृतानि हृदयस्थतमोऽपहानि
लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥

प्रणामपद्ये—परमशिवपदाब्जद्वन्द्वलीनात्मवृत्ते ! इति सम्बोधनमभिगम्यतामाह ततश्च निरवधिकरुणाब्धे ! इति सम्बोधनं गुरुत्वोपपादकं, तदेव 'श्रीगुरो !' इत्यनेन निगद्य, 'हे महात्मन्' इत्यनेन च चिरशुश्रूषणानपेक्षप्रसत्तिरुक्ता अनन्तरमेव च उपसत्तिसूचकमात्मविशेषणं 'चरणकमलदासस्तावक इत्यादिना' 'कृष्ण एषः प्रणमती' त्यन्तेन दीक्षावसरो वेदितः । स्वं हस्ताम्भोरुहं मे मूर्ध्नि कुरु—निधेहीत्यनेन च मन्त्रग्रहणोत्कता बोधिता । एतावता शिवमन्त्रग्रहणं शैवमुखादेव कृतं सद् भवत्यभ्यर्हितमिति ध्वन्यते ।

सर्वाः—( [१९]सलज्जम् ) मातर्विस्मृतमेतदिदानीमस्माभिः ।

उपमन्युः—( [२०]सानन्दं श्रीकृष्णमूर्ध्नि हस्तं निधाय उत्थाप्यालिङ्गय च )
शिष्याः ! पाद्यं पाद्यमर्घ्यमर्घ्यम् ( इत्याह्वयति )

श्रीकृष्णः—गुरुवर्याः ! अलमलमत्युपचारेण स्वशिष्ये मयि ।
( इत्युक्त्वा शिष्यान् वारयति )

उपमन्युः—शिष्याः ! स्वानि स्वानि कार्याणि कुरुध्वम् ।

शिष्याः—यथाज्ञा गुरुचरणानाम् । ( इति वदन्तो निष्क्रान्ताः )

उपमन्युः—[२१]हरिकरिनरनौका नाधिरूढाः सुरम्या
न च पतगपतिर्वा काञ्चनो नो रथो वा ॥
कथय कथय पद्भ्यामागतोतीव दूरं
कमलदलमृदुभ्यां नाथ कस्मादकस्मात् ॥ १४ ॥

श्रीकृष्णः—[२२]गुरुवर्याः ! मातापित्रोराज्ञया धर्मपत्नीनां च मे प्रार्थनया सत्पुत्ररत्नप्राप्तये दुष्करतरैस्तपोभिः परशिवमाराधयितुमिच्छन् शिवमन्त्रदीक्षागुरुं त्वां प्रणम्य, क्व मया तपस्तप्तव्यं केन विधिना च पूजनीयः परमेश्वर इति प्रष्टुमागतोऽस्मि ।

---

( १९ ) यदा श्रीकृष्णमवलोक्य पट्टराज्यो व्रजाङ्गनाश्च ससम्भ्रममुत्थाय प्रणमन्तिस्म तदा 'व्यतीतमेतत्सकलं नैतदिदानीं प्रतीयमानमिव वास्तवं मन्तव्यमतः सम्भ्रमो न विधेय' इति श्रीपार्वत्या बोधिताः सत्यो वैदग्ध्यभङ्ग प्रयुक्तलज्जाकुला आहु'र्मात' रित्यादि ।

( २० ) श्रीकृष्णाभ्यर्थनामनुरुध्य तन्मूर्ध्नि हस्तं निधाय उत्थाप्य आलिङ्गय च पाद्यादिसामग्रीसमवधानाय शिष्यानाह्वयति तावदेव 'स्वशिष्ये मयि अलमत्युपचारेणे' त्युक्त्वा शिष्यान् वारयति । मुनिरपि श्रीकृष्णोक्तानुसारेण शिष्यान् स्वस्वकार्यकरणाय विसृजति ।

( २१ ) भगवत्सङ्कल्पमजानानो मुनिः 'गरुडादिवाहनान्यनुपयुज्य इयद् दूरं पद्भ्यामेव कस्मादकस्मादागतोसीति पृच्छति ।

( २२ ) श्रीकृष्ण आर्जवेन निखिलमभिप्रेतं स्पष्टमेवाख्याति । मातापित्रोराज्ञया धर्मपत्नीनां प्रार्थनया चेत्युक्त्याऽत्रागमने प्रयोजकीभूतं द्वयमपि निर्दिष्टम् । सत्पुत्ररत्नप्राप्तये परशिवं तपसाराधयितुमित्यनेन च शिवाराधन पुत्रप्राप्त्योरुपायोपेयभावोपि गदितः । पूर्वगृहीतदीक्षामनूद्य तपोविधि

उपमन्युः—( [२३]प्रहस्य ) आत्मैव त्वमसि महेश्वरस्य विष्णो !
आत्मा ते प्रियतम आन्तरो महेशः ॥
इत्यैक्ये सति युवयोरहं वराकः
कं पूजाविधिमिह वच्मि कृष्णचन्द्र ! ॥ १५ ॥

श्रीकृष्णः—[२४]यदि मयि करुणादृग् वर्त्तते चेत् त्वदीया
यदि मदुदयसिद्धौ प्रोत्सुकं मानसं ते ॥
कथय कथय तर्हीशानपूजाविधानं
गुरुवर मयि तुष्येद् येन सद्यो महेशः ॥ १५ ॥
[२५]आत्माऽऽन्तरोऽहमभवं परमेशितुः श्री-
भक्त्या यया स्वजनवत्सलतासुधाब्धेः ॥
सा येन मे परमया कृपयोपदिष्टा
स त्वं गुरो गुरुवरोऽसि निरन्तरं नः ॥ १६ ॥
किं बहुना—यदि मयि करुणादृग् वर्त्तते० ॥

---

तपोनुकूलदेशं च जिज्ञासमानः 'केन विधिना च पूजनीयः परमेश्वर' इति पृच्छति ।

( २३ ) निखिलार्थविद एवंविधं प्रश्नं निशम्य प्रहस्य मुनिराह । हे विष्णो ! त्वं महेश्वरस्यात्मा तव च महेश आत्मा इत्युभयोरैक्ये तवात्मभूतस्य शिवस्य पूजाविधिं वक्तुमहं वराकः कः ? नात्राहं भवत्प्रश्नोत्तरदाने प्रभुरस्मि, शिवतत्त्वं हरिर्वेत्ति हरितत्त्वं शिवस्तथा । मिथस्तयोरैक्यसिद्धावन्यः को नाम वेत्तु तदिति भवानेव तत्तत्त्वविदिति भावः । प्रहर्षिणीवृत्तम् ।

( २४ ) 'आचार्यवान् पुरुषो वेद' इति श्रुतिशासनमनुरुन्धानः श्रीकृष्ण 'आचार्याद्ध्येवाधिगता विद्या साधीयसी भवतीति' साम्प्रदायिकवचोऽनुसरन् मुनिमुखादेवाधिजिगमिषुः परतत्त्वं मुनिमाग्रह्णाति 'यदी' त्यादिना । यदिपदं नात्र संशयाधायकं किन्तु सिद्धानुवादकं तेन—मयि भवदीया करुणादृग् वर्त्तत एव, भवदीयं च मानसं मदुदयसाधनेऽस्त्येव समुत्सुकं तर्हि=अतः= हे गुरुवर ! येन प्रकारेण महेशो मयि सद्यस्तुष्येत्तादृशमीशानपूजाविधानं कथय कथयेति वीप्सानुकम्पार्थनामातनोति ।

( २५ ) इदानीं 'आत्मैव त्वमसि महेश्वरस्ये'त्यादि प्रागुक्तं मुनिवचनमुत्तरयति । यया भक्त्या भक्तवत्सलस्य परमेशितुरहमान्तर आत्माऽभवं सा

( इति पूर्वोक्तं श्लोकं पुनः पठित्वा पादयोः प्रणमति )

उपमन्युः—[२६]हे कृष्णचन्द्र यदि वाञ्छसि देवदेवं
श्रीमन्महेश्वरमुमाहृदयाधिनाथम् ॥
सद्यः प्रसादयितुमिन्दुकलावतंसं
तर्हि प्रयाहि यदुनन्दन ? पश्चिमाब्धिम् ॥ १७ ॥
अस्ति तत्र बटुकाचलाऽभिधः
पर्वतोऽतिरमणीयदर्शनः ॥
कृष्णचन्द्र ! तदुपत्यकागतं
पावनं लसति बिल्वकाननम् ॥ १८ ॥
भूषितं विमलबिल्वगङ्गया-
सङ्गयाततरलोत्तरङ्गया ॥
पक्षिमङ्गलनिनादनादितं
चित्तनेत्रसुखदं निरन्तरम् ॥ १९ ॥ युग्मम् ॥

तत्र शङ्करमुपास्य यास्यसि स्वेप्सितानि सकलानि सत्वरम् ॥
आशुतुष्टपरमाशुतोषणश्रीमहेश्वरमहाप्रसादतः ॥ २० ॥

[२७]तत्र स्थित्वा प्रतिदिनं चिन्तामणिसहस्रं विधाय लक्षसङ्ख्यै-र्बिल्वदलैः सम्पूज्य कमलसहस्रं समर्प्य तपः कुर्वतस्ते स्वल्पेनैवा-नेहसा मनोरथपूर्त्तिर्भविष्यतीत्यसंशयमवेहि ।

---

भक्तिरपि त्वयैवोपदिष्टेति सत्वमस्माकं सर्वथा गुरुरेवासीत्युक्त्वा पूर्वोक्तं 'यदि मयी' त्यादि श्लोकं पुनः पठित्वा पादयोः प्रणमति ।

( २६ ) अतः परं मुनिरनुग्रहपरस्तपश्चरणानुकूलं देशमुपदिशति । हे कृष्णचन्द्र देवदेवमुमाहृदयाधिनाथमिन्दुकलावतंसं श्रीमन्महेश्वरं यदि सद्यः प्रसादयितुमिच्छसि तर्हि हे यदुनन्दन ! पश्चिमाब्धिं प्रयाहि । तत्र च पश्चिमाब्धेस्तीरे—अतिरमणीयदर्शनो बटुकाचलाभिधः ( बरडा इति लोकप्रसिद्धः ) पर्वतोऽस्ति तदुपत्यकायां पर्यतभूमौ पावनं बिल्वकाननं लसति । बिल्वकाननमेव विशिनष्टि—सङ्गयाततरलोत्तरङ्गया बिल्वगङ्गाख्यया नद्या भूषितं, पक्षिमङ्गलनिनादनादितमत एव निरन्तरं चित्रनेत्रसुखदं, प्रेक्षकाणामिति शेषः । तत्र स्थित्वेत्यध्याहार्यं—शङ्करमुपास्य आशुतुष्टपरमाशुतोषणश्रीमहेश्वरप्रसादतः सत्वरं सकलानि स्वेप्सितानि यास्यसि—प्राप्स्यसीति सबन्धः ।

( २७ ) पूर्वोक्तं प्रकारं सविशेषमुपदिशन् मनोरथसिद्धिमदूरभाविनीं

शंसन् प्रोत्साहयति मुनिः । तत्र बिल्वकानने स्थित्वा–वासं कृत्वा–प्रतिदिनं त्रिन्तामणि–त्पार्थिवलिङ्गसहस्रं लक्षबिल्वदलैः सम्पूज्य कमलसहस्रं च श्रीमहा-भारतोक्तवेदसारशिवसहस्रनाममन्त्रैः समर्प्य तपः कुर्वतस्तेऽचिरेणैवेष्टं सेत्स्यतीति असंशयमवेहि । तथा चोक्तं महाशिवपुराणे ज्ञानसंहितायां ६९ अध्याये—

कदाचित् पर्वते रम्ये गत्वा रैवतके हरिः ॥
उपमन्युं शिवगणं पप्रच्छ भृशमादरात् ॥ १० ॥
इष्टसिद्धिः कथं मे स्यात् कथं लोके जयाम्यहम् ॥

एवं वादिनं कृष्णं मुनिराह—

त्वमपि विष्णुरूपोऽसि कथं न भजसे शिवम् ॥ १२ ॥

ततो विज्ञापितेन मुनिना शिवमन्त्रोपदेशे कृते—

इत्येवं च ततः प्राप्य मन्त्रमाराधने विधिम् ॥
सेवयामास विप्रेन्द्राः सप्तमासावधि स्वयम् ॥ १४ ॥
कमलैर्बिल्वपत्रैश्च शतपत्रैः कुशेशयैः ॥ १५ ॥

अग्रे च ७० तमेऽध्याये

तथापि न यदा तुष्टः, सहस्रैर्नामभिस्तदा ॥
प्रत्येकं कमलं तस्मै नाममन्त्रमुदीर्य च ॥ १४ ॥
समर्पयन् प्रभोर्मूर्ध्नि प्रत्यहं परया मुदा ॥
कमलानां सहस्रात्तु हृतमेकं कुशेशयम् ॥
न ज्ञातं विष्णुना तच्च मायाकरणमद्भुतम् ॥ १६ ॥
न्यूनमेकं तदा ज्ञात्वा स्वकं नेत्रमुदाहरत् ॥
तद् दृष्ट्वा च प्रसन्नोऽभूच्छङ्करः सर्वदुःखहा ॥ १७ ॥
प्रसन्नोऽस्मि वरं ब्रूहि नादेयं विद्यते तव ॥

हरिणा ' दैत्यैर्विश्वं पीड्यते ' इत्यावेदिते—

तदा तस्मै स्वयं शम्भुश्चक्रं प्रादात्सुदर्शनम् ॥
बिल्वेश्वरश्च नाम्ना वै जातस्तत्र शिवः स्वयम् ॥

इदमेव पूर्वं ६१ तमेऽध्यायेऽपि—

कृष्णेन च तदा नित्यं बटुके पर्वतोत्तमे ॥
पूजनं तु शिवस्यैव सप्तमासावधि कृतम् ॥ १७ ॥
प्रसन्नोभगवाँस्तस्मै वरान्प्रादादनेकशः ।

इत्यादि महता विस्तरेण निरूपितम् ।

श्रीकृष्णः—[२८]भगवन् ! मन्त्रस्योपदेशेनापि कृतार्थं कर्त्तुमर्हसीमं चिरन्तनं शिष्यम्।

उपमन्युः—[२९]वत्स ! प्रथममुपदिष्टैव शतरुद्रीयविद्या श्रीमहामृत्युञ्जयविद्या पञ्चाक्षरीविद्या च तासामेकतमया समाराधितः श्रीमहेश्वरः सद्य एव परितुष्येत्।

श्रीकृष्णः—भगवन् ! एष मे प्रयाणप्रणामः।

उपमन्युः—[३०]शिवासहायः शिव एव देवो
देवाधिदेवः शिवदः सदा ते ॥
भूयाच्छिवोऽध्वा सरितः शिवास्ते
वाताः शिवाः सन्तु शिवप्रसादात् ॥ २१ ॥

( इति वदन् श्रीकृष्णमूर्ध्नि हस्तं निदधाति )

श्रीकृष्णः—[३१]अद्यैव प्रसन्नः परमेश्वर इति मन्येऽहम्।

( इति ब्रुवन् निष्क्रामति )

---

( २८ ) यथा सिद्धस्थाननिर्देशानुग्रहः कृत एवं मन्त्रोपदेशमपि कुर्वित्यपिपदस्वारस्यं व्यञ्जयन् इमं मल्लक्षणं—चिरन्तनं—नत्विदानीन्तनं—शिष्यं कृतार्थं कर्त्तुमर्हसीत्यनेन पूर्वं कृतोपि मन्त्रोपदेश इदानीं पुनर्नवीभावमापादनीयो येन वैगुण्याशङ्का निवर्त्तेत।

( २९ ) अत्रावसरे मुनिः पूर्वोपदिष्टविद्या नामग्राहमाभाष्य श्रीकृष्णचेतसि तिस्रोपि विद्याः संस्मार्य 'अवचनेनैव प्रोवाचे' तिवद्वेधदीक्षां कृतवान् तेनानेन संस्कारेण विशुद्धिमापादिताः प्रागुपदिष्टा विद्याः सद्यःसिद्धिदाः सञ्जाता इति श्रीकृष्णार्थनामुनिवचनयोः परमं रहस्यम्।

( ३० ) श्रीकृष्णेन 'भगवन्' इति ससद्भावमुपायनीकृते प्रयाणसामयिके प्रणामे मुनिराशीर्भिस्तं वर्द्धापयते। स्वयं शिव एव देवोऽथापि शिवासहाय इति सर्वथा ते शिवदो भूयात्। किञ्च ते अध्वा शिवो भूयात्—सरितः शिवाः सर्वदा निरुपद्रवाः, वाताश्च शिवा अनुकूलाः शिवप्रसादात् सन्तु, येन निष्प्रत्यूहा तेऽभीष्टसिद्धिरस्तु। एवं वदन् श्रीकृष्णमूर्ध्नि हस्तं निदधाति। हस्तनिधानेन सकलप्रतिबन्धापासनं हार्दम्।

( ३१ ) 'गुरुरेव परं ब्रह्मे'ति तत्प्रसादे मनीषितोऽर्थः सिद्धप्राय एवेति मन्वान आह श्रीकृष्णः—अद्यैव प्रसन्नः परमेश्वर इति मन्येऽहमिति ॥

रुक्मिणी—[३२]प्रणम्यास्मत्प्राणप्रिय इह शिवे ! स्वं गुरुवरं
प्रयाति श्रीकान्तः शिवदशिवनामान्यभिवदन् ॥
अनुव्रज्य प्रेम्णा गुरुरपि निवृत्तोऽश्रुनयनो
विचित्रं वात्सल्यं किमपि निजशिष्येषु हि गुरोः ॥ २२ ॥

श्रीपार्वती—एवमेव वत्सा ! एवमेव, स्वौरसपुत्रनिर्विशेषवात्सल्यानि स्वशिष्येषु सद्गुरूणां स्वान्तानीति नाविदितं वः ।

सर्वाः—[३३]पद्भ्यामयं जननि याति सुकोमलाभ्यां
छत्रं विनापि तपनातपतप्तमार्गे ॥
पश्याम्बिके ! किमिदमात्मजलाभलोभा-
दस्माभिराचरितमज्ञतमाशयाभिः ॥ २३ ॥

( इति वदन्त्योऽश्रूणि मुञ्चन्ति )

श्रीराधा—[३४]विरम विरम हे नाथ मे क्षणं
मणिमयीमिमां पादुकां निजाम् ॥
कुरु पदद्वये छत्रमप्यहं
शिरसि ते करोम्याशु किङ्करी ॥ २४ ॥

( इति वदन्ती पादुकां छत्रं च गृहीत्वेव धावति )

श्रीपार्वती—( हस्तं गृहीत्वा ) राधे ! राधे ! व्यतीतमेतद् विलोक्यते मा सम्भ्रमं गमः ।

---

( ३२ ) अतः परं 'प्रणम्ये'त्यादिना रुक्मिणी शिवनामाभिगृणनयुक्तं श्रीकृष्णगमनं, किञ्चिदनुव्रज्यापूर्वमश्रुनयनस्य गुरोर्निवर्त्तनं च पश्यन्ती सद्गुरोः शिष्यवात्सल्ये विस्मयते । पार्वती पुनस्तादृक्सद्गुरुशिष्ययोगे इदमित्थमेव भवेदिति वस्तुवृत्तमभिदधाना तद्विस्मयमपनुदति ।

( ३३ ) अनातपत्रं पद्भ्यामेव यान्तं भगवन्तं विलोक्य 'आत्मजलाभलोभादज्ञतमाभिरस्माभिः किमिदमाचरित'मिति सर्वाः सानुशयमश्रूणि मुञ्चन्ति ।

( ३४ ) अत्रावसरे श्रीराधा भक्त्यावेशविवशाशया भगवन्तमुल्लापयति । हे मे नाथ ! क्षणं विरम—मणिमयीमिमां निजां पादुकां पदद्वये कुरु (यावद्) किङ्करी अहं ते शिरसि छत्रमपि करोमि; इति वदन्ती छत्रपादुका हस्तेव धावति, तावदेव श्रीपार्वत्या 'व्यतीतविषयमेतन्मा सम्भ्रमं गम' इति प्रतिबोधिता 'मातर्विस्मृतमेतदिति' वदन्ती भगवतस्तपःकष्टमनुध्यायन्ती च साश्रुनेत्रा वैदग्ध्यभ्रेषप्रयुक्तलज्जयाऽधोमुखी तिष्ठति—

११

श्रीराधा—मातर्विस्मृतमेतन् मया (इत्युक्त्वा साश्रुनेत्राधोमुखी तिष्ठति)

सर्वाः—[३५]सौवर्णदुर्गरुचिरा स्फटिकालयालि-
द्वारावतीव च परा नगरी नु कैषा।
संलक्ष्यते जननि नीरनिधेः समीपे
नानाविधागणितसन्मणिपूर्णपण्या ॥ २५ ॥
कोयं च मातरित एव गजाधिरूढो
राजाभ्युपैति मघवेव शचीसहायः।
जायायुतो जय जयेति च जीव जीवे
त्याशीर्वचोभिरभिनन्दित आर्यलोकैः ॥ २६ ॥

श्रीपार्वती—वत्साः! सर्वमेतदखण्डसौभाग्यवतीनां भवतीनां प्राण-प्रियस्य श्रीकृष्णचन्द्रस्य निष्प्रतिमनिःसीमौदार्यचरित्रचित्रम्।

सर्वाः—मातर्न सम्यगवगम्यतेऽस्माभिर्भगवत्या वचनानामाशयस्तत् कृपां कृत्वा स्फुटं कथय।

श्रीपार्वती—[३६](विहस्य) वत्साः! तथैव वदामि शृणुत—
सुदामा सन्मित्रं परमिव मनः श्रीयदुपते—
र्द्विजन्मा यः पूर्वं निरतिशयदारिद्र्यनिलयः॥
अभूत् प्रेम्णा दत्त्वा निखिलपतये तण्डुलकणान्
स एवायं जातो यदुपतिकृपातो नरपतिः ॥ २७ ॥

---

(३५) सुवर्णविकारः सौवर्णः (सोऽस्य विकार इत्यण्) तादृश दुर्गेण रुचिरा, स्फटिकानामालयास्तेषामालिर्यस्यामेतादृशी परा—द्वितीया—द्वारावतीव का नु एषा नगरी नीरनिधेः समीपे संलक्ष्यते? या नानाविधैरगणितैः सन्मणिभिः पूर्णं पण्यं यत्र तादृशी अस्ति। हे मातः! अयं च शचीसहायो-मघवान्—इन्द्र—इव गजाधिरूढो जायायुतः को राजा इत एवाभ्युपैति? यः प्रजाजनैर्जयजीवेत्याद्याशीर्वचोभिरभिनन्द्यमानः (कौतुकं नश्चेतसि जनयतीत्यर्थः)।

(३६) सर्वमेतद्भगवतो निःसीमौदार्यचरित्रचित्रमिति पार्वतीवचनं गूढार्थमपरिज्ञायमानं विशेषविवेचनार्हं तत्त्वतोवगन्तुं 'मातर्न सम्यगवगम्यतेऽस्माभिर्भगवत्या वचनाशयस्तत् स्फुटं कथयितुं कृपां कुरु' इति सर्वासां प्रश्ने—पार्वती विहस्य स्पष्टं कथयति—श्रीयदुपतेः परमं मित्रं सुदामा नामको यो विप्रः पूर्वं दारिद्र्यनिलयोऽभूत् स एवायं निखिलपतये तण्डुलकणान् दत्त्वा यदुप-

सेयं तदीया नगरी सुदाम-पुरीति लोके प्रथिताभिधाना ।
अनेकमुक्तामणिरम्यहर्म्यै-र्द्वारावतीं या हसतीव भाति ॥२८॥

सर्वाः—[३७]( साश्चर्यम् ) जराजीर्णः शीर्णाखिलरदनताऽव्यक्तवचनः
शतच्छिद्रां कन्थां कुकविकृतितुल्यां गतगुणाम् ॥
वसानोऽस्थ्नां राशिश्चलनवलनीवेक्षित इह
प्रभोस्तुल्यं रूपं कथमिव स धत्तेऽद्भुततमम् ॥ २९ ॥

श्रीपार्वती—[३८]अयि वत्साः!—
सालोक्य–सार्ष्टि–सारूप्य–मुक्तित्रयमनुत्तमम् ।
प्रदत्तं जीवते तस्मै श्रीकृष्णेन दयालुना ॥ ३० ॥
तेन न किञ्चिच्चित्रमिव मन्तव्यम् ।

सत्यभामा—[३९]( सहासम् ) केवलं कैवल्यमुक्तिसमर्पणे किमिति लोभः स्वीकृतः श्रीकृष्णेन ?

---

तिकृपातो नरपतिर्जातः, सोऽयमित्यर्थः । तदीया चेयं नगरी सुदामपुरी इति प्रसिद्धाभिधाना, या अनेकमुक्तामणिरम्यहर्म्या द्वारावतीं हसतीव भाति ।

( ३७ ) सर्वा जातप्रत्यभिज्ञास्तदीयं पूर्ववृत्तं स्मृत्वा साश्चर्यं गृणन्ति । अत्र 'स' इत्यग्रेतननिर्देशाक्षिप्तं य इत्यध्याहार्यं । यः जराजीर्णः शीर्णाखिलरदनतया चाव्यक्तवचनः कुकविकृतितुल्यां शतच्छिद्रां गतगुणां च कन्थां वसानः अस्थ्नां राशिश्चलनवलनी–जङ्गम इव पूर्वमिह द्वारकायामीक्षितः सः प्रभोर्भगवतः समानमद्भुततमं रूपं कथमिव धत्ते ? कथमस्येयं स्वरूपपरिवृत्तिर्जातेति सर्वा विस्मयन्ते ।

( ३८ ) तासां शङ्कामपनुदति श्रीपार्वती–अयि वत्सा इत्यादिना । दयालुना--केवलं दयापरतन्त्रेण–नतूपायनमाहात्म्याकृष्टेन–श्रीकृष्णेन जीवत एव तस्मै सुदाम्ने सालोक्यं–समानलोकत्वं, सार्ष्टि–समानवैभवत्वं, सारूप्यं–समानरूपत्वमित्येतदनुत्तमं मुक्तित्रयं प्रदत्तं तेनायं भगवत्समानरूपस्तत्तुल्यलोकवैभवश्च सम्पन्न इति नात्र किञ्चिच्चित्रम् ।

( ३९ ) सत्यभामा दयालोर्भगवतः प्रहासविधया लोभमाभणति । यदि मुक्तित्रयं जीवन्मुक्तिकल्पमर्पितं तर्हि किमिति कैवल्यमुक्तिसमर्पणे एव लोभः स्वीकृतः कृष्णेन ?

श्रीपार्वती—[४०]न परमौदार्यमहोदधिना श्रीकृष्णेन लोभः स्वीकृतः।
किन्तु स एव न तामिच्छति। शृणुत—
दासोऽहं दासोहं श्रीकृष्णस्यैव दासोहम्।
इति मन्यते य एषः स कथं कैवल्यमुक्तिमभिवाञ्छेत्॥ ३१॥

तथापि प्रणतजनतापारिजातेन 'मा मे भक्तः कयाऽपि मुक्त्या विमुक्तोऽभूद्' इति विचार्य स्वकीयसन्मित्रस्य सुदाम्नश्चित्ते कैवल्यनाथश्रीकेदारनाथभक्तिरुत्पादिता तत्प्रभावाच्च तस्याऽन्ते कैवल्यमुक्तिरपि भविष्येव, न खलु परमेश्वरकृपापात्रतामुपगतानां लोकानां लोके किमपि दुर्लभमिति मन्तव्यम्।

रुक्मिणी—[४१]प्रियस्वसारो मे! प्रसङ्गान्तरमपास्याऽस्मत्प्राणनाथस्य सन्मित्रसमागमानन्दवृत्तान्तमवलोकयाम।

सर्वाः—तथा कुर्मः (इत्युक्त्वा सावधानाः पश्यन्ति)

सुदामा—[४२](दूरतो निपुणं निर्वर्ण्य) अहो कुत इयमनभ्रा वृष्टिः।

---

(४०) श्रीपार्वती भगवति सत्यभामारोपितं कार्पण्यं परिहरति। परमौदार्यमहोदधौ भगवति लोभसम्भावनैव दुर्घटा किन्तु स सुदामैव तां कैवल्यमुक्तिं नेच्छति—यो हि नित्यं दासोऽहं दासोऽहं श्रीकृष्णस्य दास एवाऽहमिति मन्यते स एषः कैवल्यमुक्तिं कथं वाञ्छेत्?—न कथमपीति भावः। तथापि प्रणतपारिजातेन—भक्तानामखिलमनोरथपूरकेण 'मे भक्तः कयापि मुक्त्या वियुक्तो मा भूदिति' विचार्य कैवल्यमुक्तिप्रदश्रीकेदारनाथस्य भक्तिस्तस्य सुदाम्नश्चित्ते उत्पादिता यया भक्त्याऽन्ते स कैवल्यभागपि भविष्यति। परमेश्वरकृपापात्रतामुपगतानां किमिव दुर्लभं? न किमपीत्यर्थः।

(४१) रुक्मिणी—'प्रसङ्गान्तरं परिहाय प्राणनाथस्य सन्मित्रसमागमानन्दवृत्तान्तं पश्याम' इति सर्वा अनुरुन्धे, तदा 'तथा कुर्म' इति वदन्त्यः सावधानाः सत्यः सर्वाः सुदामानं विलोकयन्ति।

(४२) दूरतो निपुणं निर्वर्ण्य (भगवन्तमागच्छन्तं प्रत्यभिज्ञाय) अहो इत्याश्चर्यचकितमुच्चारणं, यतः सर्वथा श्रीकृष्णस्य सुदामपुर्यामतर्कितमागमनमसम्भाव्यमेवेत्याह—कुत इयमनभ्रा वृष्टिः?। प्राक्सूचनमन्तरेणैवागमनस्यानभ्रवृष्टित्वेन निगीर्याध्यवसानादतिशयोक्तिरलङ्कारः।

[43]उपवेशयोपवेशय गजपक ! गजमेनमतिशीघ्रम् ।
योगिभिरगम्यरूपो योगीन्द्रो योगिरूप आयाति ॥ ३२ ॥
( इत्युक्त्वा गजादवतीर्य प्रेम्णाऽभिधावति )

श्रीकृष्णः—[44]( प्रविश्य )
शिव शिव शिव शम्भो श्रीशिवाप्राणवन्धो !
भव भव भव भूत्यै भूयसां श्रेयसां नः ।
हर हर हर दुःखं चाऽनपत्यत्वजन्यं
कुरु कुरु करुणार्द्रां दृष्टिवृष्टिं समन्तात् ॥ ३३ ॥
( इति गायन् परिक्रामति )

सुदामा—भगवन् ! दीनवन्धो ! दयासिन्धो ! योगीन्द्र ! दासोऽहन्ते सुदामाऽभिवन्दे ( एवं वदन् भगवत्पादयोर्दण्डवत्पतति )

श्रीकृष्णः—( अनाकर्णितकेन )
श्रीशैलराजतनया-हृदयाधिनाथ !
श्रीविश्वनाथ ! करुणावरुणालयं त्वाम् ।
भक्ताभिवाञ्छितसमर्पणपारिजातं
वन्दामहेऽखिलमनोरथपूर्त्तिसिद्धयै ॥ ३४ ॥

सुदामा—[45]( स्वगतम् ) अहो परमेश्वरे श्रीपरशिवे भक्त्यतिशयो देवस्य. ( प्रकाशम् ) ( पादौ गृहीत्वा ) भगवन् ! दासानुदासोऽहं सुदामाऽभिवन्दे

---

( ४३ ) गजारूढः सुदामा आधोरणं प्रति ब्रूते । हं गजपक ! ( मावत ) एनं गजमतिशीघ्रमुपवेशय उपवेशयेति वीप्सा सम्भ्रमावहा, योगिभिरप्यगम्यरूपो योगीन्द्रः स्वयं योगिरूपो—योगानुष्ठानानुरूपवेषाकल्पः आयाति । गजपकेनोपवेशिते गजे सुदामा सद्यो गजादवरुह्य भगवन्तं प्रति प्रेम्णाऽभिधावति ।

( ४४ ) श्रीकृष्णो ध्यानस्तिमितदृग्युग्मः प्रविशति, 'शिव शिवेत्यादि' गायन् परिक्रामति; तावदेव पुरत आगत्य सुदामा—'भगवन्नि'त्यादि चतुर्भिर्विशेषणैः सम्बोध्य 'दासोऽहन्ते सुदामाऽभिवन्दे' इति स्वनामग्राहमभिवन्दते । श्रीकृष्णस्तु—अनाकर्णितकेन—प्रणिधानपारतन्त्र्येण तद्वचनानवहिततयेत्यर्थः; अश्रुत्वेति यावत् । प्रणिधानमेवानुसन्धत्ते—श्रीशैलराजतनयाहृदयाधिनाथ श्रीविश्वनाथ ! अखिलमनोरथपूर्त्तिसिद्धयै करुणावरुणालयमत एव भक्ताभिवाञ्छितसमर्पणपारिजातं त्वां वन्दामहे ।

( ४५ ) एवं प्रणिहितचेतसं श्रीकृष्णमालक्ष्य सुदामा स्वगतं चिन्तयति—

श्रीकृष्णः—[४६]( नेत्रे समुन्मील्य साश्चर्यम् ) अहो परमं मित्रं मे सुदामा?

परमानन्दपीयूषधारासारवर्षी दिवसोऽद्यतनः ।

( इत्युक्त्वा बाहुभ्यामुत्थाप्य गाढमालिङ्ग्य )

सुधासिन्धुलहर्यो वा सुधाकरकरास्तथा ।

नाह्लादयन्ति मां मित्र यथा मित्रसमागमः ॥ ३५ ॥

( इति वदन्तावुभावपि बाष्पवारां धारां मुञ्चतः )

रुक्मिणी—[४७]मातः पार्वति ! प्रियस्वसारश्चमे ! श्रीकृष्णचन्द्रस्य मैत्रीधर्ममर्मज्ञता काप्यनिर्वचनीयैव—

आर्ये न सोदरवरे बलधाम्नि रामे

नैवानुजेषु च परेषु कदापि दृष्टम् ।

श्रीकृष्णसौहृदमिदं तु यदत्र मित्रे

विप्रे सुदामनि विलोक्यत आर्द्रचित्ते ॥ ३५ ॥

सर्वाः—एवमेव देवि ! एवमेव.

पार्वती—[४८]वत्साः ! शृणुत—

---

' अहो श्रीपरशिवे भक्त्यतिशयो देवस्य '—इति । सौहार्दानुप्राणितान्तःकरणानामनादराशङ्का नैव जायते प्रत्युत उद्विग्नमानसं सुहृदमुद्वीक्ष्य तदुद्वेगकारणं ज्ञातुं तच्छमनायोपायान्वेषणं च कर्त्तुं सद्य एव यत्नास्थानम् ।

( ४६ ) अनन्तरं सुदामा यावत्पादौ गृहीत्वा ' दासानुदासोह ' मित्यादि वदन्नभिवन्दते तावदेव समुन्मील्य नेत्रे साश्चर्यं ' अहो परमं मित्रं मे सुदामा ? ' परमानन्दपीयूषधारासारवर्षी दिवसोऽद्यतन ' इति वदन् कृष्णस्तमुत्थाप्यालिङ्गति । हे मित्र ! सुधासागरतरङ्गाश्चन्द्रकिरणा वा तथा मां न आह्लादयन्ति यथा त्वादृशमित्रसमागमः आह्लादयतीति शेषः ।

( ४७ ) एवं वदन्तौ साश्रुनेत्रावुभावपि यावन्मिथो विलोकयतः—तावद्रुक्मिणी ' श्रीकृष्णस्य मैत्रीधर्ममर्मज्ञता काप्यनिर्वचनीयेत्याह—हे आर्ये पार्वति ! ( आर्या दाक्षायणी चैवेत्यमरः ) यद् यादृशं श्रीकृष्णसौहृदमार्द्रचित्ते अत्र सुदामनि विप्रे विलोक्यते तादृशं तु सोदरवरे बलधाम्नि रामे—बलदेवे—परेषु वाऽनुजेषु कदापि न दृष्टम् । अत एव भ्रातृस्नेहादपिसौहार्दमतिरिच्यते ।

( ४८ ) सर्वाभिरेवमेवेत्यनुमोदिते श्रीपार्वती सर्वाः शृणुतेत्याकार्य मित्रपदार्थमवबोधयति । जनके मातरि सहोदरे च प्रत्येकमेकैको रसः, सुहृदि च

यस्मिन् रसा जनकमातृसहोदरस्थाः
सर्वेपि, यद्रसलवोऽपि नचाऽपरेषु ।
तस्मादभिन्नहृदयात् समदुःखसौख्यान्—
मित्रात् परं किमिह वस्तु हितं नराणाम् ? ॥ ३६ ॥

सुदामपत्नी—( प्रणम्य ) दीनबन्धो योगीन्द्र ! वन्देऽहम् ।

श्रीकृष्णः—अखण्डसौभाग्यवती भूयाः ।

सुदामपत्नी—प्राणनाथ ! कोटिकन्दर्पलावण्यदर्पलुण्टाकलावण्यः कोऽयं योगीन्द्रः ?

सुदामा—[४९] ( साश्चर्यम् ) प्रिये ! त्रिभुवनविख्यातमपीमं योगीन्द्रं नाभिजानासि किम् ? शृणु—

यद्दयादृगवलोकलेशतो राज्यमेतदनुभूयते मया ।
कृष्णचन्द्र उदयद्दयोदयो योगिराजवपुषा विराजते ॥ ३७ ॥

---

सर्वेऽप्यमी सङ्गीभूता अनुभूयन्ते; सौहार्द्दरसस्तु सुहृदमन्तरेण न क्वापि, तस्मात्कारणात् समदुःखसौख्याद् अभिन्नहृदयाद्—वपुर्भेदे दृश्यमानेपि मनसोरभेदात्—तादृशान्मित्रात् किमिव हि वस्तु नराणां परं श्रेष्ठं हितं क्षमावहं च ? स्यादित्यर्थः । न किमपी तिशेषः ।

( ४९ ) अत्रान्तरे सुदामपत्नी 'दीनबन्धो योगीन्द्र ! वन्देऽहम्' इत्यभिदधाना वन्दते, श्रीकृष्णश्चतामखण्डसौभाग्यवती भूया' इत्याशिषा संयुनक्ति, तावदेव सा स्वपतिम्—'कोटिकन्दर्पलावण्यदर्पलुण्टाकलावण्यः कोयं योगींद्र ? इति पृच्छति, तदा सुदामा—'त्रिभुवनविख्यातमपीमं योगीन्द्रं नाभिजानासि ?' इति साश्चर्यं जायामवजानान इव अज्ञानदूरीकरणाय प्रत्यभिज्ञामानयति—'यदित्यादिना । यदीयदयादृगवलोकलेशमात्राद् एतद्राज्यं मयाऽनुभूयते उदयद्दयोदयः श्रीकृष्णचन्द्र एव सोऽयं योगिराजवपुषा विराजते । किञ्च हे सति ! प्रियतमे ! तत्—पूर्वकालिकं—तार्णं—तृणनिर्मितं—तदपि जीर्णमत एवातिशीर्णं सदनं क्व, क्व च इयं परिदृश्यमाना मणिगणचिता स्वर्णरचिता हर्म्यालिः—एतत्सकलं यस्य विभोर्दयादृष्टेर्विलसितं स एवायं श्रीकृष्णो लसति, अस्मन्नयनान्यानन्दयन्पुरस्ताद्वर्त्तते तमेतं भक्त्या प्रणम । अपिच हे सति ! प्रतिसदनम् आसायं कालं भ्रामं भ्राममपि भिक्षान्नैः स्वीयं जठरमपि भर्त्तुं योऽहं न समशकं सोहमिदानीं येन दयया सकलजगद्भरणसामर्थ्यवान् कृतः स एषः पुरोवस्थितः श्रीकृष्णो लसति तमेतं भक्त्या प्रणम ।

क्व तत् तार्णं जीर्णं सदनमतिशीर्णं प्रियतमे !
क्व चेयं हर्म्यालिर्मणिगणचिता स्वर्णरचिता ।
दयादृष्टेरेतद् विलसितमिदं यस्य तु विभोः
स एव श्रीकृष्णः सति ! लसति भक्त्या प्रणम तम् ।। ३८ ।।
अहं भ्रामं भ्रामं प्रतिसदनमाऽऽसायमपि यो
न भिक्षान्नैः स्वीयं जठरमपि भर्त्तुं समशकम् ।
कृतो भर्त्ता सोऽहं निखिलजगतां येन दयया
स एष श्रीकृष्णः सति ! लसति भक्त्या प्रणम तम् ।। ३९ ।।

सुदामपत्नी—[५०]( साश्चर्यानन्दम् )—
कल्पवृक्षः कामधेनुः कोऽपि चिन्तामणिश्च यः ।
भक्तानामनुरक्तानां कृष्णचन्द्र नमोऽस्तुते ।। ४० ।।
( इति वदन्ती श्रीकृष्णपादयोः पतति )

श्रीकृष्णः—[५१]सौभाग्यवति ! प्रजावति ! अलमलमतिविवेकवाग्वल्लरीपल्लवितेन ।
अयं वयं तथैवान्ये येत्र दीनदयालुना ।
नमस्तस्मै कृता येन लोके लोकेश्वरा अमी ।। ४१ ।।

अपिच—अहमपि गुरुदाराज्ञावशस्तेन तुल्य—
श्वणकक्कणकभोजी चेन्धनोद्धारवाही ।
अभवमपि च येन द्वारकेशः कृतोऽहं
प्रणयवति ! पतिस्ते निर्मितस्तेन राजा ।। ४२ ।।

---

( ५० ) सञ्जातभगवत्स्वरूपभाना सुदामपत्नी साश्चर्यानन्दम्—'यः अनुरक्तानां भक्तानां कल्पवृक्षः कामधेनुः कोपि—स्वर्गस्थचिन्तामणितो विलक्षणः—चिन्तामणिरसि, हे कृष्णचन्द्र ! तस्मै ते नमोऽस्तु' इत्युक्त्वा पादयोः पतति ।

( ५१ ) श्रीकृष्णः शिवमहिमानमेव परां कोटिमारोपयन्नाह । हे सौभाग्यवति ! प्रजावति ! अतिविवेकवाग्वल्लरीपल्लवितेन अलम् । नायञ्जनोऽत्र विवेकातिशयमर्हतीच्छति वा यतस्तद्विषयकतत्त्वानभिज्ञा त्वमेवं वदसि । वस्तुतस्तु—अयं तव पतिः, वयं, तथैवात्र लोके अन्ये जना अपि येन दयालुना लोकेशतां नीतास्तस्मै नमः कुर्विति शेषः । गीतास्वपि 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति××तमेव शरणं गच्छेत्यादि अर्जुनं बोधयताऽपि भगवताऽयमेव प्रकार

सुदामपत्नी—भगवन्! तर्हि परमोपकारिणस्तस्यापि देवदेवस्य पवित्रं नाम श्रवणाभरणतां नेतुमिच्छामि।

श्रीकृष्णः—[५२]देवि! जगत्प्रसिद्ध एव स देवदेवः। शृणु—

देवः सेवकवाञ्छितार्पणविधौ चिन्तामणिर्गीयते
सर्वैः श्रीनिगमागमैरनुदिनं श्रीपार्वतीवल्लभः।
यस्येषत्करुणावलोकनवलालम्बेन नारायणः
प्राप श्रीशपदं विधिर्विधिपदं रुद्रश्च रौद्रं पदम्॥ ४३॥

मया तु मद्गृहागताय परममित्रायापि चास्मै किमपि न दत्तम्। तदेतत्स्वयमेव जानाति।

सुदामा—[५३](सहर्षानन्दनम्) अलमलमिदानीं स्वकीयासीमौदार्यमहोदधिलहरीलीलापह्नवेन—

कृपावलोकलेशेन कुचेलोऽपि कुवेरताम्।
नीतो येन क्षणेनाहं वेत्ति तत् सकलं जगत्॥ ४४॥

---

उपयुक्तः। अपिच—अहमपि गुरुदाराज्ञावशः तेन तव भर्त्रा तुल्यः चणककणकभोजी इन्धनोद्धारवाही च, येन कृतः, द्वारकेशः अभवं, हे प्रणयवति! तेन तव पती राजा निर्मितः।

(५२) एवं श्रीकृष्णेन प्रतिबोधिता सुदामपत्नी स्वस्वाम्युदयहेतुं देवं जिज्ञासमाना 'परमोपकारिणस्तस्यापि नाम श्रवणाभरणतां नेतुमिच्छामि—श्रोतुमिच्छामि (पर्यायोक्तालङ्कारः) इत्याह, तदा श्रीकृष्णः परशिवमहिमानमुपवर्णयन्नाह। यद्यपि जगत्प्रसिद्ध एव स देवदेवः तथापि शृणु—सेवक। वाञ्छितार्पणविधौ यो देवः निगमागमैरनुदिनं चिन्तामणिर्गीयते स श्रीपार्वतीवल्लभः जयति—सर्वोत्कर्षेण वर्त्तते। यस्य ईषत्करुणावलोकनवलाश्रयेण नारायणः श्रीशपदं, विधिर्विधिपदं, रुद्रश्च रौद्रं पदं प्राप, स एव सर्वानुग्रहे हेतुरस्ति; मया तु गृहागताय परममित्रायाप्यस्मै किमपि न दत्तमित्ययं स्वयं जानाति' इत्युक्त्वा विरमति।

(५३) एतच्छ्रुत्वाऽसहमान इव सुदामा सहर्षानन्दमाह अलमिति स्वीयौदार्यमनपन्हवाहं यतः कृपावलोकलेशेन कुत्सितवस्त्रवानप्यहं येन क्षणेनैव कुवेरतां नीतस्तदेतत्सकलं जगद्वेत्ति। अतः दयालुना त्वया दयावलोकमात्रेण सद्यः रङ्कादपि रङ्कोऽहं राजराजसमानतां नीतोऽस्मि इति जगत्प्रसिद्धमेव। अथापि श्रीकृष्णनिरूपितं महादेवहेतुत्वमपि न प्रत्याख्यानमर्हतीत्याह—अथवा—

दयावलोकमात्रेण त्वया सद्यो दयालुना ।
रङ्करङ्कोऽपि नीतोस्मि राजराजसमानताम् ॥ ४५ ॥

इति जगत्प्रसिद्धमेव । अथवा—

त्वमन्तरात्मासि महेश्वरस्य महेश्वरश्चापि तवान्तरात्मा ।
न भेदलेशो युवयोस्ततस्त्वद्दत्तं च तद्दत्तमिदन्तु युक्तम् ॥ ४६ ॥

श्रीकृष्णः—[५४]सखे !—

रङ्करङ्कान् राजराजान् क्षणात् कर्त्तुं निजान् नरान् ।
शक्ता शक्तिर्येन मह्यं दत्ता सोऽयं महेश्वरः ॥ ४७ ॥
त्वया मया च सततं सेव्यः सेव्यगुणालयः ।
नास्ति देवो महादेवात् परः श्रेयःपदप्रदः ॥ ४८ ॥

सुदामा—[५५]भगवन्! युक्तमुक्तमेतन्महामाहेश्वरेण श्रीमता । अहमपि भवानिव श्रीमहेश्वरस्यैव भक्तोस्मि ततः श्रीमन्मतं ममापि प्रियतममेव परमिदानीं ममाभ्यर्थनां शृणु—

श्रीकृष्णः—अवहितोऽस्मि श्रोतुम् ।

---

त्वं महेश्वरस्य अन्तरात्मासि महेश्वरश्च तवाऽन्तरात्मास्ति ततश्च युवयोर्न भेदलेशोप्यस्ति अतस्त्वद्दत्तमपि तद्दत्तमेवेति युक्तमेवोच्यते भगवता ।

(५४) इदानीं श्रीकृष्णः सखायं सुदामानं परतत्त्वमुपदिशति—हे सखे ! रङ्करङ्कानपि निजान् नरान् ( भक्तजनान् ) क्षणादेव राजराजान् कर्त्तुं-शक्ता शक्तिर्येन मह्यं दत्ता सोऽयं देवो महेश्वर एव । किञ्च—सेव्येऽपेक्षिता ये स्वजनवात्सल्य-वदान्यतादयो गुणास्तेषामालयो मुख्याश्रयः स महादेव एव त्वया मया च सततं सेव्यः, यतो महादेवात् परः श्रेयःपदप्रदो देवो नास्ति, 'महादेवपदनिरुक्तिरेव तस्य सर्वाधिकत्वं 'विश्वाधिको रुद्रो महर्षि' रित्यादिश्रुतिसिद्धमनुवदति । यदाह माहेश्वराग्रणीर्भट्टमाहेश्वरः ।

बालेन्दुरम्यमुकुटात् तुहिनाचलाभा-
च्छ्रीशैलराजतनयाश्रितवामभागात् ।
श्रीकान्तनेत्रसरसीरुहपूज्यपादा-
च्छम्भोः परं किमपि तत्त्वमहं न जाने ॥

(५५) इदानीं भगवदुक्तं शिवोत्कर्षमनुमोदमानः सुदामाह । भगवन् भवानिवाहमपि शिवभक्त एवास्मि ततः श्रीमन्मतं ममापि प्रियतममतो भवदुक्तं सर्वं युक्तमेव, परमिदानीं ममाभ्यर्थनां शृणु' इति यदोपक्रमते तदा

सुदामा—करुणाकर ! देवदेव हे ! गजमारोह स्यादमुं निजम् ।
नगरीं मम भूषयाऽधुना निजमित्रं च कृतार्थयाशु माम् ॥४९॥

श्रीकृष्णः—प्रियसखे ! त्वत्सहवासस्तु मे श्रीबलदेवसहवासनिर्विशेषा नन्दमन्दिरं परन्तु नेदानीं तत् कर्त्तुं शक्यम् ।

सुदामपत्नी—नाथ ! कथमधुना नाऽस्मान् कृतार्थान् कर्त्तुं शक्नोषि ?

श्रीकृष्णः—[५६]मात्रा च पित्रा गुरुभिर्नियुक्तः सत्पुत्रलाभायतपोविधातुम् ।
उल्लङ्घ्य तेषां वचनानि सौम्ये कथं वद त्वन्नगरीमुपैमि ॥ ५० ॥

सुदामा—[५७](सानन्दोत्साहम्) एवं चेत् तर्हि—
तपः करिष्याम्यहमेव मित्र ! त्वत्पुत्रलाभार्थमनन्यचित्तः ।
सन्तोष्य भक्त्याऽऽशुतमाशुतोषं त्वां पुत्ररत्नैः सुखिनं करिष्ये ॥५१

---

श्रोतुमवहितोऽस्मीति ' भगवतोत्तरिते—हे करुणाकर ! अमुं निजं गजं स्यादारोह, मम नगरीं भूषय, निजमित्रं च मामाशु कृतार्थय—इत्यभ्यर्थनात्रयमुपढौकितवान् ।

(५६) सुदामाभ्यर्थनाः श्रुत्वा—त्वत्सहवासस्तु मे बलरामसहवास समानसुखदस्तथापि नेदानीं तत्कर्त्तुं शक्यम्—इति भगवद्वचनाकर्णनमात्रेणैव कशाहतेव वडवा सुदामपत्नी सुशीला ' नाथ ! कथमधुना नास्मान् कृतार्थयिष्यसी 'ति सभ्रूभङ्गमिव काक्वाह, तदा तां सानुनयमेव भगवानुत्तरयति—हे सौम्ये ! मात्रा पित्रा गुरुभिश्च सत्पुत्रलाभाय तपो विधातुं नियुक्तः तेषां वचनानि उल्लङ्घ्य त्वन्नगरीं कथमुपैमि ? अत्र त्वमेव वद ।

(५७) सुदामपत्न्या असन्तोषपरिहारे दत्तेपि कारणज्ञानेन तत्रोपायान्तरसाध्यत्वमुपन्यस्यन् स्वेष्टमनुकूलयितुं सुदामा श्रीकृष्णं विज्ञापयति । हे कृष्ण ! एवं चेत्—मात्राद्याज्ञया पुत्रप्राप्तये तपोनुष्ठानमेव चिकीर्षितं तर्हि—त्वत्पुत्रलाभार्थमहमेव अनन्यचित्तः सन् तपः करिष्यामि । भक्त्या तमाशुतोषमाशु सन्तोष्य पुत्ररत्नैस्त्वां सुखिनं करिष्ये । ततश्चिन्तां विहाय सुखं मे पुरीं प्रयाहि तां च पवित्रय—पादन्यासादिभिरिति शेषः; मे प्राणसमाः प्रियाः प्रजाः कृपया त्वं कृतार्थाः कुरु । त्वं प्रजाः पालय यावदहं तपः करोमीत्यभिप्रायः । ' करिष्ये ' इत्यात्मनेपदप्रयोगः सुखस्य श्रीकृष्णगामित्वेऽपि श्रीकृष्णसुखदर्शनजन्यसन्तोषस्य सुदामगामितया साधुरेव ।

चिन्तां विहायैव ततः सुखेन प्रयाहि हे कृष्ण ! सखे ! पुरीं मे ।
पवित्रय प्राणसमाः प्रिया मे प्रजाः कृतार्थाः कृपया कुरु त्वम् ५२

श्रीकृष्णः—[५८]घटितमेव सखे! सकलं त्विदं त्वयि महेश्वरभक्तशिरोमणौ ।
असुलभं किमिवात्र भवादृशां स्मरहरस्मरणैकपरात्मनाम् ॥५३॥

किञ्च—केदारकैलासमपास्य देवः केदारनाथोऽपि तवैकभक्त्या ।
केदारकुण्डेन सहागतस्ते पुरीं पवित्रामिति च श्रुतं नः ॥ ५४ ॥
ततः समर्थस्त्वमसि त्वदुक्तं सर्वं विधातुं परमेशभक्त्या ।
तथापि मित्राऽऽश्रितशङ्कराणामाज्ञा गुरूणामविलङ्घनीया ॥ ५५ ॥
अतो नेदानीं त्वदीयां पुरमागन्तुं शक्नोमि ।

सुदामा—[५९]अयि श्रीकृष्णचन्द्र !
तपस्त्वमेवं यदि पूर्णभक्त्या कुरुष्व चावां तव किङ्करौ स्वः ।
आज्ञापयाऽऽहर्त्तुमुभौ फलानि दलानि मूलानि जलानि चापि ५६
एतावताऽपि कृतार्थौ भविष्यावः ।

श्रीकृष्णः—[६०]सखे ! मा खेदं कार्षीः । प्रयाणदिवस एव मयाऽनन्यस-

---

( ५८ ) सुदामोक्तमभिष्टुवन् स्वप्रतिज्ञां निवेदयति श्रीकृष्णः—' घटित '
मित्यादिना । हे सखे ! महेश्वरभक्तशिरोमणौ त्वयि इदं सकलं (मदर्थे तपो विधाय मदिष्टसाधनादिकं ) घटितमेव, युज्यत एव, ( नात्र किञ्चिदुष्करं ते ) यतः स्मरहरस्मरणैकपरात्मनां भवादृशां किमिवात्र असुलभं ? नकिमप्यसुलभमित्यर्थः । किञ्च—केदारकैलासात्केदारनाथोऽपि केदारकुण्डेन सह तव भक्त्या ते पुरीमागत इत्यपि श्रुतमस्ति ततस्त्वं त्वदुक्तं सर्वं परमेशभक्त्या विधातुं समर्थोऽसि ( न काप्यत्र शङ्का ) तथापि हे मित्र ! आश्रितशङ्कराणां गुरूणामाज्ञा अविलङ्घनीयेत्यतो नेदानीं त्वत्पुरीमागन्तुं शक्नोमीति ।

( ५९ ) अनायासोपनत--श्रीकृष्णाराधनलाभलुब्धः सुदामा विकल्पद्वये परास्तः प्रकारान्तरमुपाकरोति । अयि श्रीकृष्णचन्द्र ! एवंचेत्—गुरूणामाज्ञा यथावत्पालनीयैव—तर्हि त्वमेव पूर्णभक्त्या तपः कुरुष्व, आवाञ्च तव किङ्करौ स्वः—भवावः । उभावप्यावां फलानि दलानि मूलानि जलानि चकारात्पुष्पादीन्यपि समाहर्तुमाज्ञापय । एतावतापि कृतार्थौ भविष्याव इति अप्रत्याख्येयेयमर्थनेतिभावः ।

( ६० ) अवशिष्टं प्रतिज्ञांशमाश्रावयति श्रीकृष्णः—सखे ! माखेदं कार्षीः ( अभ्यर्थनाप्रत्याख्यानेन खिन्नो माभूरित्यर्थः ) यतः प्रयाणदिवस एव

हायेन तपः कर्त्तव्यमिति प्रतिज्ञातं ततो न तावन्मात्रमपि साहाय्यं कारयितुं शक्नोमि । परं तपःफलप्राप्त्यनन्तरं युवयोर्मनःसन्तोषाय त्वदीयनगरे निवासं करिष्यामि । इदानीं त्विह स्थित एव श्रीबिल्ववनमार्गं प्रदर्श्य स्वनगरीं गत्वा स्वप्रजायाः पालनपोषणलालनानि कुरुष्व, सैव मे परमा सेवा ।

सुदामा—[६१](साञ्जलिबन्धम्)

गव्यूत्यन्ते वटतरुरितः पूर्वदिश्यस्ति रम्यो
गव्यूत्यर्द्धे धनपतिदिशं याहि तस्मात् प्रदेशात् ॥
तत्रैवास्ते नयनसुखदं मानसाह्लादवर्षि
श्रीमद् बैल्वं वनमतिघनं सिद्धिदं साधकानाम् ॥ ५७ ॥

श्रीकृष्णः—सखे ! तथैव गमिष्यामि ( इत्युक्त्वोत्तिष्ठति )

सुदामा—( सह पत्न्या प्रणमति )

श्रीकृष्णः—[६२]श्रीकेदारेशकरुणा-दृष्टिवृष्ट्यानुवासरम् ॥
अमन्दानन्दसन्दोहौ भूयास्तं दम्पती युवाम् ॥ ५८ ॥

---

मयाऽनन्यसहायेन तपः कर्त्तव्यमिति प्रतिज्ञातमतस्तावन्मात्रमपि साहाय्यं कारयितुं न शक्नोमि । परं तपःसिद्धिलाभानन्तरं युवयोर्मनस्तोषाय तव पुर्यां निवासं करिष्यामीत्याश्वास्य—अधुना तु बिल्ववनमार्गमिहस्थित एव ( न तु सहागत्य ) प्रदर्श्य स्वनगरीं गत्वा प्रजापालनादि कुरु, सैव मे परमा सेवा । 'यत्करोषि यदश्नासि' इत्यादि गीतोक्तमत्र संवदितव्यम् ।

( ६१ ) इदानीं सुदामा बिल्ववनमार्गमादर्शयति । इतः पूर्वदिशि गव्यूत्यन्ते—क्रोशयुगलान्ते वटतरुरतिरम्योऽस्ति, तस्मात्प्रदेशात् पुनर्गव्यूत्यर्द्धे धनपतिदिशं प्रयाहि—क्रोशैकमात्रमुत्तरतो व्रज—तत्रैव नयनसुखदं, मानसाह्लादवर्षि, साधकानां सिद्धिदं, श्रीमद्, अतिघनं, बैल्वं, वनमस्ति. ( यत्र तपश्चरणं करिष्यसि ) ।

( ६२ ) तथैव करिष्यामीत्युक्त्वा प्रतिष्ठासौ श्रीकृष्णे सुदामपत्नी सुदामा च प्रणमतस्तदा श्रीकृष्णः श्रीकेदारेशकरुणादृष्टिवृष्ट्या युवां दम्पती नित्यममन्दानन्दसन्दोहौ भूयास्तमिति यावदाशिषं ददाति तावदेव तौ दम्पती, साञ्जलिबन्धम्—'सद्यस्तोषान्महेश्वरात्सद्यस्तपःफलं प्राप्य हे दयानिधे ! सद्यः स्वदर्शनानन्द प्रदो भव' इति शुभाशंसां व्याहृत्य निष्क्रान्तौ । अत्र त्रिरुपात्तोऽपि सद्यःशब्दो रचनाविशेषेण सहृदयहृदयानि चमत्कुर्वन्न पौनरुक्त्यमावहतीति विदाङ्कुर्वन्तु सुधियः ।

१२

दंमती—( साञ्जलिबन्धनम् )

सद्यस्तपःफलं प्राप्य सद्यस्तोषान् महेश्वरात्
सद्यः स्वदर्शनानन्दप्रदो भव दयानिधे ! ॥ ५९ ॥

( इत्युक्त्वा प्रणम्य निष्क्रान्तौ )

श्रीकृष्णः—गतः परमं मित्रं मे सुदामा ?

[६३]मातापित्रोर्विरहजनितं सोढमेवातिदुःखं
सत्पत्नीनां सकलसुहृदां सद्गुरूणां तथैव ॥
सन्मित्रस्य प्रणयजलधेः श्रीसुदाम्नो वियोगः
सोढुं शक्यो भवति नहि मे किं करोमि क्व यामि ॥६०॥

( इति चिन्ताकुलस्तिष्ठति )

श्रीरुक्मिणी—राधे राधे पश्य प्राणनाथो नः स्वमित्रविरहव्यथाः कथापथातीता अनुभवति ।

श्रीराधा—[६४]देवि ! सतीर्थ्यतासम्बन्धबद्धो मैत्रीभावः
कोऽप्यन्यादृश एव भवति भव्यानाम् ।
गुरुकुले वसतां कृतिशालिनां भवति देवि किमप्यचलाचलम् ॥
परमजर्य्यमनन्यसमक्रमं व्रजति यज्जरसापि न जीर्णताम् ॥६१॥
इति यदस्माभिः श्रुतं तदेवाऽस्मत्प्राणनाथेऽनुभूयते ।

---

( ६३ ) इदानीं श्रीकृष्णो मित्रवियोगेन रणरणकाकुलो भवति । 'गतः परमं मे मित्रं सुदामा' इत्युक्त्वा खिन्न इव प्रगदति—मातापित्रोर्विरह जनितमतिदुःखं सोढमेव तथैव सत्पत्नीनां सकलसुहृदां सद्गुरूणां च वियोगः सोढ इति शेषः । परन्तु प्रणयजलधेः सन्मित्रस्य श्रीसुदाम्नो वियोगः सोढुम शक्य एव भवति मे—अतः किङ्करोमि क्व यामि । इति चिन्ताकुलस्तिष्ठति ।

( ६४ ) अत्रावसरे श्रीरुक्मिणी—राधे ! पश्य नः प्राणनाथः कथा पथातीताः—कथयितुमशक्याः—स्वमित्रविरहव्यथा अनुभवति—इत्याह, तदा राधा, रुक्मिणीं मैत्रीभावमुपवर्ण्य श्रावयति । देवि ! सतीर्थ्यतासम्बन्धबद्धो मैत्री भावः=समानं तीर्थं गुरूपासनं येषां ते सतीर्थ्याः—तथा च केवलमैत्रीभावाद् विलक्षणोयं सहाध्यायितापरिपोषितो मैत्रीभावः सोऽपि पुनर्भव्यानां कोऽप्यन्यादृश एव भवति । तमेव स्पष्टयति—हे देवि ! गुरुकुले ( सह ) वसतां कृति शालिनां ( जनानां ) किमपि वर्णनातिगं, अचला—भूमिस्तद्वदचलं, परमुत्कृष्टमजर्यं=सङ्गतं=भवति, यज्जरसापि न जीर्णतां व्रजति, यतस्तदनन्यसमक्रमं, तदीयः

श्रीकृष्णः—[६५]किमपि मा स्मर मा स्मर मे मनः !
क्व नु तवोत्सुकतेप्सितसिद्धिदा ॥
हृदय मे धर धैर्यमधैर्यनुत् ।
स्मर सदा स्मर शम्भुमुमापतिम् ॥ ६२ ॥

अथवा किमिवात्रोद्वेगकारणम्—
मंत्री च मित्रं च सुहृत् प्रियश्च माता च तातश्च गुरुर्मतिश्च ॥
गतिः पतिश्चेष्टद इष्टदेवः सर्वं सदा साम्बसदाशिवो मे ॥ ६३ ॥

राधा—देवि ! पश्य प्राणनाथेन नः श्रीपार्वतीप्राणनाथे सर्वस्वबुद्धिं निबध्य समुन्मूलिता सन्मित्रसङ्गजन्या समुत्सुकता ।

रुक्मिणी—[६६]देवि राधे ! योगीश्वरः खल्वयं, किन्नामाऽसाध्यं तस्य ।

श्रीकृष्णः—( सोत्साहं समुत्थाय ) [६७]इदानीं गुरूपदिष्टं विल्ववनमेव गच्छामि । ( इति वदन् निष्क्रान्तः )

( ततः प्रविशति सुदामा तत्पत्नी सुशीला च )

श्रीसुदामा—( साश्रुपातं सोत्कण्ठञ्च )

---

क्रमो वृद्धिस्थैर्यादिलक्षणोऽन्येन केनापि पदार्थेन समो न भवति—अतर्क्यस्वरूपमेव तद् इति यदस्माभिः श्रुतं तदेवाऽस्मत्प्राणनाथेऽनुभूयते । तादृशाजर्यस्य श्रीकृष्ण एवोदाहरणमिति भावः । अजर्यं सङ्गतम् । पा० ३।२।१०५। 'मृगैरजर्यं जरसोपदिष्ट' मित्यत्रैव सङ्गतमध्याहार्यम् ।

( ६५ ) श्रीकृष्णो मित्रवियोगवैक्लव्यमपमार्ष्टि । हे मे मनः ! किमपि मित्रादिकं मा स्मर—( सर्वं विस्मरेत्यर्थः ) ईप्सितसिद्धिदा सा तव उत्सुकता क्व नु ( गतेतिशेषः ) हे मे हृदय ! अधैर्यनुद्—धैर्यं धर । किञ्च सदा उमापतिं शम्भुं स्मर, ( विशेषविचारान्ते पुनः ) अथवा ममात्र किमिवोद्वेगकारणम् ? न किमपीति भावः, यतो—मन्त्री, मित्रं, प्रियः सुहृद्, माता, तातो, गुरुः, मतिः-विचारस्थानं, गतिः—शरणं, पतिः—पालकः स्वामी, इष्टदः इष्टदेवश्चैतत्सर्वं मम सदा साम्बसदाशिवोऽस्त्येवेत्यर्थः ।

( ६६ ) यदा राधया 'देवि पश्य नः प्राणनाथेन श्रीपार्वतीप्राणनाथे सर्वस्वबुद्धिं निबध्य सन्मित्रसङ्गजन्या समुत्सुकतोन्मूलिता—' इत्युक्तं तदा श्रीकृष्णस्य योगीश्वरत्वं निगद्य 'किन्नामासाध्यं तस्ये' ति कथयन्ती रुक्मिणी कृष्णस्यासङ्गत्वमप्याह ।

(६७) बिल्ववनं गन्तुं कृतमतिः सोत्साहं समुत्थाय निष्क्रान्तः श्रीकृष्णः।

६८यो बाल्ये गुरुमन्दिरेषु निवसन् बध्वा गतः प्रेम यद्-
दीने स्वीयतया तया मयि महाराजाधिराजोऽपि सन् ॥
तत्तादृक्परिपालयत्यनुदिनं प्रेमामृताम्भोनिधिः
सोऽयं मेऽस्तु दयालयः प्रतिजनुः श्रीकृष्णचन्द्रः सखा ॥ ६४ ॥

**रुक्मिणी**—जाम्बवति ! पश्य पश्यास्माकमिवेदानीं श्रीकृष्णचन्द्रपरम-मित्रस्य सुदाम्नोपि दशा दृश्यते ।

**जाम्बवती**—६९देवि ! सत्यं, सकलजगदाह्लादिनः श्रीकृष्णचन्द्रस्य वियोगः कस्य न दुःखदो भवति ?

**सुदामा**—७०कमलकोमललोलविलोचनः स्मितमुखः प्रणयामृतसागरः ॥
नयनयुग्मपथातिथितां कदा पुनरुपैष्यति मे परमः सखा ॥६५॥

**सुशीला**—नाथ ! श्रीयदुनाथः श्रीबिल्ववनं प्रति प्रस्थितस्तदतः परं किं कर्त्तव्यमत्रैव स्थित्वा ?

---

( ६८ ) इष्टजनवियोगजन्यं दुःखमतितरामसह्यमेव भवतीति सुदामापि कृष्णवियोगे साश्रुपातमुत्कण्ठाकुलं च स्वगतं गदति । स यः श्रीकृष्णो बाल्ये गुरुमन्दिरेषु निवसन् दीने मयि तया ( अलौकिक्या ) स्वीयतया यत् प्रेम बद्ध्वा गतः स पुनर्महाराजो भवन्नपि तत्तादृगेव प्रेम अनुदिनं पालयति सोऽयं दयाया आलयः प्रेमामृताम्भोनिधिः श्रीकृष्णचन्द्रः प्रतिजनुः—जन्मनिजन्मनि—मे सखा अस्तु । एतेन सुदाम्नः सख्यभक्तिप्रियत्वं स्फुटमवगम्यते ।

( ६९ ) रुक्मिण्या—श्रीकृष्णचन्द्रपरममित्रस्य सुदाम्नोपि अस्माकमिवेदानीं दशा दृश्यते—इति वियोगदशासाम्ये कथिते जाम्बवती—वियोगे दुःखप्रयोजकपतित्वापेक्षया मित्रत्वं न कयापि मात्रया न्यूनतामावहति, तत्रापि सकलजगदाह्लादिनः श्रीकृष्णचन्द्रस्य वियोगः कस्य न दुःखदोऽपि तु सर्वस्येति वचोवैचित्र्येण तदुक्तं समर्थयति ।

( ७० ) सुदामा स्वीयामुत्कलिकामाभणति—कमलकोमललोलविलोचनः स्मितयुक्तमुखः प्रणयामृतसागरः स मे परमः सखा ( श्रीकृष्णः ) पुनः कदा नयनयुग्मपथातिथिताम् उपैष्यति ? कदा पुनस्तं द्रक्ष्यामीत्यर्थः । पर्यायोक्तमलङ्कारः । प्रथमचरणे कमल कोमल इति वृत्त्यनुप्रासः । लकाराद्यन्तस्थप्रायरचनया ‘ ललितं मालतीमाला लोलालिकलिला यथे ’ त्यादाविव सुकुमारता नामको गुणः । वैदर्भी रीतिः ।

सुदामा—[७१]प्रिये ! सुशीले !

पद्भ्यां चलत्यमलपङ्कजकोमलाभ्यां
श्रीकृष्णचन्द्र इह मे परमेश्वरोऽपि ॥
प्राणप्रिये वद कथं गजराजमेन-
मारुह्य यामि नगरीं निजराजधानीम् ॥ ६६ ॥
तत्त्वं गजेन्द्रमधिरुह्य पुरीं प्रयाहि
प्रेम्णा प्रजापि निखिला परिपालनीया ।
पोष्या त्वया प्रतिदिनं परिलालनीया
यावन्मदागममियं हि ममैव सेवा ॥ ६७ ॥

सुशीला—प्राणनाथेन पुनः किं कर्त्तव्यम् ?

सुदामा—[७२]यावच्छ्रीकृष्णचन्द्रः श्रीमहेशपरितुष्टये ॥
करिष्यति तपस्तावत् तपस्तप्स्याम्यहं प्रिये ! ॥ ६८ ॥

श्रीरुक्मिणी—[७३]धन्योसि सुदामन् ! धन्योसि, श्रीकृष्णचन्द्रपरम-मित्रस्य ते साम्प्रतमिदमेव साम्प्रतम् ॥

---

(७१) यदुनाथो बिल्ववनं प्रति प्रस्थित इदानीमत्रस्थित्वा किं कर्त्तव्यमिति प्रियया पर्यनुयुक्तः सुदामा तत्कालमेव मनस्युद्भूतमात्मसङ्कल्पं तस्यै निवेदयति—प्रिये ! इत्यादि । मे परमेश्वरोपि श्रीकृष्ण इह अमलपङ्कजकोमलाभ्यां पद्भ्यां चलति ( तर्हि ) एनं गजराजमारुह्य निजराजधानीं कथं यामि ? तत्त्वमेव वद—मदीयं चेतोभारमपाकुरु, हे प्राणप्रिये ! श्रीकृष्णे पदातौ मम गजारोहणमसुखाकरमेव । तत्तस्मात्कारणात् त्वं गजेन्द्रमधिरुह्य पुरीं प्रयाहि, प्रेम्णा निखिलाऽपि प्रजा त्वया परिपालनीया पोष्या प्रतिदिनं मदागमनपर्यन्तं परिलालनीया च; इतीयं मे सेवा । मत्सेवाबुद्ध्या प्रजापालनं विधेयमित्याज्ञार्थः ।

(७२) सुशीलया—'प्राणनाथेन (भवता) किं कर्त्तव्यं (सङ्कल्पितं)? इति पुनः पृष्टः सुदामा स्वमनीषितमर्थमाविष्करोति—यावत् श्रीमहेशपरितुष्टये—श्रीमहेश्वरपरितुष्टिपर्यन्तं—श्रीकृष्णचन्द्रस्तपः करिष्यति तावदहमपि हे प्रिये ! तपस्तप्स्यामि—इतीयं मे साधीयसी सन्धेतिभावः । 'किं नाम ततं तप' इत्यादाविवात्रापि तपधातोरनुष्ठानार्थमात्रत्वे पर्यवसानं बोध्यम् ।

(७३) सुदामसङ्कल्पश्रवणेन सुप्रीता रुक्मिणी—धन्योसि सुदामन् ! श्रीकृष्णचन्द्रपरममित्रस्य ते साम्प्रतम्—(अत्रावसरे)—इदमेव—(तपश्चरणप्रतिज्ञानमेव)—साम्प्रतम्—युक्तमित्यर्थः ।

सुशीला—कुत्र गत्वा तपः कर्त्तव्यं प्राणनाथेन ?

सुदामा—[७४]कृपयाऽस्मत्पुरं प्राप्तं केदारेशं दयामयम् ॥
अभिषिञ्चन् शिवैर्मन्त्रैस्तपः कर्त्तास्मि दुष्करम् ॥ ६९ ॥

सुशीला—( सानन्दम् )
[७५]उत्तमः प्रिय ! विचार एष ते मित्रधर्ममनुतिष्ठतः परम् ॥
सिद्धिरस्तु युवयोः पवित्रयोर्मित्रयोः शिवदयादृशा द्रुतम् ॥७०॥
त्वत्पदाम्बुरुहयुग्मकिङ्करी नाथ ! ते सहचरी भवाम्यहम् ॥
राज्यपालनभरस्ततोऽर्प्यतां मन्त्रिणे मतिमतां वराय ते ॥ ७१ ॥
( इत्युक्त्वा प्रणमति )

जाम्बवती—[७६]सुशीले ! धन्यासि, श्रीसुदाम्नो धर्मपत्न्या उचितमेवैतत् ।

सुदामा—प्रिये ! [७७]श्रीकेदारेश्वरमन्दिरमुपेत्य यथात्वदीयेच्छं करिष्यामि । कोस्ति भोः ?

सेनानीः—( प्रविशन्नेव प्रणम्य ) एषोस्मि महाराजकिङ्करो भद्रसेनः । को निदेशो देवस्य ?

---

( ७४ ) 'किं मम प्राणनाथः सुदामापि श्रीकृष्णचन्द्रसमीपं गत्वा तपश्चिकीर्षत्यन्यत्र वे 'ति संशयाकुला सुशीला 'कुत्र गत्वा तपः कर्त्तव्यं प्राणनाथेन ?' इति पृच्छति--तदा सुदामा—'कृपया अस्मत्पुरं प्राप्तं दयामयं केदारेशं अभिषिञ्चन् दुष्करं तपःकर्त्तास्मि' इति स्वसङ्कल्पमुद्घाट्य तत्संशयमपाकृतवान् ।

( ७५ ) एतद् बुध्वा सुप्रसन्ना सुशीला सानन्दं स्वसङ्कल्पमपि पत्युरग्रे प्रणिगदति—हे प्रिय ! परमुत्कृष्टं मित्रधर्ममनुतिष्ठतस्ते एष उत्तमो विचारः । युवयोः पवित्रयोर्मित्रयोः शिवदयादृशा द्रुतं सिद्धिरस्तु. हे नाथ ! त्वत्पदाम्बुरुहयुग्मकिङ्करी अहं ते सहचरी भवामि । ततो राज्यपालनभरो मतिमतां वराय ते मन्त्रिणेऽर्प्यतामित्यभ्यर्थ्य प्रणमति ।

( ७६ ) सुदामपत्नीभावस्येदमनुरूपमेवाचरणमिति विभाव्य जाम्बवती सुशीलां धन्यां मन्यमाना प्रहृष्यति ।

( ७७ ) सुदामा 'श्रीकेदारेश्वरमन्दिरमुपेत्य त्वदिच्छानुकूलं करिष्यामीति' सुशीलामनुमान्य, 'कोऽस्ति भोः !' इत्याह्वयति तावत्सेनानीरागत्य निदेशमर्थयते, तं 'भद्रसेन ! सेनया सह त्वं राजधानीं गच्छ; महामन्त्री त्व

सुदामा—भद्रसेन ! सेनया सह त्वं राजधानीं गच्छ, महामन्त्री च श्रीकेदारनाथमन्दिरे मत्समीपं प्रेषणीयस्त्वया ।

भद्रसेनः—यथाज्ञा देवस्य ( इत्युक्त्वा निष्क्रान्तः )

सुदामा—प्रिये ! गतः सेनानीस्तदेहि श्रीकृष्णचन्द्रस्य निर्विघ्नतपःसिद्धिहेतवे श्रीकेदारेश्वरमुपास्महे । दर्शय मे श्रीकेदारेश्वरमन्दिरमार्गम् ।

सुशीला—प्राणनाथ ! इत इतो देवः ( इति वदन्ती सह सुदाम्ना निष्क्रान्ता )

( ततः प्रविशति बद्धपद्मासनः परमशिवपूजानिमग्नचेताः श्रीकृष्णः )

रुक्मिणी—[७८]( निपुणं निर्वर्ण्य ) अयि श्रीराधे !

अयमिह वटमूले पश्य चिन्तामणीनां
रचयति सखि माला विल्ववृक्षावृतेऽस्मिन् ॥
विरचयति च पूजां पार्थिवानां पतिर्नः
कलफलदलपुष्पैर्धूपदीपैश्च गन्धैः ॥ ७१ ॥

श्रीराधा—[७९]सत्यं देवि ! सत्यम् ।

निमील्य स्वं नेत्राम्बुरुहयुगलं मन्मथहरं
हरं ध्यानारूढं स्वहृदि कुरुते नः प्रियपतिः ॥
परं प्रेमासीमं जयति जगदीशेऽखिलगुरौ-
महेशे श्रीशम्भौ प्रणयजलधेर्नः प्रियपतेः ॥ ७२ ॥

---

श्रीकेदारनाथमन्दिरे मत्समीपं प्रेषणीयः' इत्याज्ञप्य, गते च तस्मिन्सेनान्यां, 'प्रिये ! गतः सेनानीस्तदेहि श्रीकृष्णचन्द्रस्य निर्विघ्नतपःसिद्धिहेतवे श्रीकेदारेश्वरमुपास्महे, दर्शय मे केदारेश्वरमन्दिरमार्गमि'ति वदन् सुशीलया च 'प्राणनाथ ! इत इतो देवः' इत्येवं प्रदर्शितमार्गो धर्मपत्न्या तया सह निष्क्रान्तः ।

( ७८ ) विल्वकानने वटमूले पद्मासनेनोपविष्टः परमशिवाराधनैकनिष्ठः श्रीकृष्णचन्द्रः पुरोदेशे दृश्यते तमवलोक्य रुक्मिणी राधां प्रति वक्ति । अयि राधे !–अयं नः पतिरिह वटमूले ( स्थित्वेति शेषः ) विल्ववृक्षावृतेऽस्मिन् प्रदेशे चिन्तामणीनां माला रचयति, तेषां च पार्थिवानां लिङ्गानां मनोरमैः फलैर्दलैः पुष्पैर्धूपैर्दीपैर्गन्धैश्च पूजां विरचयति तत् पश्य ( समग्रवाक्यार्थस्य कर्मत्वम् ) !

( ७९ ) राधा विलोक्य श्रीकृष्णावधानं वर्णयति, सत्यमित्यादिना । नः प्रियपतिः स्वं नेत्राम्बुरुहयुगलं निमील्य मन्मथहरं हरं स्वहृदि ध्यानारूढं

उभे—( निपुणं निर्वर्ण्य श्रीपार्वतीं प्रति )

मातः कोऽयमिन्द्रनीलमणिमय इव गण्डशैलोऽस्माकं प्राणनाथस्य पर्णकुटीसमीपे दृश्यते ?

श्रीपार्वती—[८०]प्रत्येकपत्रं शिवमन्त्रमुद्रिरन्
समर्पयत्येष महेश्वराय ॥
श्रीविल्वपत्राणि तु लक्षसङ्ख्या-
न्यम्भोरुहाणां च सहस्रमेकम् ॥ ७३ ॥
निर्माल्यभूतामलपत्रपुञ्जः
श्रीशैलगण्डप्रतिमो विभाति
अम्भोरुहाणां निचयस्तथाऽयं
विभाति तत्पार्श्वे इवाद्रिश्रृङ्गम् ॥ ७४ ॥

रुक्मिणी—अयम्—
[८१]अहो भीष्मे ग्रीष्मे तपति तपने तीव्रकिरणे
चतुर्णामग्नीनामतुलतरकीलाविलसताम् ॥
स्वयं मध्ये स्थित्वा रचयति तपो दुष्करतरं
प्रियः प्राणेशो नः परमशिवसन्तुष्ट्य इह ॥ ७५ ॥

श्रीराधा—एवं देवि ! एवम्

---

कुरुते । एतेन, नः प्रियपतेः प्रणयजलधेः जगदीशेऽखिलगुरौ महेशे श्रीशम्भौ परमसीमं प्रेम जयति=वर्त्तते ( ज्ञायत इति शेषः )

( ८० ) रुक्मिणीराधाभ्यां यदा—' अस्माकं प्राणनाथस्य पर्णकुटीसमीपे कोऽयमिन्द्रनीलमणिमय इव गण्डशैलो दृश्यते ' इति पृष्टं तदा श्रीपार्वती,—एष ( श्रीकृष्णः ) प्रत्येकपत्रं शिवमन्त्रमुद्रिरन्—लक्षसंख्यानि बिल्वपत्राणि महेश्वराय समर्पयति, तु—पुनरम्भोरुहाणां—पद्मानाञ्चैकं सहस्रं ( तदपि प्रत्येकं शिवमन्त्रमुद्गिरन्नेव समर्पयतीति शेषः ) तन्निर्माल्यभूतबिल्वपत्राणां पुञ्जोऽयं श्रीशैलगण्डसदृशो विभाति, तथाऽयञ्च अम्भोरुहाणां निचयस्तत्पार्श्वे अद्रिशृङ्गमिव विभातीत्यन्तेन श्लोकयुग्मेनोत्तरयति ।

( ८१ ) श्रीकृष्णस्य तपःप्रकारविशेषमेव रुक्मिणी पश्यन्ती वर्णयति—अयमिति—पुरोदृश्यमानं कृष्णं निर्दिश्य—अहो इत्याश्चर्यवद् ब्रूते । भयङ्करे ग्रीष्मर्तौ, तीव्रकिरणे तपने तपति सत्यपि, अतुलतरकीलाभिर्ज्वालाभिर्विलसतां चतुर्णामग्नीनां मध्ये स्वयं स्थित्वा नः प्रियः प्राणेशः परमशिवसन्तुष्ट्यै इह दुष्करतरं तपो रचयति । ( वह्नेर्द्वयोर्ज्वालकीला इत्यमरः ) ।

[८२]पश्य पश्य जलदागमेप्ययं वर्षतीह जलदे जलान्यहो ॥
इन्द्रनीलमणिशैलनिश्चलः श्रीशिवं भजति भक्तिभावतः ७६

श्रीरुक्मिणी—[८३]अये मातर्मातः ! परमशिवसंलग्नहृदये !
शरत्प्राप्तौ सर्वा दिशि दिशि लताः सत्फलनताः ॥
समन्ताद् दृश्यन्ते, किमिति फलिताऽद्यापि नहि नः
प्रियस्यैवं रम्या परमशिवभक्त्येकलतिका ॥ ७७ ॥

श्रीपार्वती—[८४]वत्से ! सद्य एव फलिष्यति, मा चिन्तां कुरु ।

सर्वाः—[८५]( निपुणं निर्वर्ण्य )
बिल्वीदलानि सकलानि समर्प्य भक्त्या
किञ्चिच्छ्रमार्त्त इव मीलितनेत्रपद्मः ॥
पद्मासनस्थ इह पश्यति पद्मनेत्रः
पद्मापतिर्यदुपतिः शिवमेव चित्ते ॥ ७८ ॥

---

( ८२ ) एवं यावद् ग्रीष्मकालिकीं तपोवस्थां विलोकयन्तिस्म तावदेव वर्षाकालिकीं तपोवस्थां पर्यायोपस्थितां विलोक्य राधाऽऽह—पश्य पश्येति कुतुकार्था विस्मयार्था वा वीप्सा; तत्कर्मभूतोवाक्यार्थः । अयं ( श्रीकृष्णः ) अहो जलदागमे जलदे जलानि वर्षति सति इह इन्द्रनीलमणिशैल इव निश्चलतया विभाव्यमानः श्रीशिवं भक्तिभावतो भजति; एतेन तपोऽङ्गं तितिक्षातिरेक उक्तः ।

( ८३ ) श्रीरुक्मिणी—शारदावस्थावर्णनव्याजेनोत्कण्ठां व्यनक्ति अये मातः !। परमशिवसंलग्नहृदये हे मातः ! शरत्प्राप्तौ दिशि दिशि लताः सत्फलनताः समन्ताद् दृश्यन्ते, एवं नः प्रियस्य रम्या परमशिवभक्त्येकलतिका किमिति नाद्यापि फलिता ? !

( ८४ ) श्रीपार्वती धैर्यमादधाति—वत्से सद्य एव फलिष्यति ( तव प्रियस्य शिवभक्तिलताऽपि ) मा चिन्तां कुरु ' इत्याश्वासनावाक्यम् ।

( ८५ ) सर्वाः श्रीकृष्णस्य ध्यानावस्थां विलोकयन्त्यो वर्णयन्ति । सकलानि ( सङ्कल्पितानि लक्षसंख्यानि ) बिल्वीदलानि भक्त्या समर्प्य किञ्चिच्छ्रमार्त्त इव मीलितनेत्रपद्मः पद्मासनस्थः पद्मनेत्रः पद्मापतिर्यदुपतिरिह शिवमेव चित्ते पश्यति—ध्यायति—इत्येवं मन्यमाना यावदाशंसन्ते तावदन्यद् वृत्तान्तं विलोक्य तदपि वर्णयन्ति—' हन्त इतः केसरी समागच्छति, इतश्च उन्मदः करीन्द्र आगच्छति, इतः पुना रोषोल्बणः उत्फणः फणी ( आगच्छतीति शेषः ) भयङ्करा ( अमी ) रात्रिचरा—राक्षसाः—प्रभुं प्रति आगच्छन्तीत्यर्थः । भय-

इतः समागच्छति हन्त केसरी
करीन्द्र आगच्छति चेत उन्मदः ॥
इतश्च रोषोल्बण उत्फणः फणी
प्रति प्रभुं रात्रिचरा भयङ्कराः ॥ ७९ ॥

**सर्वाः**—हा ! ! किमतः परं भविष्यति ?
जय जय जय मातः पाहि पाहि प्रभुं नः
शिव शिव शिव शम्भो ! पाहि नः प्राणनाथम् ॥
हर हर हर हा हा !! ध्यानमग्नं पतिं नः
स्मरहर हर भक्तस्ते त्वया रक्षणीयः ॥ ८० ॥

( इत्युक्त्वा मूर्च्छया पतन्ति )

**श्रीपार्वती**—वत्साः ! मा चिन्तां कुरुत, व्यतीतविषयदर्शनमेतत् । समाश्वसित समाश्वसित ।

**सर्वाः**—( संज्ञामुपलभ्य परितः पश्यन्ति )
[८६]अहो गजमुखः स्वयं प्रणयतः समाराध्यते
तपश्चरणसिद्धये भगवताऽनुवेलं तु यः ॥
स एव भगवान् स्वयं प्रतिदिशं प्रभुं रक्षति
प्रचण्डपरशुस्ततः सकलमेव लीनं भयम् ॥ ८१ ॥

---

विक्लवाः सर्वाः सहैवाहुः—'हा ! किमतः परं भविष्यति ?' श्रीपार्वतीं प्रति—जयेति शिवेति हरेति च त्रिस्त्रिरावृत्तिः संभ्रमातिशयं बोधयति—हे मातः ! नोऽस्माकं प्रभुं श्रीकृष्णं पाहि, हे शिव शम्भो ! नः प्राणनाथं पाहि, हे हर ! ध्यानमग्नं नः पतिं पाहि, हे स्मरहर ! ते भक्तस्त्वया रक्षणीयः एवं जल्पन्त्यो मूर्च्छया पतन्ति ।

( ८६ ) श्रीपार्वत्या—'वत्साः ! समाश्वसित, व्यतीतविषयदर्शनमेत' दिति प्रतिबोधिताः सर्वाः संज्ञामुपलभ्य परितो वलोक्य वदन्ति—अहो भगवता तपश्चरणस्य (निर्विघ्नं) सिद्धये अनुवेलं यो गजमुखो—गणपतिः—प्रणयतः समाराध्यते, स एव भगवान् प्रचण्डपरशुः सन् प्रतिदिशं प्रभुं रक्षति, ततः सकलमेव भयं लीनम् । तदेव विवृण्वन्ति—स भयङ्करः करी क्व गतः, स च महान् केसरी क्व गतः, स रुषोत्फणः फणी च क्व गतः, क्व च ते रात्रिचराः (गता इति शेषः) न विद्महे । अन्यच्च—भगवान् ईशपुत्रो—गणपतिः स्वयमपि कृतकार्यः पुनः स्वकीयमूर्त्तौ विशति । इतस्तु इह केवलं एक एव सुवर्णवर्णो बालमराल एषः प्रवि-

यतः—क्व गतः स भयङ्करः करी क्व गतो वा स च केसरी महान् ॥
क्व गतः सरुषोत्फणः फणी क्व च ते रात्रिचरा न विद्महे ॥८२॥
स्वयमपि भगवान् स्वकीयमूर्त्तौ विशति पुनः कृतकार्य ईशपुत्रः ॥
इत इह तु सुवर्णवर्ण एषः प्रविशति बालमराल एक एव ॥८३॥
शनैः शनैरेत्य स कृष्णचन्द्र–प्रभोः समीपं मृदुमञ्जुचारी ॥
आकृष्य चञ्च्वा चरणेन नालमम्भोजमेकं हरतिस्म हर्षात् ॥८४॥

श्रीकृष्णः—( समाधेः प्रबुध्य पुनः पूजां कुरुते )

सर्वाः—( सहर्षं पश्यन्ति )

श्रीकृष्णः—[८७]शशिशेखर ! ते नमो नमो मृड शम्भो भवते नमो नमः ॥
गिरिजाहृदयेश ते नमः शिव शूलिन् परमेश ते नमः ॥ ८५ ॥
( इति पठन् प्रतिमन्त्रं कमलं श्रीमहेश्वराय समर्पयति )

रुक्मिणी—[८८]प्रियस्वसारो मे ! पश्यत पश्यत, प्राणनाथो नः किमपि प्रणष्टमिव परिपश्यति, दुस्तरविचारवारिधिचारिचित्त इव लक्ष्यते । शृणुम, किमपि खेदाद्वदति ।

श्रीकृष्णः—[८९]तपःप्रारम्भान् मे क्वचिदपि न विघ्नः समभवत्
प्रसादाच् श्रीशम्भोरपि च गणनाथस्य कृपया ॥

---

शति । सः ( बालमरालः ) शनैः शनैः प्रभोः समीपमेत्य मृदुमञ्जुचरणशीलः चञ्च्वा नालमाकृष्य चरणेन एकमम्भोजं हरतिस्म हर्षात् । हरणानन्तरं हर्षपद प्रयोगेण हर्षस्य हरणनिमित्तत्वं सूचितम् । अत्रान्तरे श्रीकृष्णः समाधेः प्रबुध्य पुनः पूजां प्रवर्त्तयति, सर्वाश्च सहर्षं पश्यन्ति ।

( ८७ ) श्रीकृष्णः सम्बुद्ध्यन्तनाममन्त्रैः पद्मसहस्रार्पणपूजां करोति—'शशिशेखर ! ते नमोनमः, मृड ! शम्भो ! भव ! ते नमोनमः, हे गिरिजाहृदयेश ! ते नमः, शिव ! शूलिन् ! परमेश ! ते नमः' इत्यादिमन्त्रान् पठन् प्रतिमन्त्रं कमलं समर्पयति ।

( ८८ ) श्रीकृष्णो मृगयति किञ्चित्तद्विलोक्य रुक्मिणी वदति—प्रियस्वसारो मे ! पश्यत प्राणनाथो नः किञ्चित्प्रणष्टमिव परिपश्यति,—दुस्तरविचार एव वारिधिस्तत्र चारि चित्तं यस्य तादृश इव लक्ष्यते । शृणुम । किमपि खेदाद्वदति । सर्वाः शृण्वन्ति ।

( ८९ ) मे तपःप्रारम्भादारभ्य अद्यावधि क्वचिदपि विघ्नो नाभवत्

इदानीमेकं मे कमलममलं हा ! ! क नु गतं
कथं पूजा पूर्णा मम भवतु वा तेन हि विना ॥ ८६ ॥
असमाप्य महेशपूजनं न मयोत्थातुमितस्तु शक्यते ॥
असमर्प्य शिवाय पङ्कजं कथमेतत्परिपूर्णतां व्रजेत् ॥ ८७ ॥
कोयं चोरः श्रीशिवाराधनार्हं हर्तुं पद्मं सद्म मे तार्णमाप्तः ॥
आ हा ज्ञातं शम्बरो नष्टमायो रोषात्पद्मं हंसरूपो जहार ॥८८॥

इत उत्थानेऽनुत्थाने वा उभयथापि मे तपसि विघ्नं विधातुमेव तस्य प्रयासः। (किञ्चिदुच्चैः) शम्बर! शम्बर! निष्फलप्रयासोऽसि। श्रीमहेश्वरप्रसादान् निर्विघ्नैव मे तपःसिद्धिः

(स्वगतम्)

नयनकमलमेतदुज्ज्वलं मे सपदि निधाय महेशपादपद्मे ॥
परशिवपरिपूजनं तु पूर्णं हृदय विधाय कृतार्थतां भजस्व ॥८९॥

(इत्युक्त्वा स्वं नेत्रमुत्पाट्य शिवोपरि अर्पयति)

---

श्रीशम्भोः प्रसादाद्, गणनाथस्य कृपया च, तदेतद् द्वयं तु इदानीमप्यस्त्येव तथापि एकं मे अमलं कमलं क नु गतं (स्यात्) इति चिन्ताकुलः 'हा' इति खेदार्थाव्ययेनोद्वेगं प्रकटयति। हि—निश्चितं—तेन (एकेन कमलेन) विना मम पूजा कथं पूर्णा भवतु; सर्वथा पूर्णा न भवेदित्याशयः। अपिच—महेशपूजनमसमाप्य तु मया इत उत्थातुं न शक्यते; शिवाय पङ्कजं असमर्प्य च एतत् (पूजनं) पूर्णतां कथं व्रजेत्? इत्युभयथापि गतिरोधो भवति। परिगणितात्पद्मसमुदायादेकं पद्मं केनचिदुपात्तं स्यादिति मनस्युपोढां कल्पनां निर्णेतुं यावत्—'इदं मम तार्णं (तृणनिर्मितं) सद्म, शिवाराधनार्हं पद्मं हर्तुं कोऽयं चोर आप्तः—प्राप्तः स्यादिति ध्यानदृशा पश्यति—तावदेव उद्बुद्धप्रज्ञः—'आ' 'हा' इति निपातद्वयेन जिज्ञासितोपस्थितिं दर्शयन् 'ज्ञातम्' इत्यनेन निश्चयमाविरकरोत्। नष्टमायः शम्बरो रोषात् पद्मं हंसरूपो भूत्वा जहारेत्येतत् समाधिदृष्टोऽर्थः। यदि कमलमादातुमुत्तिष्ठामि यदि वा विनैव कमलं पूजां समापयामि उभयथापि तपोभङ्गशङ्कासम्भावना। तपोविघ्नं विधातुमेव तस्य (शम्बरस्य) यत्नः। (एवं सञ्चिन्त्य) 'व्यर्थप्रयासोऽसि शम्बर' इत्यादि किञ्चिदुच्चैरुच्चार्य 'महेश्वरप्रसादान्मे तपःसिद्धिर्निर्विघ्नैव भविष्यतीति मनोनिश्चयं प्रकटयन् (स्वगतम्) 'हे हृदय! एतद् उज्ज्वलं मे नयनकमलं सपदि महेश्वरपादपद्मे निधाय परशिवपरिपूजनं तु पूर्णं विधाय कृतार्थतां भजस्व' इति वदन्नेत्रं स्वमुत्पाट्य शिवस्योपरि अर्पयति।

रुक्मिणी—[९०]( चकितेव ) पश्यत पश्यत
उद्धृत्य नेत्रकमलं कमलाहृदीशः
श्रीशङ्कराङ्घ्रिकमलेऽर्पयतिस्म यावत् ॥
तावत्तु विल्वदलपुञ्जत आविरासीत्
श्रीमान्महेश्वर उमासहितो दयालुः ॥ ९० ॥

श्रीशिवः—[९१]अलमलमलमेवं साहसेनाऽमुना ते
नयमयनयन श्रीकृष्णचन्द्रास्मि तुष्टः ॥
वद वद वद किं तेऽभीप्सितं वत्स ! कुर्यां
भवतु भवतु नेत्राम्भोरुहं ते सुशोभम् ॥ ९१ ॥
त्वमसि किल ममात्माऽऽभ्यन्तरोऽनन्यभक्त-
स्त्वमिव च मम कृष्ण ! त्वं प्रियोसीह लोके ॥
कथय कथय कामः कस्तवापेक्षितस्तं
निजकरगतमेवाऽवेहि मे सम्प्रसादात् ॥ ९२ ॥

---

( ९० ) तद् दृष्ट्वा चकितेव रुक्मिणी 'पश्यत पश्यतेत्याद्याह— यावत् कमलाहृदीशः श्रीकृष्णः नेत्रकमलमुद्धृत्य श्रीशङ्करचरणकमलेऽर्पयतिस्म तावदेव बिल्वदलपुञ्जतः सकाशात् उमासहितः दयालुः श्रीमहेश आविरासीदिति सम्बन्धः। तदुक्तं शिवपुराणे ज्ञानसंहितायां ७१ अध्याये।

बिल्वखण्डात् स्वयं देवः सञ्जातोनुग्रहाय यत्।
कृष्णार्थितस्ततस्तत्र तस्थौ बिल्वेश्वराख्यया ॥
कमलानां सहस्रात्तु न्यूनमेकं यदाभवत्।
तद् ज्ञात्वा विष्णुना तत्र नेत्रमेकं स्वमुद्धृतम् ॥
तद् दृष्ट्वैव प्रसन्नोभूच् शङ्करः सर्वदुःखहा।
प्रसन्नोस्मि वरं ब्रूहि नादेयं विद्यते तव ॥ इत्यादि।

( ९१ ) श्रीशिवः प्रादुर्भूय श्रीकृष्णमुत्साहयन्वरेणोपच्छन्दयते—हे नयमयनयन श्रीकृष्णचन्द्र ! एवममुना ते साहसेन अलमलम्; साहसं न कार्यमित्यर्थः। अलं, वद, भवतु, कथयेत्यादिपदानां द्विस्त्रिरुपादानं शिवस्य भक्तानुग्रहपारवश्यं गमयति। हे वत्स ! ते किमभीप्सितं कुर्यां तद्वद। ते नेत्राम्भोरुहं तदवस्थमेव सुशोभं भवतु। किञ्च—हे कृष्ण ! त्वं किल मम आभ्यन्तर आत्मासि, अनन्यभक्तोऽसि=मत्स्वरूप एवासीति मामनन्यभावेन—आत्मभावेन—भजसीत्यर्थः। इह लोके च त्वमिव त्वमेव मम प्रियोसि ( त्वत्समस्त्व-

श्रीकृष्णः—[९२]( साश्चर्यानन्दं साष्टाङ्गपातं दण्डवत् प्रणम्य )
जय जय जय शम्भो! चन्द्रमौले! दयाब्धे!
जय जय जय मातः श्रीशिवे विश्ववन्द्ये! ॥
मयि निजपदभक्ते दृष्टयो वां दयार्द्राः
प्रतिदिनमनुवेलं सन्तु चास्मत्कुलेपि ॥ ९३ ॥
भक्तिरेव युवयोरभीप्सिता पादपद्मयुगलेऽनुवासरम् ॥
तां समर्पयतमिष्टसिद्धिदां विश्वविश्वपितरौ दयामयौ ॥९४॥

श्रीशङ्करः—[९३]एकैकस्यां दश दश हरे! पुत्ररत्नानि भावी-
न्यस्मद्दत्तान्यनुपमगुणान्युज्ज्वलानीह कीर्त्या॥

---

त्तोऽधिको वाऽन्यो मम प्रियो नास्तीत्यनन्वयः ). तत् कथय, 'कस्ते कामोऽपेक्षितः' 'तं च काममभिलाषं मत्प्रसादान्निजकरगतमेव अवेहि' सिद्धमेव जानीहीत्यर्थः।

( ९२ ) अधिगतशिवसाक्षात्कारः श्रीकृष्णः साश्चर्यानन्दं साष्टाङ्गं दण्डवत्प्रणम्य—जयजयेत्यादिना भक्तिमेव वृणोति—हे चन्द्रमौले दयाब्धे शम्भो! जय; हे विश्ववन्द्ये मातः श्रीशिवे! जय जय। निजपदभक्ते मयि अस्मत्कुले च वां—युवयोः—प्रतिदिनं—नित्यं—अनुवेलं—प्रतिक्षणं च दयार्द्राः दृष्टयः सन्तु। युवयोः—पार्वतीपरमेश्वरयोः पादपद्मयुगलेऽनुवासरं=नित्यं=भक्तिरेव—मे अभीप्सिता अतो हे दयामयौ सकलजगन्मातापितरौ! इष्टसिद्धिदां तामेव भक्तिं समर्पयतं, मह्यमितिशेषः।

( ९३ ) इदानीं श्रीशङ्करो भगवते वरानर्पयितुं स्वैरमुपक्रमते 'एकैकस्या' मित्यादिना। हे हरे! एकपत्नीव्रतानां—पतिव्रतानां—ते सर्वासां कुवलयदृशां ( निर्धारणे षष्ठी ) एकैकस्यां स्त्रियां अस्मद्दत्तानि—मया उमया च सम्भूय दत्तानि—अत एव कीर्त्या उज्ज्वलानि अनुपमगुणानि दश दश पुत्ररत्नानि भावीनि—भविष्यन्तीत्यर्थः। किञ्च हे कृष्ण! गुणगणवती एकैका पुत्री च ते ( कलत्रेषु ) भाविनी। एवञ्च लक्षोत्तरसन्ततिको भवेति वरप्रदानेनानुजग्राह महेश्वरः श्रीकृष्णचन्द्रम्। यद्यपि महाभारते आनुशासनिके पर्वणि १५ अध्याये। 'वृणे सुतानां च शतं शतानि' इति शिवाग्रे, उमाग्रे च 'शतं सुताना' मिति च कृष्णार्थना, तथापि तत्र शतपदस्य बाहुल्यार्थकत्वेन प्रतिपत्ति दश सुताः शिवदत्ता उमादत्ता चैकैका सुतेति टीकाकृत्कृतास्त्येव व्यवस्थेति सर्वमनवद्यम्।

एकैका ते गुणगणवती भाविनी कृष्ण ! पुत्री
सर्वासां ते कुवलयदृशामेकपत्नीव्रतानाम् ॥ ९५ ॥

रुक्मिणी—मातः! परमनुगृहीता वयं देवेन श्रीमहादेवेन श्रीभगवत्या च।

श्रीपार्वती—[९४]नैतच्च श्रीकृष्णचन्द्रस्य तपोनुरूपं फलम्।

श्रीपार्वतीपरमेश्वरौ—

[९५]श्रीकृष्णचन्द्र ! श्रीराधां निराबाधां करोम्यहम् ॥
मास्तु ते विरहस्तस्याः कदाचिदपि च क्वचित् ॥ ९६ ॥
यतस्तया समागत्य गोकुलाद् द्वारकापुरीम् ॥
तासां ते धर्मपत्नीनां साहाय्यमतुलं कृतम् ॥ ९७ ॥
ताश्चतस्रश्च तत्सख्यो वसन्तु तव सन्निधौ ॥
शापाः सर्वेऽपि सङ्क्षीणाः प्रसादान्नौ भवन्तु च ॥ ९८ ॥

किञ्च—अष्टौ वरान् प्रदास्यामि वरान् षोडश तेऽम्बिका ॥
तैर्वरैः प्रवरैर्युक्तो विष्णो विश्वजयी भव ॥ ९९ ॥

---

(९४) रुक्मिण्या—'मातः ! परं (अत्यर्थं) अनुगृहीता वयं श्रीमहादेवेन श्रीभगवत्या चे'ति मनस्तोषे प्रकटीकृते, श्रीपार्वती—'श्रीकृष्णचन्द्रस्य तपोनुरूपं नैतत् फलं' (नैतावदेव फलं श्रीकृष्णतपसः पर्याप्तं मन्तव्यं, किन्तु अतोऽप्यधिकं यदर्पयति तच्छ्रूयताम्। अनुग्रहपरायणा हि नानुग्राह्यसेवावैपुल्यमाकाङ्क्षन्ते न चाकाङ्क्षितमेव दत्त्वा विरमन्ति किन्तु स्वप्रसादतुलासाम्यं यावदनुग्राह्यं वरैरुपच्छन्दयन्त्येव ( पयोमात्रार्थिने उपमन्यवे क्षीरसागरं ददद्यमेव महादेवोऽत्र निदर्शनम् )

(९५) हे श्रीकृष्णचन्द्र ! ते प्रियां राधामप्यहं निराबाधां करोमि ( तदीयां बाधामपि निवारयामि ) कदाचिदपि क्वचिदपि च तस्या विरहस्ते माऽस्तु। यतस्तया गोकुलाद् द्वारकापुरीं समागत्य ते धर्मपत्नीनामतुलं साहाय्यं कृतम्। अपि च ताश्चतस्रो ललिताप्रभृतयस्तत्सख्यस्तव सन्निधावेव वसन्तु तासां सर्वेऽपि शापा आवयोः प्रसादात् संक्षीणा भवन्तु। अपिच हे विष्णो ! ते—तुभ्यम्—अष्टौ वरान् अहं प्रदास्यामि अम्बिका च षोडश वरान् ( प्रदास्यति ) तैरेतैः प्रवरैर्वरैर्युक्तो विश्वजयी भवेति, वरवर्षणं कृत्वा पुनरपि 'मा कांचिदपि न्यूनता परिशिष्यता'मिति मनसि कृत्य 'अस्तीतः परं किमपि ते प्रार्थनीय'मित्याग्रहाति—

अस्तीतः परं किमपि ते प्रार्थनीयम् ?

श्रीकृष्णः—अस्ति मे प्रार्थनीयम् । अस्तिचेदाज्ञा निवेदयामि ।

श्रीशङ्करः—यथेच्छं निवेद्यताम् ।

श्रीकृष्णः—[९६]श्रीविल्वेश्वर इत्यस्मिन् श्रीविल्ववन उत्तमे ॥
स्थितिं कुरु महादेव ! कृपां कृत्वा ममोपरि ॥ १०० ॥
यं प्रणम्य समभ्यर्च्य प्रेम्णाऽन्येपि च मानवाः ॥
सिद्धाभिलाषा भूयासुः सद्यो वयमिव प्रभो ! ॥१०१॥

इत्येषा मे प्रार्थना ।

श्रीशङ्करः—[९७]श्रीकृष्णचन्द्र ! तपसा परमेण भक्त्या
तुष्टोऽहमस्म्यतुलया तत एव तुभ्यम् ॥
नैवास्त्यदेयमिह किञ्चिदतोऽत्र नित्यं
स्थास्याम्यहं मुररिपो ! भवदुक्तनामा ॥ १०२ ॥

श्रीरुक्मिणी—[९८]सोऽयं शिवः सपदि षोडशहस्तदीर्घे
लिङ्गे स्वयं भुवि तिरोहित इन्दुमौलिः ॥
श्रीकृष्णचन्द्रवचनैकवशो वशीशो
गौर्या सहाऽखिलजगज्जनताशिवाय ॥ १०३ ॥

---

(९६) 'अस्ति मे प्रार्थनीयमाज्ञा चेन्निवेदयामी'त्युक्त्वा, 'यथेच्छं निवेद्यता'मिति शिवेन दत्तानुज्ञः श्रीकृष्णो वरातिभूमिमिव वृणोति—हे महादेव ! ममोपरि कृपां कृत्वा अस्मिन् उत्तमे विल्ववने विल्वेश्वर इति (प्रसिद्धाख्यः) स्थितिं कुरु; यं प्रेम्णा सम्यक्प्रकारेण (भक्तिमन्तः) अभ्यर्च्य हे-प्रभो ! अन्येऽपि मानवाः सद्यः सिद्धाभिलाषाः भूयासुः, इत्येषा मे प्रार्थनेति ।

(९७) हे श्रीकृष्णचन्द्र ! तव परमेण तपसा अतुलया च भक्त्याऽहं तुष्टोस्मि ततस्तुभ्यमदेयं नाम इह न किञ्चिदस्ति, अतः हे मुररिपो ! भवदुक्तं—विल्वेश्वर—इत्येतन्नाम यस्य सोहमत्र—विल्ववने स्थास्यामि (इत्येवं श्रीकृष्णप्रार्थितो वटुकाचले (वरडा पर्वते) विल्ववने विल्वेश्वर इति प्रसिद्धनामा विल्वगङ्गातटेऽद्यापि विराजते)

(९८) सोयं विल्वेश्वरः शिवः सपदि षोडशहस्तदीर्घे स्वयम्भूलिङ्गे स्वयं वशीशोपि—श्रीकृष्णचन्द्रवचनैकवशः इन्दुमौलिर्गौर्या सह (पश्यतामेव सर्वेषां) अखिलजगज्जनसमुदायस्य कल्याणाय तिरोहितोऽन्तर्हितोऽभूदित्यर्थः ।

सर्वाः—( साश्चर्यम् )[99]कृष्णः स्वयं सहजयोगबलेन सद्यो
रम्यं चकार शिवमन्दिरमत्र भक्त्या ॥
कैलासशैलशिखरोपममिन्दुशुभ्रं
नानामणिप्रवरकाञ्चनमण्डिताङ्गम् ॥ १०४ ॥
समर्च्य परमेश्वरं सपदि कल्पिते मन्दिरे
प्रणम्य च मुहुर्मुहुः प्रणतवत्सलं शङ्करम् ॥
तदीयविरहातुरश्चलदमन्दबाष्पाकुलो
वनाद् बहिरुपैत्यहो हृदयदैवतं नः प्रभुः ॥ १०५ ॥

( श्रीपार्वतीं प्रति )[100]प्रणतपारिजातमञ्जरि ! जगन्मातः ! कृतः परमोऽनुग्रहोऽस्मासु देव्या श्रीकृष्णचन्द्रस्य तपोवनवृत्तान्तप्रदर्शनेन परमिदानीं तस्य साक्षाद्दर्शनसुखानुभवभाजनतां कदा भजिष्याम इति भगवत्यैव वक्तव्यम् ।

श्रीपार्वती—[101]अयि श्रीरुक्मिणीप्रमुखाः ! श्रीकृष्णचन्द्रधर्मपत्न्यः !
श्रीराधाप्रमुखाः श्रीव्रजवल्लभ्यश्च !

---

( ९९ ) ततः श्रीकृष्णेन निजयोगबलनिर्मितं काञ्चनमण्यादिभी रुचिरं शिवमन्दिरं विलोक्य सर्वाः साश्चर्यं ब्रुवन्ति—कृष्णः सहजयोगबलेन रम्यं कैलासशैलशिखरोपमं चन्द्रशुभ्रं नानामणिप्रवरकाञ्चनमण्डिताङ्गं शिवमन्दिरं अत्र सद्य एव भक्त्या चकार । एवं कल्पिते—निजसिद्धसङ्कल्पेन निर्मिते—मन्दिरे सपदि परमेश्वरं सम्पूज्य प्रणतवत्सलं शङ्करं मुहुर्मुहुः प्रणम्य च तदीयविरहातुरः, अत एव प्रतिष्ठासाभिमुखतया चलदमन्दबाष्पैराकुलः, अहो नः हृदयदैवतं प्रभुर्वनाद् बहिरुपैति ।

( १०० ) दिव्यदृष्टिवितरणादारभ्यैतावत्पर्यन्तमखिलवृत्तान्तावलोकनसञ्जातहर्षाः सर्वा इदानीं श्रीकृष्णं साक्षाद् दिदृक्षवः पार्वतीमर्थयन्ते । प्रणतानां पारिजातमञ्जरि—कल्पलताग्ररूपे जगन्मातः ! श्रीकृष्णस्य तपोवनवृत्तान्तप्रदर्शनेन देव्या अस्मासु परमोऽनुग्रहः कृतः परन्तु इदानीं तस्य श्रीकृष्णस्य साक्षाद्दर्शनसुखानुभवभाजनतां कदा भजिष्याम इति भगवत्यैव ( कृपया ) वक्तव्यम् ।

( १०१ ) ततः श्रीपार्वती—'अयि श्रीरुक्मिणीप्रमुखाः श्रीकृष्णधर्मपत्न्यः श्रीराधामुख्या व्रजवल्लभ्यश्च' इति सम्बोध्य—'स्मरहरस्य करुणावलोकेन लब्धा अखिलपुरुषार्थकलानां कलापास्तैः पूर्णः अयं कृष्णचन्द्रः पुर

स्मरहरकरुणावलोकलब्धाऽखिलपुरुषार्थकलाकलापपूर्णः ॥
उदयमयमुपैति कृष्णचन्द्रः पुर इह पश्यत पश्यताशु वत्साः ॥१०६

अपिच—[१०२]सन्तापान् शमयन् तमश्च दमयन् सर्वान् समाह्लादयन्
स्वीयान् भक्तचकोरकांश्च रमयन् पोष्यांश्च सम्पोषयन् ॥
श्रीमत्साम्बसदाशिवातुलकृपादृग्लेशलब्धोदयः
प्रेम्णाऽऽयात्ययमत्र पश्यत मुदा श्रीकृष्णचन्द्रः स्वयम् ॥१०७

( सर्वाः साश्चर्यं समुत्थाय प्रणमन्ति श्रीजगदम्बामनन्तरं च श्रीकृष्णम् )

श्रीकृष्णः—[१०३]( परमेश्वरीं विलोक्य सभक्त्युद्रेकम् )

जय जय जगदम्ब देवि देवत्रयपरिपूजितपादपद्मयुग्मे ॥
नमति तव पदाम्बुजं त्वदीयो जननि जनोऽयमनन्यभक्त एकः ॥१०८॥

---

इह उदयमुपैति (तं) हे वत्साः पश्यत पश्यत इत्येवमभिदधाना श्रीकृष्णं पुरत आयान्तं दर्शयति ।

(१०२) अपिच—सन्तापान् शमयन् तमश्च दमयन् (ह्रासं नयन्) सर्वान् समाह्लादयन् स्वीयान्—भक्ता एव चकोरास्तान् रमयन् पोष्यवर्गांश्च सम्पोषयन्—(सर्वाणीमानि विशेषणानि चन्द्रसादृश्यपर्यवसायीनि) श्रीमतः साम्बसदाशिवस्य अतुलेन कृपादृग्लेशेन लब्ध उदयो येन तादृशः (श्रीकृष्णः चन्द्र इवेत्युपमितसमासः) अयमत्र श्रीकृष्णचन्द्रः स्वयं मुदा (हर्षयुक्तः) आयाति तं प्रेम्णा पश्यत । अत्र सन्तापशमनं तमोदमनम् सर्वाह्लादनं पोष्यपोषणं चेति चतुष्टयं समासोक्त्या श्रीकृष्णचन्द्रयोः समन्वेति । भक्तानां चकोरत्वेनाध्यवसानात्तद्द्वारकेण श्रीकृष्णे चन्द्रत्वारोपणेन परम्परितरूपकम् । श्रीकृष्णस्येव चन्द्रस्यापि शिवकृपादृग्लेशेनैव लब्धोदयत्वं यतो गुरुशापमोक्षः सोमेश्वरकृपयैव जात इति पुराणप्रसिद्धिरित्यप्रस्तुतप्रशंसा । श्रीकृष्णचन्द्र इति चन्द्रस्य कृष्णत्वं विरोधाभासमपि भासयति ।

(१०३) ततः सर्वाः साश्चर्यं समुत्थाय प्रथमं जगदम्बां प्रणमन्ति यतोऽस्या एवानुग्रहेण सर्वमेतत्सम्पन्नं, ततश्च श्रीकृष्णं प्रणमन्ति । तदा श्रीकृष्णः परमेश्वरीं दृष्ट्वा सभक्त्युद्रेकं 'हे जगदम्ब ! देवत्रयपरिपूजितपादपद्मयुग्मे देवि ! जय जय । हे जननि ! त्वदीयः एकः अनन्यभक्तो जनस्तव पदाम्बुजं नमति, ' इत्येवं गृणानः प्रणमति ।

श्रीपार्वती—[१०४]वत्स ! श्रीकृष्णचन्द्र ! त्वं कलाभिराभिरात्मनः ॥
अवियुक्तः सदानन्दाभ्युदयी विजयी भव ॥ १०९ ॥
( इत्युक्त्वा श्रीकृष्णचन्द्रमूर्ध्नि हस्तं दधाति )

श्रीकृष्णः—परमोऽयमनुग्रहः ( इत्युक्त्वा पुनः प्रणमति )

श्रीपार्वती—[१०५]राधे राधे त्वमेका जयसि हि परमा शक्तिरस्यादिविष्णो-
रेताः सर्वाः कलास्ते नहि विरहलवस्तेन ते युक्त इत्थम् ॥
मत्वा शापान्निवार्य प्रणतजनमनोऽभीष्टदः श्रीमहेशः
संयोगं वां विधत्ते परमसुखकरं यावदर्केन्दुतारम् ॥११०॥
तदेहि परमप्रेमास्पदं ते प्राणप्रियं परमेण प्रेम्णा प्रणम्य सह सखीभिः सर्वाभिः कृतार्था भव ॥

---

( १०४ ) वत्स श्रीकृष्णचन्द्र ! आभिरात्मनः कलाभिः सदा अवियुक्तः सर्वदा सम्पृक्त एव—सन् आनन्दाभ्युदयी विजयी च भवेत्याशिषा श्रीकृष्णं श्रीपार्वती संयुनक्ति । अत्र स्वकलाभिश्चन्द्रस्याभ्युदयित्वमिव आभिरितीदमा निर्दिष्टाभी रुक्मिणीप्रमुखाभी राधाप्रभृतिभिश्च सन्निकृष्टाभिः प्रियाभिरेव कलारूपाभिः पुत्रादिलाभलक्षणाभ्युदये नान्तरीयकहेतुभूताभिरभ्युदयी विजयी—जगति सर्वोत्कर्षेण वर्त्तनं विजयस्तद्वांश्च भवेत्यभिसन्धिः । रूपकालङ्कारः ।

( १०५ ) श्रीकृष्णचन्द्रमूर्ध्नि निहितहस्ता श्रीपार्वती यदाशिषं ददाति स्म तदा 'परमोऽयमनुग्रहः' इति विनयवाक्योच्चारपूर्वं श्रीकृष्णः पुनरपि प्रणमति स्म । अथ श्रीपार्वती राधामुद्दिश्य तामनुगृह्णत्याह । हे राधे, राधे ! ( वीप्सया सम्बोधनमनुग्राह्यतामूलकं ) हि यतस्त्वं एका अस्य आदिविष्णोः ( इदानीं कृष्णत्वेनावतीर्णस्यापि आदिभावे साक्षाद्विष्णुरूपस्य ) परमा शक्तिर्जयसि—सर्वोत्कर्षेण वर्त्तसे, एताश्चान्याः सर्वास्ते कलाः 'त्वं वैष्णवी शक्तिरनन्तवीर्ये' त्यादि मार्कण्डेयवाक्ये या वैष्णवी शक्तिरुदिता, तदग्रे 'विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु' इत्यत्र सर्वासां विद्यानां सर्वासां स्त्रीणां च तद्भेदत्वमुक्तं, तत्र स्त्रीणां 'समस्ता' इति विशेषणेन कार्त्स्न्ये-बोधिते पुनः 'सकला' इति विशेषणं न पुनरुक्ततादुष्टं किन्तु 'त्वयैकया-पूरितमम्बयैतदि' ति पराशक्तेरेव सार्वात्म्यबोधकवाक्येनैककण्ठत्वलाभाय 'सकला' इति पदे कलाशब्देन पुरुषा एव विवक्षिता अवगम्यन्ते, अन्यथा

श्रीराधा—यथाज्ञा जगदम्बायाः (इत्युक्त्वा सर्वाभिः सह प्रणम्य) दयामयाशये मातर्जगदम्बिके! अन्या अपि व्रजवल्लभ्यो भगवतीचरणार्णोजयुगलसेवासमासादितश्रीकृष्णचन्द्रप्राणप्रियपदा वयमिवानुगृहीतव्या एव देव्येति मे प्रार्थना।

श्रीपार्वती—[१०६]वत्से राधे! परोपकारप्रवणान्तःकरणायै ते किमिव न देयम्? कुरुक्षेत्रे श्रीकृष्णचन्द्रदर्शनसुखमुपगम्य ता अपि सर्वाः अविरहदुःखलेशलवाः सदासान्निध्यश्रीकृष्णचन्द्रसमागमामृतानन्दानुभववत्यो भविष्यन्ति।

श्रीराधा—महानयमनुग्रहः कृतः (इति वदन्ती प्रणमति)

श्रीपार्वती—[१०७]श्रीकृष्णचन्द्र यदुवंशमहामणे त्वं
सर्वाभिराभिरनिशं निजकामिनीभिः॥
सत्पुत्रपौत्रपरिवारसुखामृताब्धौ
मग्नः सदाभ्युदयवाञ्जयवांश्च भूयाः॥ १११॥

---

पुरुषाणामग्रहणे तस्याः सार्वात्म्यमुच्यमानं नोपपद्येत, यतोऽग्रे 'स्त्रियः पुरुषत्वं प्रपेदिरे, चक्षुष्मन्तोऽनुपश्यन्ति' इत्यादि वचनजातमत्रैव लब्धान्वयं परिपोषकत्वमादधातीति तत्त्वम्। अत आह एताः परिदृश्यमाना उच्चावचास्ते कला एव। 'तेन श्रीकृष्णेन तव विरहलवोपि न युक्तः' इत्थं मत्वा प्रणतजनमनोभीष्टदः श्रीमहेशः शापान् निवार्य युवयोः परमसुखकरं यावदर्केन्दुतारं संयोगं विधत्ते। तदेहि ते परप्रेमास्पदं प्राणप्रियं परमेण प्रेम्णा प्रणम्य सर्वाभिः सखीभिः सह—युक्ता—कृतार्था भव।

(१०६) अतःपरं राधा 'यथाज्ञा जगदम्बायाः' इत्युक्त्वा सर्वाभिः सह प्रणम्य 'दयामयाशये मातर्जगदम्बिके! अन्या अपि व्रजवल्लभ्यो भगवतीचरणकमलसेवासमासादितश्रीकृष्णचन्द्रप्राणप्रियपदा वयमिवानुगृहीतव्या देव्या' इत्येवं प्रार्थयतिस्म तदा श्रीपार्वती—'परोपकारप्रवणायै ते किमिव न देयम्—(सर्वं देयमेव)—अतश्च 'कुरुक्षेत्रे श्रीकृष्णचन्द्रदर्शनसुखमुपगम्य ता अपि सर्वा विरहदुःखल्वलेशरहिताः सदा श्रीकृष्णसान्निध्यसमागमामृतानन्दानुभववत्यो भविष्यन्ती'त्युक्त्वा तासामप्यनुग्रहं कृतवती।

(१०७) राधया 'महानयमनुग्रहः कृत' इत्युक्त्वा कृतप्रणामा पुनः श्रीकृष्णं—श्रीकृष्णचन्द्र! यदुवंशमणे! त्वं सर्वाभिराभिस्ते निजकामिनीभिः

( इत्याशिषमुक्त्वाऽऽकाशमार्गेण गच्छति ) ( सर्वेप्युत्थाय प्रणमन्ति )

श्रीकृष्णः—देव्यः ! अहं श्रीमातृचरणानां श्रीपितृचरणानां च दर्शनं विधायाऽनन्तरं भवतीभ्यः सर्वं तपोवनतपश्चरणवृत्तं निवेदयिष्यामि ।

सर्वाः—[१०८]यथेच्छा प्राणनाथस्य । श्रीजगदम्बाप्रसादाद्विदितमपि वृत्तं श्रीमन्मुखकमलाच्छ्रोतुं सोत्कण्ठा एव वयम् । इत इतो देव ! मातृभवनमार्गः ( इति वदन्तः सर्वे निष्क्रान्ताः )

इतिश्रीमत्केशवदैशिककृपाकल्पवल्लरी—पल्लवायमाने
महामहोपाध्यायश्रीप्रकविशङ्करलालकृतौ
श्रीकृष्णचन्द्राभ्युदय—नाम्नि नाटके
चतुर्थोऽङ्कः ॥

---

अनिशं नित्यं सत्पुत्रपौत्रादिपरिवारसुखमेवामृतं तदब्धौ मग्नः सन् सदा अभ्युदयवान् जयवांश्च भूयाः ' इत्याशिषा वर्द्धापयन्त्येव आकाशमार्गेण गच्छति श्रीपार्वती तदा सर्वेप्युत्थायतां प्रणमन्ति ।

(१०८) इदानीं ' देव्यः ! श्रीमातापित्रोर्दर्शनं विधाय अनन्तरं भवतीभ्यः सर्वं तपोवनतपश्चरणवृत्तान्तं निवेदयिष्यामी 'ति श्रीकृष्णः प्रतिशृणोति तदा सर्वाः—' यथेच्छा प्राणनाथस्य ' इति विनयवाचमुच्चार्य ' श्रीजगदम्बाप्रसादाद्विदितमपि वृत्तं श्रीमन्मुखकमलाच् छ्रोतुं सोत्कण्ठा एव वयमि ' त्याहुः । अत्र ' विदितमपि श्रोतुं सोत्कण्ठा ' इत्यत्र पुनः पदानुपादानान्न पौनरुक्त्याशङ्का अपितु जगदम्बाप्रसादाद्विदितं केवलमध्यक्षीकृतं तत्र कतिचिदंशास्तु अनुमिता एवासन्, इदानीं श्रीमन्मुखात्तु याथातथ्येन निःसंशयो वृत्तान्तोऽधिगतो भविष्यतीति उत्कण्ठाबीजम् । ततः परं ' इत इतो मातृभवनमार्ग ' इति वदन्तः सर्वे निष्क्रान्ताः । अत्र ' पुमान् स्त्रिये ' त्येकशेषेण सर्वे च सर्वाश्च सर्वे इत्येवं विग्रहेण सर्वमनवद्यम् । मातृभवनमार्ग एव प्रथमं निर्दिष्टो द्वन्द्वे मातुः प्राथम्यादभ्यर्हिततमत्वाच्च प्रथमं तद्वन्दनं विधातुम् ।

इति श्रीमत्केशवदैशिककृपाकल्पवल्लरीपल्लवायमानस्य श्रीकृष्णचन्द्राभ्युदय—नाम्नो नाटकस्य टीकायां ज्योत्स्नाभिधायां चतुर्थोऽङ्कः सम्पूर्णः ।

---

# अथ पञ्चमोऽङ्कः ।

( [1]ततः प्रविशतस्तपोनिष्ठौ दम्पती परितुष्टो महेश्वरश्च )

श्रीमहेश्वरः—वत्स सुदामन्! वत्से सुशीले! वरं वृणीष्व ।

( उभावपि रूढसमाधी स्थाणुनिर्विशेषं तिष्ठतः )

श्रीमहेश्वरः—( स्वगतम् ) अहो अनयोर्दृढः समाधिः!!

( प्रकाशम् ) [2]भवतु योगवलेन मद्रूपं तदन्तःकरणादाकर्षामि ( यावन्निभृताङ्गस्तथा करोति तावदेव )

दम्पती—( [3]साश्चर्यं नेत्रे समुन्मील्य साक्षात्सदाशिवं विलोक्य )

जय जय जय देव ब्रह्मविष्ण्वादिदेव—
प्रवररचितसेव श्रीमहादेव शम्भो! ॥
जय जय जय गौरीप्राणवन्धो परात्मन्!
सफलसकलकृत्यो दर्शनेनास्म्यहं ते ॥ १ ॥

---

नमः शिवाय शान्ताय शुद्धसत्त्वस्वरूपिणे ।
शिवङ्कराय भक्तानां शङ्कराय नमो नमः ॥ १ ॥

( १ ) चतुर्थाङ्के सुदाम्ना तत्पत्न्या सुशीलया सह श्रीकृष्णतपःसिद्धेरविलम्बेन फलसम्बन्धाय शिवोपरि तपश्चरणमारब्धं तदिदानीं फलप्राप्तिमासादयति, तदर्थमेवाङ्कारम्भे दम्पत्योस्तपोनिष्ठयोः परितुष्टस्य च महेश्वरस्य प्रवेशमुपनिबध्नाति कविः ।

( २ ) यदा 'सुदामन्' 'सुशीले' इति पार्थक्येन सम्बोध्यमानौ 'वरं वृणीष्वे' ति श्रीमहेश्वरेणोपच्छन्दितावपि समाधिस्थौ स्थाणुनिश्चलौ स्थितौ तदा स्वगते 'अहो' इत्यादिना तयोर्दृढसमाधित्वमाभाष्य तादृशसमाधिदशायांस्तावुभावपि व्युत्थापयितुमिच्छुरुपायमातिष्ठते । 'निभृताङ्गस्तथा करोति'= योगबलेन तदन्तःकरणात्स्वंरूपमाकर्षति ।

( ३ ) प्रत्यक्त्वेनानुभूयमानं शिवस्वरूपमपक्रान्तं यदा, तदा नेत्रे उन्मील्य पराग्विवोपस्थितं सदाशिवं विलोक्य साश्चर्यं स्तोतुमारभेते जयेति । ब्रह्मविष्ण्वादिदेवप्रवरै रचिता सेवा यस्येति त्रिपदबहुव्रीहिस्तत्सम्बोधनम् । अत एव हे महादेव शम्भो! जय । गिरिजायुतस्यैव ध्यानगोचरीकृतत्वेन तत्संस्कारानुवृत्त्येव गिरिजाप्राणवन्धो! इति कथनम् । क्षणातपूर्वमेव स्वात्मनि साक्षात्कृततया हे-

श्रीमहेश्वरः—[4]धन्योसि धन्योसि सदा सुदामन्
धन्यासि धन्यासि सदा सुशीले !
वरं वृणीष्वेष्टतमं प्रमोदा-
न्नाऽदेयमेवास्ति च मे युवाभ्याम् ॥ २ ॥

सुदामा—[5]कुरु कुरु कुरु सद्यः कृष्णचन्द्रं कृपाब्धे !
सफलसकलवाञ्छावृन्दमानन्दमग्नम् ॥
वरमिममहमीहे नापरं देवदेव !
प्रणतजनमनोभीष्टार्पणस्वस्तरो ! त्वत् ॥ ३ ॥

श्रीमहेश्वरः—[6]सुशीले ! त्वमपि मनोनुकूलं वृणु

सुशीला—[7]कमलादपि कोमलैर्निजाङ्गैः
कुरुते हन्त तपांसि कृष्णचन्द्रः ॥
स भवत्वचिराद् भवत्कृपातः
कृतकृत्याग्रसरो, वरोऽयमग्र्यः ॥ ४ ॥

---

परात्मन् ! इत्याह्वानम् । एतावतानुष्ठितस्य तपसः साफल्यं भवद्दर्शनेनैव संवृत्त मित्यन्वाह । सफलसकलकृत्य इत्यादि ।

(४) सुदामानं सुशीलाञ्च तत्पत्नीं ' धन्योसि ' इत्यादि वीप्सया-ऽऽश्वास्य वरवरणाय प्रेरयति शिवः ' प्रमोदादिष्टतमं वरं वृणीष्वे ' ति प्रोत्साहयति च ' युवाभ्यामदेयं नैव किञ्चिदस्ती ' त्यादिना ।

(५) पूर्वोक्तश्रीमहेश्वरवाक्ये धन्यत्वोक्तिर्यन्मूला तदेव सौहार्दमग्रे कुर्वन् सुदामा वरं वृणोति कुर्वित्यादिना । हे कृपाब्धे ! कृष्णचन्द्रं सद्यः सफलसकल-वाञ्छावृन्दं, तेनैव निमित्तेन आनन्दमग्नं कुरु-इति त्रिरुच्चारणं कृष्णचन्द्रविषयक-मुत्कण्ठातिरेकमावेदयति । परस्तात्तदेवाह—हे देवदेव ! प्रणतजनानां मनोभी-ष्टस्य अर्पणे स्वस्तरो—कल्पवृक्ष ! त्वत्सकाशादिममेव वरमीहे नापरं किञ्चिदपि मदर्थमित्याशयः । अस्मिन् पद्ये प्रार्थितवरार्पणयोग्यसामर्थ्यद्योतक—प्रणतेत्यादि सम्बुद्धयन्तविशेषणमहिम्ना परिकरालङ्कृतिः प्रतीयते ।

(६) सुशीलामपि पृथग वरवरणायोपच्छन्दयति त्वमपीत्यादिना ।

(७) अत्र स इतिपदाक्षिप्तं य इति; तथाच यः कृष्णचन्द्रः कमलादपि कोमलैरङ्गैरुपलक्षितो ' हन्त—' इति स्वमनःक्लेशावेदनं—तपांसि कुरुते पेलवैरङ्गैः कष्टं तपश्चरति स भवत्कृपातः कृतकृत्यानामग्रसरोऽचिराद् भवतु—अयमेव मे अग्र्यः—मुख्यः—वरः ।

श्रीमहेश्वरः—[८]धन्यौ धन्यौ जगति जगतीनाथनाथे स्वनाथे
श्रीकृष्णेन्दौ रचितपरमप्रेमबन्धौ युवां द्वौ ॥
श्रेयोमग्नौ भवतमधुनाऽभ्येति कारुण्यपूर्णो
द्रष्टुं स्वीयौ सपदि च युवां पश्यतं पश्यतं तम् ॥ ५ ॥

( [९]तत आकाशमार्गेण श्रीकृष्णः प्रविशति )

श्रीकृष्णः—[१०]हे महेश्वर महेश्वर शम्भो ! भक्तवत्सल कृपामृतसिन्धो !॥
त्वत्कृपार्पित सदाभ्युदयोऽयं कृष्ण आनमति ते पदपद्मम् ॥६

श्रीमहेश्वरः—[११]श्रीकृष्णचन्द्र ते भूयाद् भूयो भूयो भुवस्तले ॥
अमन्दानन्दसन्दोहा परा श्रेयःपरम्परा ॥ ७ ॥

---

( ८ ) उभयोरपि दम्पत्योर्वरवरणप्रकारमभिनन्दन् श्रीमहेश्वरः कृतार्थस्य श्रीकृष्णस्यागमनशंसनेन तावुभावप्यानन्दयन्प्रतिबोधयति । जगतीनाथानां-राज्ञामपि नाथे, स्वनाथे श्रीकृष्णचन्द्रे रचितः परः प्रेमबन्धो याभ्यामेतादृशौ युवां द्वौ जगति धन्यौ—द्विरुक्तिः संशयापोहाय । किञ्च युवामधुनाऽऽनन्दमग्नौ भवतं यतः कारुण्यपूर्णः स कृष्णचन्द्रः स्वीयौ—युवां—द्रष्टुं सपदि आगच्छति—वर्त्तमानसामीप्ये वर्त्तमानवद्वेति—आगमिष्यतीत्यर्थः । तं पश्यतं पश्यतं—अनेन 'पश्यत' मिति पदाम्रेडनेन युष्मदभ्यर्थनासिद्धिरियमचिरोपनता पुरोवस्थिताऽतस्तमेतं कृष्णं पश्यतमित्येवार्थो बोध्यते ।

( ९ ) चतुर्थाङ्के 'तपश्चर्यानन्तरं तव राजधानीमेष्यामीति' भगवता सुदाम्नोऽग्रे प्रतिश्रुतं, मध्ये च श्रीपार्वतीप्रभावात् तपश्चरणवृत्तान्तप्रदर्शनप्रसङ्गे साक्षाद्दर्शनमाकाङ्क्षमाणाभी राज्ञीभिः प्रार्थितायाः पार्वत्या इच्छयाः द्वारकामागतः श्रीकृष्णचन्द्रः स्वप्रतिज्ञापरिपालनाय पुनः सुदामपुरीमायाति—तदेतदुपन्यस्तं 'तत आकाशमार्गेण प्रविशति श्रीकृष्ण' इति ।

( १० ) प्रविष्टमात्र एव श्रीकृष्णः श्रीमहेश्वरं प्रणमति हे महेश्वरेत्यादिना । हे महेश्वर शम्भो भक्तवत्सल कृपामृतसिन्धो इति चतुर्भिरेतैः सम्बुद्ध्यन्तविशेषणैः क्रमेण सर्वेश्वरत्व—कल्याणगुणत्व—भक्तप्रियत्व—कृपापारवश्यानि संस्मार्य, त्वत्कृपार्पितसदाभ्युदयोऽयं कृष्णस्ते पादपद्ममानमतीति वचनं सदातनस्याभ्युदयस्य लाभेन कामावशेषतां प्रत्याचष्टे ।

सुदामा—[१२]जय जय जय कृष्णचन्द्र चन्द्र—
प्रभ ! वसुवंशमणे कृपासुधाब्धे ॥
नमति तव पदाम्बुजं सुदामा
तव पदपद्मपरा च तस्य पत्नी ॥ ८ ॥

श्रीकृष्णः—[१३]युवयोः परमा भक्तिः परेश्वरपदाम्बुजे ॥
वरीवर्ति शुभा या सा चरीकर्त्तु शिवानि वाम् ॥ ९ ॥

---

( ११ ) श्रीकृष्णेन प्रणतः श्रीमहेश्वर आशिषमाददाति—हे श्रीकृष्णचन्द्र ! ते भुवस्तले, अमन्दानन्दस्य सन्दोहो यत्र तादृशी, परा—अतिशयिता—श्रेयःपरम्परा भूयो भूयो भूयादिति । अत्र भूयो भूय इति वीप्सया, भुवस्तल इत्यधिकरणनिर्देशेन च "यदा यदा हि धर्मस्ये"त्यादि "सम्भवामि युगे-युग" इत्यन्तगीतोक्तप्रतिज्ञापरिपालनायासकृद् भूतलेऽवतरतोऽवतारकृत्यस्य निष्प्रत्यूहता भक्ताभीष्टसाधनं चानायासेन भवत्विति श्रेयःपरम्परापदव्यङ्ग्योऽर्थः प्रतीयते । यत्तु 'श्रेयश्च प्रेयश्च उभे नानार्थे पुरुषं सिनीत' इति कठवाक्ये पारलौकिकाभ्युदयस्य श्रेयःपदेन बोधनादत्रापि तथा कल्पने पुत्रप्राप्त्यादिलक्षणाभ्युदयस्य प्रेयःपदवाच्यार्थमर्यादाविष्टताऽऽयातीतिशङ्कनं, तदप्राप्तावसरमत्र; यतः प्रशस्यस्य श्रादेशसमनुशिष्टेयसुना कृत्स्नस्यापि पुत्रादेर्गर्भीकारेणाविरोधात् 'प्रजया पितृभ्य' इति श्रुत्या पुत्रलाभादेरपि श्रेयःपदार्थत्वस्यापि सुवचत्वात् ।

( १२ ) अस्मिन् पद्ये वसुवंशमणे ! इति सम्बोधने वसुपदं वसुदेववाचकं 'नामैकदेशे नामग्रहण'मिति महाभाष्योक्तन्यायेन 'सत्यभामा भामा' इत्याद्युदाहृतानुसारात् । तव पदाम्बुजं सुदामा नमति, तव पदपद्मपरा तत्पत्नी च नमतीति चकारेण नमनानुकर्षणम् । तवेति पृथक् पृथक् सम्बध्यमानं द्विरुपात्तमपि पदं न द्विरुक्ततामादर्शयतीति तत्त्वम् ।

( १३ ) श्रीकृष्णः प्रथमं क्रियाफलस्य कर्तृगामित्वं न्यायप्राप्तमभिदधान एव सपत्नीकं सुदामानमाशिषा संयोज्य तत्तपश्चरणस्य स्वाभ्युदयेऽपि सिद्धं प्रयोजकत्वमन्वाह युवयोरित्यादिना । परेश्वरपदाम्बुजे युवयोर्या परमा शुभा भक्तिर्वरीवर्त्ति सा वां शिवानि चरीकर्त्तु । अत्र भृशार्थयङ्लुगन्तवरीवर्त्तिपदेन भक्तेः प्रकारतायोगात्तत्साध्यफलेऽपि तद्विधत्वानुसन्धानाय चरीकर्त्तुपदप्रयोगः प्रयोगातिशयाख्यं गुणमभिव्यनक्ति । ततः एषः-पुरोवस्थितः-श्रीपरेश्वरो ययोर्युवयोर्भक्त्या तुष्टः करुणार्णवः सन्मामलं—परिपूर्णतया—कृतकृत्यं कृतवान् ।

यथोस्तु युवयोर्भक्त्या तुष्टः श्रीपरमेश्वरः ॥
एषोऽलं कृतकृत्यं मां कृतवान् करुणार्णवः ॥ १० ॥

श्रीशङ्करः—[१४]वत्स सुदामन् ! वत्से सुशीले ! श्रीकृष्णचन्द्रः प्राप्तसर्वार्थ-सिद्धिरतः परं भवद्भ्यामपि वाञ्छितं वरणीयम् ॥

सुदामा—[१५]भगवन् ! प्रणतजनपारिजातस्य श्रीकृष्णचन्द्रस्य निष्प्रति-मासीमतमकृपाकल्पवल्लरीविलासेन पूरिताशेषवाञ्छितस्य न मे किञ्चिद्वाञ्छितं जगत्त्रयेऽपि विनाऽत्रभवतोर्भवतोश्चरणकमल-भक्तिचिन्तामणिमिति किं याचे ?

श्रीकृष्णः—[१६]सखे सुदामन् ! निजजनचिन्तितचयपूर्णीकरणचिन्ता-मणेः श्रीचन्द्रचूडामणेरिदानीं कैवल्यमुक्तिलक्ष्मीं वृणु, सा खलु परमशिवस्यास्य श्रीमहेश्वरस्य कृपावलोकलहरीमन्तरेण दुर्लभा ।

---

अत्र 'तु' निपातात्कृष्णे स्वाभ्युदयकारणत्वं सुदामदम्पत्योर्भक्तावावध्नन् स्वानुष्ठित तपोभक्त्यादेश्च तत्रोपसर्जनीभावमावोधयन् मित्रधर्मं परां काष्ठामारोपयति भगवान् ।

( १४ ) श्रीकृष्णोक्तं क्रियाफलस्य कर्तृगामित्वं नैयत्यमापादयन् 'वत्स' ! 'वत्से' ! इति पार्थक्येनोभावपि सम्बोध्य—भवदाचरिततपःप्रभावाच् श्रीकृष्णस्य सर्वार्थसिद्धौ जातायामपि तादृशोग्रतपसो भवतु भवद्गोचरवाञ्छितार्था-धायकत्वमित्याह 'भवद्भ्यामपी' त्यादि । अत्र यथा चीर्णतपसः श्रीकृष्ण-स्येष्टसिद्धौ भवदनुष्ठिततपसः सहकारित्वमेवं भवदनुष्ठिततपसा भवद्वाञ्छित-सिद्धौ भवतु श्रीकृष्णाचरिततपसोऽपि सहकारित्वमिति परस्परहेतुभावोपबृंहितो वर्द्धतां वो मित्रधर्मप्रयुक्तो मिथोऽभ्युदय इति भावः ।

( १५ ) अत्र श्रीकृष्णे पारिजातत्वारोपेण तत्रापि कृपाकल्पवल्लरी-विलासस्य जडपारिजाततो व्यतिरेकबोधनप्रयुक्तं स्वाशेषवाञ्छितपूरणमाभाष्य पार्वतीपरमेश्वरयोश्चरणभक्तिचिन्तामणिं विना न किञ्चित् जगत्त्रयेऽपि मे वाञ्छितं वरणीयमस्तीति तमेव वृणे इत्यर्थः, अतः परं किं याचे ? किंशब्दो-यमाक्षेपार्थः—किमपि याचितव्यं नास्तीत्यर्थः । अयाचितोपनतायां सर्वार्थसिद्धौ याचना हि केवलं लाघवमेव व्यनक्तीति नास्ति याचनादर इति यावत् ।

( १६ ) एवं कृतकृत्यम्मन्यं सुदामानं कैवल्यमुक्तिभाजं सम्पादयितु-कामः श्रीकृष्णः 'कैवल्यमुक्तिलक्ष्मीं वृणु' इति प्रेरयति, तत्र हेतुमपि बोध-

यति 'सा खलु श्रीमहेश्वरस्य कृपावलोकमन्तरेण दुर्लभा' इत्यादिना । तदुक्तं सूतसंहितायां यज्ञवैभवखण्डे २५ अध्याये—

जनार्दनोऽपि भगवान् सर्वभूतहिते रतः ॥
सत्यवागनसूयुश्च सम्यग्ज्ञानमहोदधिः ॥ ३६ ॥
प्राह गम्भीरया वाचा सत्यसन्धं प्रति द्विजाः ॥ ३७ ॥

विष्णुरुवाच ।

सत्यसन्ध महाभक्त मम सत्यपरायण ! ॥
श्रौतस्मार्त्तैकनिष्ठानामुत्तमोत्तम सुव्रत ! ॥ ३८ ॥
नाहं संसारमग्नानां साक्षात्संसारमोचकः ॥
ब्रह्मादिदेवाश्चान्येपि नैव संसारमोचकाः ॥ ३९ ॥
शिव एव हि जन्तूनां महासंसारवर्त्तिनाम् ॥
संसारमोचकः साक्षात् सर्वज्ञः साम्ब ईश्वरः ॥ ४० ॥
मम ब्रह्मादिदेवानामपि तस्य प्रसादतः ॥
विज्ञानादित्रयं यस्मात् स एव भवमोचकः ॥ ४३ ॥
अहं ब्रह्मादिदेवाश्च प्रसादात् तस्य शूलिनः ॥
प्रणाड्यैव हि संसारमोचका नात्र संशयः ॥ ४४ ॥
नामतश्चार्थतश्चापि महादेवो महेश्वरः ॥
तदन्ये केवलं देवा महादेवा न तेऽनघ ! ॥ ५१ ॥
महादेवं विना यो मां भजते श्रद्धया सह ॥
नास्ति तस्य विनिर्मोक्षः संसाराज् जन्मकोटिभिः ॥ ५२ ॥
सर्वमुक्तं समासेन मम भक्तस्य तेऽनघ ! ॥
तस्मादनन्यमनसा शिवं साम्बं सदा भज ॥ ५३ ॥

तत्रैव ब्रह्मगीतायां चतुर्थेऽध्याये—

प्रसादादेव रुद्रस्य शिवायाश्च तथैव च ॥
परमाद्वैतविज्ञानं विष्णोः साक्षान्ममापि च ॥ ७३ ॥
एष एव हि जन्तूनां परं ज्ञानं ददाति च ॥
न विष्णुर्नाहमन्यश्च सत्यमेव मयोदितम् ॥ ७९ ॥
स्वतन्त्रः शिव एवायं स हि संसारमोचकः ॥
तं विना न मयोद्धर्त्तुं शक्यते संसृतेर्जनः ॥ ८१ ॥
विष्णुना च परेणापि महादेवं घृणानिधिम् ॥
विना जन्तुं समुद्धर्तुं शक्यते न हि सत्तमाः ॥ ८२ ॥

श्रीमहेश्वरः—[१७]सुदामन्! नास्त्यदेयं ते मम किञ्चिदपि, त्वया ॥
यतो हरिहराभेददृष्ट्या भक्तिः कृता शुभा ॥ ११ ॥

सुदामा—[१८]गङ्गारोधसि निर्मले तरुतले स्वच्छे शिलामण्डले
त्वां गाङ्गैः सलिलैः समर्चितवतः संयान्तु मे वासराः ॥
शम्भो जन्मनि जन्मनि स्थिरतरा भक्तिश्च ते स्ताच्छुभा
सा मे मुक्तिरनुत्तमाऽञ्जलिरयं कैवल्यमुक्त्यै कृतः ॥१२॥

श्रीकृष्णः—[१९]सखे सुदामन्! मा चिन्तां कार्षीः। कैवल्यमुक्तौ श्रीसाम्बशिवपूजनानन्दविरहान्न ते प्रीतिः, परं मुक्तेनापि भगवद्भजनानन्दोऽनुभवितुं शक्यत एव। शृणु तावद्—

---

(१७) श्रीमहेश्वरः 'हे सुदामन्! मम किञ्चिदपि ते—तुभ्यम्—अदेयं नास्ति' इति यदाह, तत्र हेतुमपि 'यतस्त्वया हरिहराभेददृष्ट्या भक्तिः कृतेति' निर्दिष्टवान्; तेन च देवेषु भेदभावो हि सर्वानर्थमूलमिति सूचितम्। अभेदभावपूर्वकं भजनेन देवताप्रसत्तिरतिशयवती भवतीति तदेव देववचसा 'किञ्चिदपि ते नास्त्यदेय' मित्यनेन बोधितम्।

यदाह व्यासः—

कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः ॥
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥

किमु वक्तव्यं देवतासार्वभौमस्य महादेवस्य दित्सोर्वरम्।

(१८) भक्तावेव परमपुरुषार्थबुद्धिमुत्तरङ्गयति सुदामा। हे शम्भो! गङ्गारोधसि निर्मले तरुतले स्वच्छे शिलामण्डपे गाङ्गैः सलिलैस्त्वामर्चितवतो मम वासराः संयान्तु, किञ्च मे जन्मनि जन्मनि—प्रतिजन्म—ते भक्तिः स्थिरतरा स्तादस्तु, सैव मे अनुत्तमा मुक्तिः, कैवल्यमुक्त्यै अयमञ्जलिः। यस्यां शिवभजनाननुष्ठानं तस्यै कैवल्यमुक्त्यै वयं न स्पृहयाम इति भावः।

(१९) कैवल्यमुक्तावपि न भजनानन्दाभाव इति बोधयति कृष्णः। यद्यपि शिवपूजनानन्दविरहात् कैवल्यमुक्त्यै निराकाङ्क्षोसि परं मुक्तेनापि शिवभजनानन्दोऽनुभवितुं शक्य इत्याह। यथाऽहमिह लोके धृतलीलाविग्रहः सन् यथेच्छं परशिवमभिषिञ्चामि एवं त्वमपि धृतलीलाविग्रहः सन् स्मरहरपरिचर्यानन्दं नित्यं प्राप्स्यसि। अतश्च भक्तिप्रियस्य ते कैवल्यमुक्तावपि भजनानन्द लाभनैयत्येन अनायासोपनतपरमपुरुषार्थपरित्यागोऽनुचित इत्यर्थः।

अहमिह धृतलीलाविग्रहः सन्यथेच्छं
परशिवमभिषिश्चाम्येव मुक्तोऽपि युक्तः ॥
त्वमपि च धृतलीलाविग्रहः सँस्तथैव
स्मरहरपरिचर्यानन्दमाप्तासि नित्यम् ॥ १३ ॥

सुदामा—यद्येवं तर्हि—
[२०]को नु मुक्तिपतेर्मुक्तिं न काङ्क्षेन्मुक्तिदात् स्वयम् ॥
धन्योऽस्मि कृतकृत्योऽस्मि मुक्तिं यच्छति यच्छिवः ॥ १४ ॥

श्रीकृष्णः—[२१]भगवन् कृपयेदानीं कुरुष्वोपदेशं भगवतोऽनन्यभक्तायाऽस्मै येन कैवल्यमुक्तिसुखमनुभूयादेषः ।

श्रीमहेश्वरः—[२२]श्रीकृष्णचन्द्र !
त्वमेवाऽहमहं च त्वमिति वेत्स्येव निश्चयात् ।
त्वमेव तत्त्वं तत्तत् त्वन्मित्रायाऽस्मै समर्प्पय ॥ १५ ॥

श्रीकृष्णः—[२३](साञ्जलिबन्धम्) यथाज्ञा जगद्गुरोः (इत्युक्त्वा) शृणु सखे सुदामन् ! श्रीजगद्गुरोराज्ञयाऽहमेव तुभ्यं तत्त्वमुपदिशामि ।

---

(२०) एवं श्रीकृष्णेन प्रतिबोधितः सुदामा—स्वयं मुक्तिदान्मुक्तिपतेः को नु मुक्तिं न काङ्क्षेदपितु सर्व एव; अहमिदानीं धन्योस्मि कृतकृत्यश्चास्मि यत्कारणं शिवः स्वयं मुक्तिं यच्छति—इत्याह ।

(२१) श्रीकृष्णः सुदाम्ने कैवल्यमुक्तिदानाय शिवमर्थयते 'भगवन्नित्यादिना । भगवतो भवतोऽनन्यभक्तायेति कथनेन अनन्यभावेन—आत्मभावेन—भक्ताय—भजमानाय—अस्मै उपदेशं कुरुष्वेत्यधिकारित्वमुक्तम् ।

(२२) इदानीं महेश्वरः श्रीकृष्णोक्तं सत्यापयन् कृष्णमाज्ञापयति श्रीकृष्णचन्द्रेति । त्वमेवाहमित्यनेन त्वयि सति पार्थक्येन मन्नामगणनमनावश्यकमेवेति ध्वनिः । अहं च त्वमित्यत्र चकार एवार्थे, तेन अहमेव त्वमित्युभयोरेकरूपत्वमनूद्य तत्तस्मात् त्वमेव तत् तत्त्वं अस्मै समर्प्पय—उपदिश । अत्र हेतुगर्भं विशेषणं त्वन्मित्रायेति । मित्रे श्रद्धादीनामयत्नसिद्धत्वादुपदेशस्य सद्यः फलाधायकत्वं सूचयति । आवयोश्चाभेदं निश्चयात् त्वं वेत्स्येव अतस्त्वमेव तत्त्वमुपदिशेत्याह महेश्वरः ।

(२३) श्रीकृष्णः शिवाज्ञामूरीकुर्वन् सुदामानं तत्त्वोपदेशायाभिमुखी करोति शृण्वित्यादिना । अत्रापि 'जगद्गुरोराज्ञये'त्युक्तिः कैवल्यमुक्तिदाने स्वस्य शिवाज्ञासापेक्षतामवबोधयति ।

सुदामा—( साञ्जलिबन्धम् ) कृपासिन्धो ! श्रोतुमवहितोऽस्मि ।
श्रीकृष्णः—[२४]वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तत एव मुक्तः ।।
तत्त्वं विदित्वाऽथ तमेव विद्वन् ! भवाशु मुक्तो न परोस्ति पन्थाः १६
सुदामा—[२५]भगवन् ! जगद्विदितः सुविदित एव देवदेवोऽयं सर्वेषां, कथमविदित्वा तद्भक्तिं कर्तुं प्रभवेत् ?

---

( २४ ) यदा सुदामा 'कृपासिन्धो !' इति सम्बोध्य 'अवहितोस्मी'ति श्रोतुमुत्सुकतामादर्श्य उपदेशार्हमाभिमुख्यमुपेतस्तदा श्रीकृष्णस्तत्त्वोपदेशमुपक्रमते 'वेदाहमेत'मित्यादिना श्रुत्यर्थानुवादिना पद्येन । अहमेतं महान्तमादित्यवर्णं पुरुषं वेद ज्ञातवान्—तत एव, तावता ज्ञानमात्रेणैवाहं मुक्तः; एवमेव हे विद्वन् त्वमपि तमेव ( पुरुषं ) विदित्वा अथ मुक्तो भवेति योजना । अत्राऽयमभिसन्धिः । अद्भ्यः षड्च उत्तरनारायण ' इत्यनुक्रमसूत्राद् 'वेदाहमेत'मिति मन्त्रो नारायणदृष्टः । तथाच—एतं महान्तमादित्यवर्णं तमसः परस्तात् ( स्थितं ) पुरुषं परमशिवाख्यमहं वेद—इत्येवमात्मनो गौरवमाख्यापयन् नारायणः तमेव विदित्वा मृत्युमत्येति ( मोक्षमधिगच्छति ) अयनाय—मोक्षप्राप्तयेऽन्यः पन्था न विद्यते—इत्येवं सावधारणं ब्रूतेस्म । स एवार्थः सङ्गृह्यात्र पद्येनोपदिष्टः श्रीकृष्णेन सुदाम्न इति । अमुमेवार्थं प्रकटीकृतवान् माहेश्वराग्रणीर्हरदत्ताचार्यश्चतुर्वेदतात्पर्यदीपिकायाम्—

'वेदाहमेत'मिति यन्महिमावबोधं नारायणः स भगवानवदत्स्ववाचा ।
स्वस्यातिगौरवकरं तमशेषमूलं साम्बं शिवं प्रणमत प्रणताशुतोषम् ॥

पुरुषपदाभिलप्यत्वं मुख्यं परशिवस्यैवोक्तं सूतसंहितायां ब्रह्मगीताया एकादशेऽध्याये २७ श्लोके—

पुरुषो नाम सम्पूर्णः शिवः सत्यादिलक्षणः ॥
साम्बमूर्त्तिधरो नान्यो रुद्रो विष्णुरजोऽपि वा ॥ २७ ॥

'ज्ञानादेव तु कैवल्यं' 'ज्ञानेन मुक्तिरित्येतत्सर्वदर्शनिनां मतं' 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' 'ज्ञानी त्वात्मैव मे मतः' 'ज्ञानवान् मां प्रपद्यते' 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं' 'ज्ञात्वा देवं सर्वपाशापहानि'रित्यादि परश्शतैः श्रुतिस्मृत्यादिवचनैर्ज्ञानस्यैव कैवल्यमुक्तिहेतुतावधारणध्रौव्यात् ।

( २५ ) श्रीकृष्णवचनाकूतमनाकलयन्नापाततः प्रतीतमर्थमाभणति

श्रीकृष्णः—[२६]सखे ! एतत्परोक्षज्ञानं भक्त्यौपयिकमपरविद्याख्यम्—
सच्चिदानन्दरूपो यो जगन्मूलं महेश्वरः ॥
सोऽहमस्मीति यद् ज्ञानमपरोक्षं तदुच्यते ॥ १७ ॥

सुदामा—[२७]सर्वज्ञः सर्वशक्तिः श्रीमहेशः क महार्णवः ॥
क चाल्पज्ञोऽल्पशक्तिश्च वराकोऽम्बुकणोऽप्यहम् ॥ १८ ॥
तादृशापरोक्षज्ञानलभ्यायै नमः पुनः कैवल्यमुक्त्यै, भक्तिरेव मे रोचते ।

---

सुदामा यं ज्ञातुमत्रभवानुपदिशसि स तु देवदेवः सुविदित एव सर्वेषां, न तमविदित्वा तद्भक्तिः कर्त्तुं शक्यते । तमजानानाः कथं तद्भक्तिं कर्त्तुं प्रभवेमेति यावत् ।

( २६ ) भक्तिसाधनभूतं हि परोक्षज्ञानं तदपरविद्याख्यं; यदन्तरेण ' कस्य भक्ति ' रित्याकाङ्क्षा नोपशाम्यति, इदं तु भक्तेरपि फलभूतं ' सच्चिदानन्दरूपो जगन्मूलं यो महेश्वरः सोऽहमस्मी ' त्यपरोक्षानुभवरूपं ज्ञानं मोक्षहेतुस्तदुच्यते । तस्यैतस्य ज्ञानस्य भक्तिः साधनतामञ्चति आशयविशुद्ध्यर्थत्वात्तस्याः । तथा चोक्तम् ।

कथं विना रोमहर्षं द्रवता चेतसा विना ॥
विनाऽऽनन्दाश्रुकलया शुद्ध्येद् भक्त्या विनाऽऽशयः ॥

अत्र भक्त्या विना कथमाशयः शुद्ध्येद्, भक्तिश्च कथं द्रवता चेतसा विना स्यात्, द्रवच्चित्तं च कथं रोमहर्षमानन्दाश्रु च विना ज्ञायेतेत्यर्थः । अश्रुपुलकयोरभिधानं स्तम्भस्वेदादीनामितरेषां सात्त्विकभावानामुपलक्षणम् ।

( २७ ) चिरकालासेवितभक्तिसंस्काराभिनिविष्टः सुदामाऽभेदभावप्रतिद्वन्द्विनं भेदभावनासंस्कारमापामरप्रतीतमनूद्य भक्तिमेव स्वीकृतामनाकुलयन् कैवल्यमुक्त्यै उदास्ते । सर्वज्ञः सर्वशक्तिश्च महार्णवोपमो महेश्वरः क, क चाऽहमम्बुकणोपमोऽल्पज्ञोऽल्पशक्तिश्च वराक; नैतयोरभेदभावना सुलभा अतस्तादृशापरोक्षज्ञानलभ्यां कैवल्यमुक्तिं न काङ्क्षे इति ' नमः कैवल्यमुक्त्यै ' इत्यनादरो व्यञ्जितः । ' भक्तिरेव मे रोचते ' इत्यनेन च भक्तावादरभरप्रदर्शनेन भक्तिप्रियत्वमात्मनः ख्यापितम् । भक्तिश्च चित्तस्य विषयाकारतापासनपूर्वकं भगवदाकारतापादनमिति केचित्, तन्मन्दम् । भगवदाकारता हि चित्तस्य स्वाभाविकीति तस्य विषयाकारतापासन एव

श्रीकृष्णः—[२८]( किञ्चित्प्रहस्य श्रीशङ्करं प्रति ) जगद्गुरो ! कैवल्यमुक्तिसत्रप्रदातुः श्रीब्रह्मविद्यापरमगुरोः श्रीमतो मुखकमलाद्गलन्तीमुपदेशामृतलहरीमन्तरा दुर्लभ एव कैवल्यमुक्तिसुखानुभवस्ततो भगवतैव कृपया तत्त्वोपदेशोऽस्मै विधेय इति मेऽभ्यर्थना ।

---

यत्नपर्यवसानं, चित्तकारणीभूतभूतसूक्ष्मकारणानिर्वचनीयविचित्रानेकशक्तिमन्मायाधिष्ठानस्य नित्यस्य विभोः सर्वान्तर्यामिणः सर्वत्रानुगतत्वात् । यथा घटस्य जलादिपूर्णता कारणसाध्या आकाशपूर्णता तु स्वतः । तदुक्तं वार्त्तिकाचार्यैः—

वियद्वस्तु स्वभावानुरोधादेव न कारकात् ॥
वियत्सम्पूर्णतोत्पत्तौ कुम्भस्यैवं दशा धियाम् ॥
घटदुःखादिरूपत्वं धियो धर्मादिहेतुतः ॥
स्वतः सिद्धात्मसम्बोधव्याप्तिर्वस्त्वनुरोधतः ॥ इति ॥

चित्तस्य भगवदाकारत्वे स्वाभाविके हेत्वनपेक्षे शास्त्रस्य क्वोपयोग इति चेदन्याकारताविरोधिभगवदाकारतासम्पादने इति गृहाण । एवं च तादृशभक्तिविशुद्धचेतस आत्मलाभः सुगमो भवति । तथा चोक्तं भगवद्गीतासु'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः' ॥ अत्र भक्त्यौपयिकस्य ज्ञानस्य प्रथममपेक्षितत्वेपि भक्तिकरणकस्य तस्य, 'अभिजानाति' इत्यभिपदोपसृष्टेन यावान् ( सर्वव्यापकः ) यश्च ( सच्चिदानन्दलक्षणः ) तत्त्वतोऽस्मि तादृशं माम्= ( अस्मत्प्रत्ययगोचरं ) प्रत्यगात्मत्वेनानुभवतीत्यर्थबोधनेन विशेषः स्पष्टीकृतः । तदेवोक्तं श्रीमद्भागवते—

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद् गुणकर्मजानि ॥
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं साक्षाद्यथामलदृशोः सवितृप्रकाशः ॥

( २८ ) निरुक्तप्रकारेण भक्तेरपि ज्ञानोत्पादकत्वेन प्रशस्तत्वेऽपि कालविलम्बभावितया तदपेक्षया उपस्थितशिवप्रसादसुलभायाः कैवल्यमुक्तेरुपेक्षणं हि प्रज्ञापराध एवेति किञ्चित् प्रहस्य श्रीकृष्णः स्वयमनुष्ठितस्याप्युपायस्य यथेष्टफलाधायकत्वे सन्दिहानः श्रीशङ्करमेव विज्ञापयति । हे जगद्गुरो ! कैवल्यमुक्तिसत्रप्रदातुः श्रीब्रह्मविद्यापरमगुरोः श्रीमतो मुखकमलाद् गलन्तीमुपदेशामृतलहरीं विना कैवल्यमुक्तिसुखानुभवो दुर्लभ इति भगवतैव कृपयाऽस्मै तत्त्वोपदेशो विधेय इति ।

श्रीशङ्करः–[२९]वत्स सुदामन् !

श्रीकृष्णोऽहमहं कृष्णो न भेद आवयोर्यथा ॥
तथा सुदामँस्त्वं चाहमहं च त्वमसंशयम् ॥ १९ ॥

( एतद्वाक्यश्रवणोत्तरक्षण एव )

सुदामा–[३०]( श्रीकृष्णं प्रति साश्चर्यम् ) कोऽयं दृष्टिविपर्यासः ?

जगदिदमखिलं शिवः शिवोहं शिवमयमेव समस्तमाविभाति ॥
नहि किल तिलमात्रमत्र मित्रप्रवर ! किमप्यशिवस्वरूपमस्ति॥२०॥

श्रीकृष्णः—[३१]एवमेव सखे ! एवमेव । लीलाविग्रहगृहीतभिन्नभावस्य ते श्रीमहेश्वरोपदेशवचनश्रवणमात्रेण पुनरुद्भिन्न एवाभेदभावः ।

---

( २९ ) एवं श्रीकृष्णेनाभ्यर्थितः श्रीशङ्करो 'वत्स सुदामन्' इत्येव मनुजिघृक्षामाविष्कुर्वन् औपनिषदात्मतत्त्वं सङ्क्षिप्योपदिशति । यथा श्रीकृष्णोऽहमेव अहं च श्रीकृष्ण, एव नावयोर्भेदः; तथा हे सुदामन् त्वमेवाहमहमेव च त्वमित्यसंशयमवेहि । तत्त्वमस्यादि-सदृशमेतदुपदेशवाक्यं श्रुत्वैव सुप्तप्रतिबुद्धन्यायेन ज्ञाततत्त्वः सुदामाऽन्य एव संवृत्तः ।

( ३० ) यथा वा 'अवचनेनैव प्रोवाच' इत्यत्र वचनानपेक्ष एवात्मबोधः एवमत्रापि श्रीमहेश्वरेण जगद्गुरुणा कृपाकटाक्षसंवलितमल्पाक्षरमप्युपदिशता वेधदीक्षयैवानुगृहीतः प्रतिबन्धकनिवर्त्तकशक्तिपातेन साधनान्तरनिरपेक्षेण कृतः सुदामा कृतकृत्यः सम्यङ् निवृत्ताविद्यावरणः शिवरूपतामात्मनोन्वभूत् । तमेवानुभवं साश्चर्यः श्रीकृष्णं श्रावयति। कोयं दृष्टिविपर्यास इत्यादिना । इदमखिलं जगत् शिव एव–शिवाधिष्ठानविवर्त्तत्वेन प्रतीतं न शिवादन्यद्–स एव शिवोऽहम्, समस्तमप्येतद् शिवमयमेव आविभाति । अत्र 'विरहीव विभो प्रियामयं परिपश्यामि भवन्मयं जग'दित्यत्रेव मयटस्तद्रूपत्वमर्थः । तदेव भङ्ग्यन्तरेण प्रस्तौति–हे मित्रप्रवर !–क्विबन्तान्मिनो हिंसार्थान्मित्पदसिद्धिः । तथा च हिंसाशब्दार्थविशिष्टाजननमरणादिलक्षणक्लेशात् त्राणकर्तृप्रवर ! अत्र तिलमात्रमपि किल किमपि अशिवस्वरूपं–शिवस्वरूपातिरिक्तं नास्ति–नोपलक्ष्यते ।

( ३१ ) सुदामानुभवमुपोद्बलयति श्रीकृष्णः । एवमेवेत्यादिना लीलाविग्रहग्रहणप्रयुक्तभेदभावस्य तात्त्विकाऽभेदभावबोधकवचनश्रवणसमकालमेव बाधाद्दशमस्त्वमसीति वचनेनेव श्रीमहेश्वरोपदेशश्रवणमात्रेण सार्वात्म्यावगमो

शृणु—

पूर्णानन्दामृतनिधिरयं निस्तरङ्गान्तरङ्गो
देशे देशे दिशि दिशि बहिः पश्य भात्यस्तसीमा ॥
अन्तश्चापि प्रणयनिलयालोकय श्रीसुदामन् !
पूर्णानन्दः स्फुरति हृदये श्रीमहेशप्रसादात् ॥ २१ ॥
तथापीदं भगवतः प्रार्थनीयम् ।

सुदामा—[३२]किं तत् ?

श्रीकृष्णः—[३३]( कर्णे एवमेवम् )

सुदामा—[३४]तथा कुर्वः ।

उभौ—[३५]प्रणतजनपारिजात ! भगवँश्चन्द्रचूडामणे !
सर्वात्मभाव इह यो भवतोपदिष्टः
सोऽयं सदा स्फुरतु नौ भवतः प्रसादात् ॥
त्वत्पादपद्मपरिपूजनकाल एकः
पूज्यो भवान् भवतु पूजकतावयोश्च ॥ २१ ॥
इति नौ चरमा प्रार्थना ।

---

जातस्तं प्रपञ्चयति शृण्वित्यादिना । अग्रे 'तथापि' इत्युपन्यासाद् यद्यपीति प्रथममध्याहार्यम् । यद्यपि निस्तरङ्गान्तरङ्गः—अन्तर्विकल्पशून्यः—पूर्णानन्दामृतनिधिः—निरतिशयसुखधामा, अस्तसीमा—देशकालवस्तुपरिच्छेदरहितः—देशे देशे दिशि दिशि इति वीप्साभ्यां वहिरन्तश्चेतिपदाभ्यां च सर्वत्रव्यापको भाति, हे प्रणयनिलय ! श्रीसुदामन् ! आलोकय पश्य—तादृशमात्मानमनुभवगोचरं कुर्विति यावत् । फलितमाह—पूर्णानन्दः श्रीमहेशप्रसादाद् हृदये स्फुरति । नातः परं किमप्यभिलषणीयमवशिष्यते तथापि भगवतो महेश्वरादिदं—वक्ष्यमाणं—प्रार्थनीयम् । त्वयेति शेषः ।

( ३२ ) श्रीकृष्णहार्दमनाकलयन् पृच्छति, 'किं तदि'ति ।

( ३३ ) श्रीकृष्ण उपांशु स्वाशयमावेदयति कर्णे ।

( ३४ ) सुदामा कृष्णोक्तमङ्गीकुर्वन्नाह 'तथा कुर्व' इति ।

( ३५ ) उभौ दम्पती सम्भूय प्रार्थयेते । प्रणतजनपारिजात ! इति सम्बोधनं स्वाभीप्सितसिद्ध्या अभिमुखीकरणार्थं, भगवन् ! चन्द्रचूडामणे ! इति च सम्बोधनद्वयं भगसञ्ज्ञकषड्विधैश्वर्यवतः श्रीशिवात्स्वस्य निकृष्टत्वबोधनेन शिवस्य चन्द्रं चूडामणित्वेन बिभ्रतो ध्येयरूपनिर्देशेन स्वस्य भक्तिप्रियत्वं

श्रीशङ्करः—[३६]तथास्तु । किञ्च श्रीकृष्णचन्द्र ! कैवल्यमुक्तेरपि मद्भक्तौ ते गरीयसी निष्ठा तेन तुष्टोऽहं ते परमपि वरं प्रयच्छामि ।

श्रीकृष्णः—अवहित एवायं भवद्भक्तो भवद्दत्तं शिरसा धारयितुम् ।

श्रीशङ्करः—[३७]अहमिव भव मुक्तिदानदाता
त्वमपि हरे ! यत आवयोर्न भेदः ॥
त्वयि मयि समदर्शिनः सुलभ्या
भवति नचैकतरद्विषः क्वचित्सा ॥ २२ ॥
( इत्यभिदधान एव श्रीकेदारनाथलिङ्गेऽन्तर्हितः )

श्रीकृष्णः—[३८]सुदामन् ! पश्य दयानिधेर्दयालुतां, स्वकीयमनन्यभक्तमपि मां सर्वथा स्वसमानैश्वर्यं, किं बहुना स्वस्वरूपमपि मां विधाय महाशयतयोपकारोपचारवचनान्यपि श्रोतुं न विलम्बितः । परितुष्यतु स भगवान् स्वकृत्येनैव, के वयं तत्कृत्यानि प्रतिकर्तुं विधातुरायुषापि ( इति वदन् हर्षाश्रूणि मुञ्चति )

---

भक्तावभिनिवेशश्च सूचितः । तदेव विवृणोति 'सर्वात्मभाव' इत्यादिना । यः सर्वात्मभावो भवता उपदिष्टः सोयं सर्वदा भवतः प्रसादादावयोः स्फुरतु परन्तु त्वत्पादपूजनावसरे केवलं भवतः पूज्यत्वमावयोश्च पूजकता सुस्थिरा स्फुरतु इतीयं नौ चरमाभ्यर्थनाऽस्ति ।

( ३६ ) श्रीशङ्करः सुदाम्नो भक्तिप्रियत्वेन सातिशयं तुष्टस्तस्मै तथास्तु इत्युक्त्वा श्रीकृष्णायापि परमपि वरं दित्सति तत्रहेतुमप्याह यतः कैवल्यमुक्तेरपि मद्भक्तौ ते गरीयसी निष्ठा तेन तुष्टोऽहमित्यादिना ।

( ३७ ) श्रीकृष्णेन 'भवद्दत्तं शिरसा धारयितुमवहित एवाऽयं भवद्भक्त' इत्यभिहिते शिवः—हे हरे ! अहमिव त्वमपि मुक्तिदानदाता, कैवल्यमुक्तिदो भव, यत आवयोर्भेदो नास्ति किन्तु आवयोरभेददर्शिनः सुलभ्या सा ( मुक्तिः ) न पुनरेकतरद्विषः सा क्वचिदपि लभ्या । विष्णुद्विषः शिवभक्तस्य शिवद्विषो विष्णुभक्तस्य वा मुक्तिलाभो न कथञ्चनेत्यर्थः ।

( ३८ ) वराक्षराणि व्याहृत्यानन्तरमेव केदारनाथलिङ्गे यावदन्तर्हितः शिवस्तावदेव श्रीकृष्णः सुदामानमाह—पश्य दयानिधेर्दयालुतां यत्स्वभक्तं मां न केवलं स्वसमानैश्वर्यमपितु कैवल्यमुक्तिदातृत्वार्पणेन स्वस्वरूपमपि मां कृत्वा मदुक्तमुपचारवचः श्रोतुमपि न विलम्बितः किन्तु सद्य एवान्तर्हित

सुदामा—[३९] ( सहर्षाश्रुपातम् ) श्रीकृष्णचन्द्र ! न केवलमिदानीमेव कृतेन तपसा परितुष्टस्य तस्य त्वयि प्रीत्यतिशयो जात इति मन्तव्यं, स्वाभाविक एव कोपि प्रीत्यतिशयो जागर्त्ति भवस्य भवति।

श्रीकृष्णः—कथं तद् भवता ज्ञातम् ?

सुदामा—तदपि वदामि शृणु—

श्रीकृष्णः—श्रोतुमवहितोऽस्मि।

सुदामा—[४०] भवद्भिः सहाध्ययनसुखमनुभूय गुरुकुलाद्विनिवृत्तेन मया प्रतिसंवत्सरं श्रीकेदारनाथदर्शनं विधेयमिति नियमो गृहीतः।

श्रीकृष्णः—[४१] उत्तमतमं कल्याणकारणं गृहीतं; ततस्ततः ?

सुदामा—एवं श्रीकेदारनाथदर्शनं नियमेन कृतवतो मे संवत्सरषष्टिः प्रयाता, ततः परितुष्टेन साक्षाद्दत्तदर्शनेन भगवता केदारनाथेन— "वत्स सुदामन् ! वलीपलितपरिकलितकायोस्यतीव जराजीर्णोऽसीति नातः परमत्रागन्तव्यं त्वया, यच्च ते वरणीयं तद् वृणु" इत्युक्तम्।

---

इत्यर्थः। परेशे तस्मिन्नुपचारवचोऽपि नाम कीदृशं स्यादित्याह 'परितुष्यतु स्वकृत्येनैव स भगवान्' इति। यतस्तत्कृत्यानि प्रतिकर्तुं विधातुरायुषापि वयं के? नाऽलमिति भावः।

( ३९ ) पूर्वोक्तवचनान्ते हर्षाश्रूणि मुञ्चन्तं श्रीकृष्णमनुमुञ्चन् हर्षाश्रूणि सुदामा वदति श्रीकृष्णचन्द्र ! इत्यादि। मैवं मँस्था यदिदानीं कृतेन तपसा परितुष्टस्य त्वयि प्रीत्यतिशयो भवस्य जात इति, अपि तु स्वाभाविक एव प्रीत्यतिशयो जागर्त्ति तस्य भवति पुरातन इति।

( ४० ) 'कथं तद् भवता ज्ञात'मिति सानुनयं पृष्ट 'स्तदपि वदामि शृण्वि'ति प्रतिशृण्वन् 'श्रोतुमवहितोऽस्मी'ति भगवत आभिमुख्यमवगम्य निवेदयति सुदामा भवद्भिरित्यादि। यावद्वयं गुरुकुले सहोषितास्तावतः समयस्य वृत्तान्तस्तु श्रीमद्भिर्ज्ञात एव ततः परं यदाऽहं स्वगृहान् प्रतिनिवृत्तस्तदा प्रभृति प्रतिवर्षं श्रीकेदारनाथयात्रा कर्त्तव्येति मया नियमो गृहीत इति।

( ४१ ) विशेषजिज्ञासाकुलः श्रीकृष्णस्तदीयं सङ्कल्पमुपबृंहयन् 'उत्तमतमं कल्याणकारणं गृहीत'मित्याभाष्य पृच्छति 'ततस्तत' इति।

श्रीकृष्णः—[४२]धन्या दयालुता श्रीमहेशस्य; ततस्ततः ?

सुदामा—[४३]ततो 'भगवन् ! न मे आविरश्चिपदात्कुत्रापि विषयसुखेषु स्पृहा स्वप्नेऽपि, केवलं त्वमेव वरणीयस्तस्यापीदानीं साक्षाद्दर्शनं जातं, तेन कृतकृत्यस्य न मे किञ्चिदपि वरणीयमवशिष्यते' इति मयोक्तम् ।

श्रीकृष्णः—युक्तमेवोक्तं, ततस्ततः ?

सुदामा—ततः पुनर्भगवता 'वत्स ! तथापि यत्ते प्रियतमं तद् वृणीष्व' इत्युक्तम् ।

श्रीकृष्णः—[४४]अहो !! भगवतः स्वभक्तेषु वत्सलतातिशयः; ततस्ततः ?

सुदामा—[४५]ततो न जाने तस्यैव प्रेरणयाऽथवा मदीयपुण्यपुञ्जपाकेन—'भगवन् ! मम तु त्वमेव प्रियतमो वरणीयो दुर्लभतमश्चासि

---

( ४२ ) सुदाम्ना—षष्टिवर्षपर्यन्तमनुष्ठितया प्रतिसंवत्सरयात्रया परितुष्टेन श्रीकेदारनाथेन साक्षाद् दर्शनं दत्त्वा 'वत्स ! अतिवृद्धतया नातः परमत्रागन्तव्यं यत्ते वरणीयं तद् वृणु' इत्युक्तम्—इति निवेदिते श्रीकृष्णो महेशस्य दयालुतां धन्येतिपदेनाभिनन्द्य ( सुदामा किं वृतवानिति ) ज्ञातुमुत्क आह ततस्तत इति ।

( ४३ ) वृतमेव वरं विवृणोति सुदामा—स्वेष्टदैवतसाक्षात्कारमात्रेण कृतकृत्यम्मन्यस्य भक्तस्य न किमपि वरणीयमवशिष्यत इत्यर्थः । 'त्वमेव साक्षात्करणीय इत्यतो न चास्ति कार्यं गुरुयोगिनामपि' इति माघे श्रीकृष्णं प्रति नारदवचोऽप्यमुमेवार्थं दृढयति ।

( ४४ ) श्रीकृष्णेन सुदामोक्तमनुमोदमानेन 'युक्तमेवोक्त' मित्युक्त्वा 'ततस्तत' इति जिज्ञासाकुलता दर्शिता तदा—वत्सेत्यामन्त्रणपूर्वं—'तथापि—वरणीयशेषाभावेपि—यत्ते प्रियतमं तद् वृणीष्व' इति भगवद्वचनमनुवदतिस्म सुदामा, तच्छ्रुत्वा शिवस्य स्वभक्तेषु वत्सलतातिशय 'महो' इति निपातप्रयोगेणाभाष्य प्राप्तावसरं सुदामोदितं वचनमवगन्तुं ताम्यन्निवाह ततस्तत इति ।

( ४५ ) स्वयं याचितस्य वरस्य दैवयोगादेवातर्कितोपनिपातित्वमिव व्यञ्जयन्नाह भगवन्निति । हेतुमुट्टङ्कते—तदीयप्रेरणया मदीयपुण्यपुञ्जपाकेन वेति । अनयोरेकतरेणैवात्र हेतुना भवितव्यं नापरेणेत्यर्थः । दुर्लभतमस्य प्रियतमस्य

तथापि पुनः पुनः प्रेमप्राबल्यान्मां याचितुं प्रेरयसि तर्हि नाहं किमप्यन्यद्वेद्मि; यदि तवापि प्रियतमं वस्तु चेत्तर्हि तस्यापि तवैव साक्षाद्दर्शनमभियाचे' इति सप्रणाममुक्तं मया ।

श्रीकृष्णः—[४६]प्रियमित्र ! अतीवविचित्रमचिन्त्यं च किमपि याचितं भवता; ततस्ततः ?

सुदामा—[४७]ततः परमानन्दप्रफुल्लितमनोलोचनो भगवान्—

"जानासि द्वारकाधीशं देवकीवसुदेवयोः ॥
नन्दनं श्रीकृष्णचन्द्रं चन्द्रं त्रिजगतामपि ? ॥२३॥" इत्याह ।

श्रीकृष्णः—( स्वगतम् ) [४८]अप्रसङ्गे कोऽयं प्रश्नावसरो ! भवतु क्रमाज् ज्ञास्यामि । ( प्रकाशम् ) ततस्ततः ?

सुदामा—ततो—'[४९]जानामि तं महाराजं बालमित्रं स मे प्रभो ! ॥
तेन सार्द्धं मयाऽधीता विद्या एकगुरोर्गृहे ॥ २४ ॥'

---

त्र वस्तुन एव वरणीयत्वं, तादृक् तु मम त्वमेवासि स च लब्ध एवेति वरणीयशेषाभावः । मां प्रेमप्राबल्यात्प्रेरयसि वरं याचितुं तर्हि 'यत्तवापि स्यात् प्रियतमं वस्तु तस्य तवेदानीमिव साक्षाद्दर्शनमभियाचे' इत्युक्तवान् सुदामा ।

( ४६ ) सुदामप्रार्थिते वस्तुनि विस्मयमावहन् 'प्रियमित्र ! अतीव विचित्रमचिन्त्यं च किमपि याचितं भवते'ति श्रीकृष्ण आह । यदुत परमेश्वरस्यापि प्रियतमं स्याद्वस्तु तन्नूनमलौकिकमेवेति वैचित्र्यहेतुः, कीदृशं किमिव हि तद् भवेदित्यचिन्त्यताहेतुरिति । जिज्ञासाकुलः पृच्छति 'ततस्तत' इति ।

( ४७ ) मनसो लोचनयोश्च प्रफुल्लितत्वे हेतुः परमानन्दस्तदुद्भवश्च प्रियस्य वस्तुनः स्मरणमित्याशयः । भगवान्—महादेव आहेत्यनेन सम्बन्धः । द्वारकाधीशमित्यनेन नवद्वारपुराधिष्ठात्रन्तर्यामिता, देवकीवसुदेवयोर्नन्दनमित्यनेन मायामायिनोः साक्षिता, त्रिजगतामपि चन्द्रमाह्लादकमित्यनेन निरतिशयानन्दता च विशेषणत्रितयेन बोधिता । यद्येनं जानासि तत्त्वतो वेत्सि चेत् कृतकृत्योसीत्याकूतम् ।

( ४८ ) महादेवाशयमनाकलयन् सन्दिग्धे श्रीकृष्णः स्वगते—कोयमप्रसङ्गे प्रश्नावसर इति । स्वयमेव समाधत्ते भवत्वित्यादिना । प्रश्नाशयमवगन्तुं त्वराकुलः पृच्छति 'ततस्तत' इति ।

( ४९ ) तं महाराजं ( श्रीकृष्णम् ) जानामि; न केवलं सामान्यज्ञान-

इति मया प्रोक्तम् ।

श्रीकृष्णः—सम्यगुक्तं; ततस्ततः ?

सुदामा—ततो भगवतोक्तम् 'वत्स सुदामन् !

[50]स वै मूर्त्त इवात्मा मे हृदयं वा पुमाकृति ॥
मूर्त्ता मे पालिनी शक्तिर्मां तं तं मामवेहि भोः ! ॥ २५ ॥
स मे प्रियतमं वस्तु कुरु तद्दर्शनं मुदा ॥
मैत्र्या तुष्टः स ते देवश्चिन्तारत्नं भविष्यति '॥२६॥ इति ।

श्रीकृष्णः—( [51]सहर्षाश्रुपातं रोमाञ्चितसकलगात्रः ) सखे सुदामन् ! अहो भक्तवत्सलस्य भगवतो भक्तवत्सलता यया परतन्त्रः परमेश्वरः स्वकीयमनन्यभक्तं मां स्वसमानं कुरुते । ततस्ततः ?

सुदामा—ततो—[52]'भगवन् ! यथाभवदाज्ञं करिष्ये ' इति मयोक्ते 'नातः परमत्रागन्तव्यं श्रीकृष्णचन्द्रदर्शनमेव मद्दर्शनं मन्तव्य' मित्याह भगवान् ।

---

मेव अपितु परिचयोऽप्यस्ति यतः स मे बालमित्रम् । मित्रत्वमपि न यथा कथञ्चित् किन्तु निरूढमित्याह—तेन (श्रीकृष्णेन) सार्द्धं मया एकगुरोः (सान्दीपिनेः) गृहे विद्या अधीताः । तथा च सतीर्थ्यावावामिति चिरपरिचयाद्याथार्थ्येन तं जानामीत्यर्थः ।

(५०) श्रीकृष्णस्तु विविदिषाक्रान्तान्तरङ्गः सम्यगुक्तमित्यनुमोदमान आह—'ततस्तत' इति । तदुत्तरयन् सुदामा महादेवोक्तमनुवदति 'स' इति । सः श्रीकृष्णचन्द्रः मे मूर्त्त आत्मा इव, पुरुषाकारेण परिणतं हृदयमिव अस्तीति शेषः । किञ्च जगतां पालिनी मे मूर्त्ता शक्तिरपि स एव, अतो हेतोर्मां तमवेहि तञ्च मामवेहि । उभयोरप्यावयोः परस्परं भेदलेशोपि नाशङ्कनीयः । अपिच स श्रीकृष्णः मे प्रियतमं वस्तु तस्मान्मुदा (नित्यं) तद्दर्शनं कुरु, स देवः मैत्र्यातुष्टः सन् ते चिन्तारत्नं भविष्यति, तव मनोभिलषितं सर्वं पूरयिष्यतीत्यर्थः ।

(५१) परमशिवस्य स्वस्मिन्ननुग्रहातिरेकं विभाव्य हर्षाश्रुरोमाञ्चौ सात्त्विकभावावनुभवन् सुदामानमाह सखे इति । अहो इति निपातोच्चारेण भक्तवत्सलतायां विस्मयं प्रकटयन् तत्प्रयुक्तं स्वस्मिन् शिवस्य स्वाभेदभावनमग्रे कृत्वा मनसि मुदमादधाति ।

(५२) सुदामा—भगवन् महेश्वर ! भवदाज्ञामनतिक्रम्य नित्यं श्रीकृष्णदर्शनं करिष्ये इति स्वोक्तमनूद्य शिवोक्तमनुवदति—'नातःपरमत्र प्रतिवर्षं

श्रीकृष्णः—'[५३]मा मे वृद्धो भक्तो मद्दर्शनार्थं दूरदेशाटनदुःखमनुभव' त्विति दययैव दयालोरियमुक्तिः। ततस्ततः?

---

(बदरिकाश्रमे) आगन्तव्यं, श्रीकृष्णदर्शनमेव मद्दर्शनं मन्तव्यं, यत आवयोरभेदः पूर्वमेवोक्त इत्यर्थः। तथा च श्रीमद्भागवते श्रीभगवद्वचनम्—स्कन्धे ४ अध्याये ७—

अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्॥
आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः॥ ५०॥
आत्ममायां समाविश्य सोहं गुणमयीं द्विज!॥
सृजन् रक्षन् हरन् विश्वं दध्रे सञ्ज्ञां यथोचिताम्॥ ५१॥
तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि॥
ब्रह्मरुद्रौ च भूतानि भेदेनाऽज्ञोऽनुपश्यति॥ ५२॥
यथा पुमान् न स्वाङ्गेषु शिरःपाण्यादिषु क्वचित्॥
पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः॥ ५३॥
त्रयाणामेकभावानां यो न पश्यति वै भिदाम्॥
सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति॥ ५४॥

भेददृशां शिवद्रुहां विनिन्दापि तत्रैव चतुर्थेऽध्याये—

यद् द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत्॥
पवित्रकीर्तिं तमलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः॥ १४॥
किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य जटाःश्मशाने॥
तन्माल्यभस्मनृकपाल्यवसत् पिशाचैर्ये मूर्द्धभिर्दधति तच्चरणावसृष्टम्॥ १६॥

शिवनिन्दाश्रवणे दोषस्तत्प्रतीकारश्च तत्रैवोक्तः—

कर्णौ पिधाय निरियाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने॥
छिन्द्यात् प्रसह्य रुशतीमसतीं प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत्स धर्मः॥ १७॥

यतस्तत्रैव षष्ठेऽध्याये—३६ तमे श्लोके—

'उपविष्टं दर्भमय्यां वृस्यां ब्रह्म सनातनम्' इति सनातनब्रह्मपदेन निर्देशात् शिवस्यैव त्रिमूर्त्तिभावः शास्त्रसिद्ध एवानूदितः।

(५३) शिवोपदेशाशयमन्यथा वर्णयन् स्वोत्कर्षमपह्नुते श्रीकृष्णः—'मे वृद्धो भक्तो दूरदेशाटनदुःखं मद्दर्शनार्थं माऽनुभवतु' इति दयया दयालोर्देवस्येयमुक्तिर्न परं मदुत्कर्षवर्णनाशयेनेत्यभिप्रायः।

सुदामा—[५४]ततो 'भगवन् !

यावज्जीवं हि केदारे केदारेश्वरदर्शनम् ॥
प्रतिसंवत्सरं कार्य-मिति मे नियमो दृढः ॥ २७ ॥

इति मयाऽऽत्मसङ्कल्पो निवेदितः ।

श्रीकृष्णः—ततो महादेवेन किमुक्तम् ?

सुदामा—[५५]ततः क्षणं विचार्य—

"सुदामन् वत्स ! मा चिन्तां कुरु, भक्तिवशाशयः ॥
केदारकुण्डसहितोऽहमेष्यामि भवत्पुरम् ॥ २८ ॥
त्वन्मन्दिरात् पश्चिमतः समसूत्रे हि मे स्थलम् ॥
भविता येन ते गेहस्थितो द्रक्ष्यसि मां सदा ॥ २९ ॥"

इत्युक्त्वा श्रीकेदारलिङ्ग एव श्रीकेदारेश्वरोऽन्तर्हितः ।

श्रीकृष्णः—[५६]सखे ! त्वमेव खलु लोके भगवतोऽनन्यभक्तो यद्भक्तिवशो भगवान् केदारनाथोपि त्वन्नगरं प्राप्तः ।

सुदामा—[५७]नायं प्रसङ्गो मम भक्तत्वख्यापनाय मया प्रकाशितः किन्तु 'भवत्तपश्चरणात् पूर्वमपि त्वयि सहजः प्रेमातिशयस्तद्वचसैव दृष्ट' इति दर्शयितुमेव ।

---

(५४) श्रीकृष्णेन पूर्ववाक्यान्ते 'ततस्ततः' इति पदाभ्यां जिज्ञासितमर्थमाह सुदामा—तत इत्यादिना । मया यावज्जीवं प्रतिवर्ष केदारेश्वरदर्शनं कार्यमिति मे दृढो नियम इति तदा निजसङ्कल्पो निवेदितो मया ।

(५५) 'अथ महादेवेन किमुक्त' मिति श्रीकृष्णेन पृष्टः सुदामाऽऽह ! हे वत्स सुदामन् चिन्तां मा कुरु, यतो भक्तिवशान्तरङ्गोऽहं केदारकुण्डसहितस्त्वत्पुरमेष्यामि, त्वन्मन्दिरात्पश्चिमतः समसूत्रस्थाने मे स्थलं, येन त्वं स्वगृहस्थित एव सदा मां द्रक्ष्यसि, इति वदन्नेव केदारलिङ्गे केदारेश्वरोऽन्तर्हितः ।

(५६) इदानीं श्रीकृष्णः सुदामनि गरिमाणमारोपयति—सखे ! त्वमेव भगवतोऽनन्यभक्तो यद्भक्तिवशो भगवान् केदारनाथोऽपि त्वन्नगरं प्राप्त इति किं वर्णयामि तव शिवभक्तिमाहात्म्यम् ।

(५७) श्रीकृष्णप्रयुक्तां स्वस्तुतिमनवसरत्वकथनेनापोह्य प्रसङ्गं स्मारयति । न हि मयाऽयं प्रसङ्गो मम शिवभक्तत्वख्यापनायोपन्यस्तः किन्तु त्वयि प्रागपि तपश्चरणान्महेशस्य सहजः प्रेमातिशयः शिववचसैव दर्शयितुमित्याशयः ।

श्रीकृष्णः—[५८]जानामि सखे ! जानामि—

नारायणत्वेपि तपःप्रतुष्टः स एव देवोऽभ्युदयाय मेऽभूत् ॥
रामावतारेपि जयप्रदो मे श्रीरामनाथः समभूद्दयालुः ॥ ३० ॥

कुत्र कुत्र भक्तवत्सलेन तेन स्वकीयस्यानन्यभक्तस्य मे साहाय्यं न कृतं ? तत्राप्यस्मिन् कृष्णावतारे तु प्रतिपदं साहाय्यं करोति—शृणु—

कारागारे समजनि जनिर्गोकुले गूढवासो
गोगोपीभिः सह विहरणं गोपबालैश्च मैत्री ॥
क्वावस्था सा वद वद सखे ! क्वेयमीशोपदिष्टा
स्वीयं भक्तं स्वसममवनौ को हि कुर्याद्विनेशम् ॥ ३१ ॥

( इत्यश्रूणि मुञ्चन्नेव पुनः सानन्दम् )

यथा मया निर्मितया सुभक्त्या तुष्टोऽकरोन्मां स्वसमं महेशः ॥
सा येन मह्यं कृपयोपदिष्टा तस्यानृणोऽहं सुगुरोः कदा स्याम् ॥३२॥

( इति पुनरश्रूणि मुञ्चति )

---

( ५८ ) सुदामोक्तमङ्गीकुर्वंस्तस्मिन् स्वानुभवान् प्रमाणयन्नाह ' जानामीति ' । पुरा नारायणत्वेपि तपःप्रतुष्टः स एव देवो ( महादेवः ) मे अभ्युदयाय अभूत् । एतच्चोपपादितं प्रथमाङ्कव्याख्यायां २० तमे पृष्ठे द्रोणपर्वोक्त व्यासवचनैः ' योऽसौ नारायणो देव ' इत्यादिनेति न पुनस्तन्यते । रामावतारेऽपि दयालुः श्रीरामनाथो मे जयप्रदः समभूत् । तथा चोक्तं रामायणे ' अत्र पूर्वं महादेवः प्रसादमकरोन्मम ' इति पुष्पकस्थितेन रामेश्वरस्थानं सीतायै निर्दिशता स्वयमेव श्रीरामचन्द्रेणेत्येतत्सर्वं संस्मृत्यास्मिन् कृष्णावतारे तु प्रतिपदं साहाय्यं करोतीति सविशेषमुक्त्वा तदुपपादकप्रसङ्गानुपन्यस्यति शृण्वित्यादिना । मम हि कारागारे जनिर्जन्म समजनि, तत एवारभ्य गोकुले गूढवासः कंसभयात्, तत्र च गोभिर्गोपीभिश्च सह विहरणं, मैत्री च गोपबालैः, सा अवस्था क्व, क्वचेदानीमीशेनोपदिष्टा अवस्था; त्वमेव वद वद, स्वीयं—निजं—भक्तं मामवनौ स्वसमं, लोके स्वसमानैश्वर्यत्वेन प्रसिद्धम्—त मीशं महादेवं—विना अन्यः कः कुर्यात् ? । एवं शिवानुग्रहं वर्णयित्वा तन्निदानभूतं गुरोरनुग्रहमपि वर्णयति । मया निर्मितया यया भक्त्या तुष्टो महेशो मां स्वसममकरोत् सा भक्तिर्येन मह्यमुपदिष्टा तस्य गुरोरहमनृणः कदा स्यामिति वदन्पुनरश्रूणि मुञ्चति ।

सुदामा—( [५९]स्वगतम् ) अतिभूमिं गतोऽस्य शिवगुरुभक्तिरसावेशस्तदन्यतो नयामि। ( प्रकाशम् ) श्रीकृष्णचन्द्र ! अन्तर्हितो भगवाँश्चन्द्रचूडामणिस्तदेहि, मे गृहं चरणकमलपङ्क्त्या पवित्रं कुरु ।

श्रीकृष्णः—( [६०]स्मृतिमभिनीय ) सुदामन् ! श्रीपरमशिवदयालुतावर्णनप्रसङ्गेन बहुलो व्यतीतः कालस्तद्दर्शय ते राजधान्या मार्गम् ।

सुदामा—( [६१]साञ्जलिबन्धम् ) यथाज्ञा नाथस्य । इत इतो देवः । ( इति सकृष्णो निष्क्रान्तः )

( [६२]ततः प्रविशन्ति सुधर्मासभायामुग्रसेनो वसुदेवो बलदेवः श्रीकृष्णो भीमोऽर्जुनः सात्यकिः कृतवर्माऽक्रूर उद्धवश्च )

भीमसेनः—[६३]राजन् ! श्रीकृष्णचन्द्रपत्न्यः सर्वा अन्तर्वत्न्यः सन्तीति श्रुत्वा महाराजेन युधिष्ठिरेण प्रहर्षप्रदर्शनायाभिनन्दनदानाय च

---

( ५९ ) भक्तिरसावेशविवशं श्रीकृष्णमालक्ष्य सुदामा स्वगते तमन्यतो नेतुमभिलष्य श्रीकृष्णं सम्बोध्य 'अन्तर्हितो भगवान् चन्द्रचूडामणि'रित्यतोऽत्रेदानीमवस्थानप्रयोजनमवसितमतः प्रतिज्ञातानुरोधेन मे गृहं चरणकमल ( न्यास ) पंक्त्या पवित्रीकुरु इत्यर्थयते ।

( ६० ) प्रतिज्ञामास्मृत्य 'सुदामन् परमशिवदयालुतावर्णनप्रसङ्गेन बहुलः कालव्ययो जातस्तदिदानीं ते राजधानीमेव गच्छामस्तन्मार्गं दर्शये'त्याह ।

( ६१ ) सुदामा स्वेष्टसिद्धिं मन्वानो 'यथाज्ञा नाथस्ये'त्युक्त्वा 'इत इतो देव' इति निजराजधानीमार्गमादर्शयन् सह श्रीकृष्णेन निष्क्रान्तः ।

( ६२ ) अतः परं वर्द्धापनाय वस्त्राभूषणादिदानाय चागतानां युधिष्ठिरमहाराजप्रेषितानां भीमसेनादिबान्धवानां सुधर्मासभायां प्रवेशमुपनिबध्नाति कविः । सर्वासां श्रीकृष्णपत्नीनां गर्भवतीत्वख्यापनमत्र सूच्यार्थप्रतिपादनमेव तच्च—

अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ॥
विष्कम्भचूलिकाऽङ्कास्याऽङ्कावतारप्रवेशकैः ॥

इति दशरूपकोक्तप्रकारेण कर्त्तव्यं, तेषां प्रकाराणामनवसरत्वादत्र 'आनन्दो वाञ्छितावाप्ति'रित्यानन्दाङ्गत्वेनोपन्यासो ज्ञेयः ।

( ६३ ) भीमसेनः सभायां युधिष्ठिरसन्देशं श्रावयंस्तदीयपत्रं दातुमुद्युङ्क्ते । श्रीकृष्णपत्न्यः सर्वा अन्तर्वत्न्यः सन्तीति [ अन्तर्वत्पतिवतोर्नुगिति नुगागमः ] श्रुत्वा महाराजेन युधिष्ठिरेण प्रेषितावावां, धनञ्जयद्वितीयत्वाद्

प्रेषितावावाम् । इदं महाराजस्य पत्रमिमाश्च वस्त्रालङ्कारमञ्जूषाः सर्वाभ्यः पृथक् पृथक् प्रदातुम् ( इतिवदन्पत्रं ददाति मञ्जूषाश्च दर्शयति ) उक्तं च महाराजेन 'मातुलवर्याणामस्माकं श्रीवसुदेवाभिख्यानां चिरेण फलितः सङ्कल्पकल्पपादपस्तेन मोदामहे, भवतु सर्वासां पुत्ररत्नप्राप्तिरिति प्रार्थयामहे च परमेश्वर'मिति ।

राजा उग्रसेनः—[६४]भीमसेन ! अर्जुन ! आभ्यन्तराणां हि सम्बन्धिनां स्वकीयानामभ्युदयं वीक्ष्य परमानन्दप्राप्तिर्हि स्वाभाविको धर्मः । महाराजो युधिष्ठिरो वसुदेवाभ्युदयं वीक्ष्य नाऽऽनन्दं प्राप्नुयात्तर्हि कोऽपरः प्राप्नुयात् ?

वसुदेवः—[६५]मन्यामहे वयं निःसीमधर्मकर्मपरायणस्य महाराजधर्मराजस्य धर्मकर्मप्रभावात्तदीयाभिः शुभेच्छाभिश्चायमत्यन्तमतर्कितः परमाभ्युदयलाभ इति ।

भीमसेनः—[६६]कोऽयमुपचारातिशयः ? मातुलवर्य ! श्रीमतामेव पूर्वपुण्यपारिजातवनान्यगण्यानि चिरेण फलितानि; को वेदानीं भवादृशोऽगण्यपुण्यपुञ्जकारिणामग्रेसरो वर्त्तते लोकत्रयेऽपि श्री-

---

द्विवचनम् । 'इदं पत्र' मित्युक्त्वा पत्रं ददाति 'इमाश्च मञ्जूषा' इत्युक्त्वा पुरोनिहिता मञ्जूषाः प्रदर्शयति । सन्देशशेषं श्रावयति 'उक्तं च महाराजेने'त्यादि ।

( ६४ ) उग्रसेनो युधिष्ठिरसन्देशं श्रुत्वा लौकिकसामान्यकथनेन युधिष्ठिरकृतमुपचारवच उत्तरयति भीमसेन ! अर्जुन ! इत्युभावपि सम्बोध्य । अत्र 'आभ्यन्तराणां हि सम्बन्धिनां स्वकीयजनाभ्युदयं वीक्ष्य परमानन्दप्राप्तिः स्वाभाविको धर्म' इति सामान्येन 'महाराजो युधिष्ठिरो वसुदेवाभ्युदयं वीक्ष्य नानन्दमाप्नुयात्तर्हि कोऽपरः प्राप्नुयादि'ति विशेषस्य समर्थनादर्थान्तरन्यासः ।

( ६५ ) वसुदेवः स्वाभ्युदये धर्मराजस्य धर्मकर्मणां तदीयशुभेच्छानां च हेतुत्वमुपनिबध्नन् परमाभ्युदयस्यातर्कितोपनिपातिनस्तादृशानेकहेतूपबृंहितत्वमावोधयति 'मन्यामहे' इत्यादिना ।

( ६६ ) भीमसेनो वसुदेवोक्तं सर्वमुपचारवच एवेति निगदेनैवाभाष्य सर्वस्याभ्युदयस्य हेत्वन्तरानपेक्षभवदीयपूर्वपुण्यफलत्वमेव, यतो लोकत्रयेऽपि भवादृशोऽगण्यपुण्यकारिणामग्रेसरोऽन्यः को वाऽस्तीति, न कोपीत्यर्थः, इत्याह ।

कृष्णचन्द्रसदृशलोकोत्तरप्रभावप्रकाशिसत्पुत्ररत्नजन्मैव श्रीमतां पूर्वपुण्यपुञ्जमहिमानं निवेदयति ।

उग्रसनः—[६७]सत्यं सत्यं भीमसेन ! सत्यमेव भवदुक्तम् ।

अर्जुनः—[६८]सन्त्येव मातुलवर्याणां पुण्यपुञ्जा ईदृशं परमाभ्युदयं दातुं समर्थास्तथापि श्रुतं मया 'श्रीकृष्णचन्द्रेण तपोवनं गत्वा दुष्करतरतपश्चरणपरितुष्टात्परमेश्वरान्महेश्वरात्तादृशः कश्चिद्वरोपि लब्ध' इति ।

वसुदेवः—[६९]वत्स अर्जुन ! सत्यं श्रीमहेश्वरप्रसादानन्तरमेवायमभ्युदयाङ्कुरो दृश्यते ।

---

स्वोक्तसमर्थनाय चाह—लोकोत्तरप्रभावप्रकाशिश्रीकृष्णसदृशपुत्रलाभ एव पूर्वपुण्यपुञ्जमहिमानमवगमयति ।

( ६७ ) भीमसेनोक्तमनुमोदते उग्रसेनः सत्यमित्यादिना ।

( ६८ ) अर्जुनः पूर्वपुण्यपुञ्जस्य विद्यमानत्वेपि एतावत्पर्यन्तमभ्युदयस्य सप्रतिबन्धत्वं विदन् तादृशप्रतिबन्धापनयायानुष्ठितमुपायान्तरं श्रुतमपि विशेषतो जिज्ञासमानः पृच्छति सन्त्येवेति ।

( ६९ ) तदुक्तमूरीकुर्वन्नाह वसुदेवः 'वत्स अर्जुन ! सत्यं (भवदुक्तम्) श्रीमहेश्वरप्रसादानन्तरमेव अयमभ्युदयाङ्कुरो दृश्यते इति । अत्र हि कविना 'बीजागमः समाधानम्' इति लक्षणलक्षितं समाधानाख्यं नाटकाङ्गमुपक्षिप्तम् ।

यथा रत्नावल्याम्—

वासवदत्ता—तेन हि, उपनय मे उपकरणानि ।

सागरिका—भर्त्तृदारिके ! सर्वमेतत् सज्जमेव ।

वासवदत्ता—( निरूप्य आत्मगतम् ) अहो प्रमादः परिजनस्य, यस्यैव दर्शनपथात् प्रयत्नेन रक्ष्यते तस्यैव कथं दृष्टिगोचरं गता भवेत् (प्रकाशम्) चेटि सागरिके ! कथं त्वमद्य पराधीने परिजने मदनोत्सवे सारिकां मुक्त्वा इहागता; तत्तत्रैव गच्छ ।

इत्युपक्रमे—

सागरिका—( स्वगतम् ) सारिका तावन्मया सुसङ्गताया हस्तेर्पिता प्रेक्षितुं च मे कुतूहलं तदलक्षिता प्रेक्षिष्ये ।

इत्यनेन वासवदत्ताया रत्नावलीवत्सराजयोर्दर्शनप्रतीकारात्सारिकायाः सुसङ्गता-

अर्जुनः—आर्य मातुलवर्य !

[70]तुष्टे परेश्वर उमासहिते महेशे
किं दुर्लभं भवति वस्तु जगत्त्रयेऽपि ।।
चिन्तामणिः सुरतरुः सुरभिश्च तस्या-
धीना हि यत्र करुणा तरुणेन्दुमौलेः ।। ३३ ।।

अतः श्रीकृष्णचन्द्रस्य गृहे प्राप्तान्येव पुत्ररत्नानीति पश्यामि ।

( ततः प्रविश्य दास्यः )

सर्वाः सहैव—[71]मान्य महाराज ! आर्य तातवसुदेव ! आर्य बलभद्र ! श्रीपरमेश्वरप्रसादात् श्रीरुक्मिणीसत्यभामाजाम्बवतीप्रमुखानां सर्वासां श्रीकृष्णधर्मपत्नीनां पुत्ररत्नानि समसमये जातानीति वर्धापिताः स्थः । श्रीपरशिवप्रसादात्सर्वाणि पुत्ररत्नानि सदाऽऽरोग्यवन्ति आनन्दवन्ति दीर्घायुष्मन्ति च भूयासुरिति भूयो भूयः प्रार्थयामहे परमेश्वरम् ।

( इति वदन्त्यः सानन्दाश्रुपातं सर्वा दास्यः प्रणमन्ति )

---

र्पणेन अलक्षितप्रेक्षणेन च वत्सराजसमागमहेतोर्बीजस्योपादानात् समाधानम् । यथा वा वेणीसंहारे—

भीमसेनः—चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ॥
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचाँस्तव देवि ! भीमः ॥

इत्यनेन वेणीसंहारहेतोःक्रोधबीजस्य पुनरुपादानात्समाधानमेवमत्र अभ्युदयहेतोः शिवानुग्रहरूपबीजस्य पुनरुपादानात्समाधानम् ।

( ७० ) अर्जुनो वसुदेवं सिद्धाभिलाषमाचक्षाणः प्रोत्साहयति—मातुलवर्य ! उमासहिते परेश्वरे महेशे तुष्टे जगत्त्रयेऽपि किं नाम वस्तु दुर्लभं भवेत्, न किमपीत्यर्थः । अतश्च श्रीकृष्णचन्द्रस्य गृहे पुत्ररत्नानि प्राप्तान्येव इत्यहं पश्यामि । यतः—तरुणेन्दुमौलेर्यत्र करुणा ( जायते ) तस्य चिन्तामणिः सुरतरुः सुरभिः—कामधेनुः—इत्येते सर्वे अधीना एवेति ।

( ७१ ) अत्रान्तरे दासीनां पुत्रजन्मवृत्तान्तं निवेदयितुं प्रवेशः । मा नाम काचिदपि वर्द्धापनप्रसादपारितोपिकलाभे वैषम्यमुपेयादिति सर्वाः सहैव—

सर्वेऽपि—( सानन्दम् )

[72]अद्य श्रीकरुणार्णवस्य करुणादृग्वीचयो निस्तुलाः
सर्वत्र प्रसृताः समस्तसुखदाः श्रीसाम्बशम्भोः शिवाः ॥
वृद्धानां फलितश्च पुण्यनिचयः सत्याशिषो दैशिका
यत् सत्पुत्रपरम्परा विलसति श्रीकृष्णचन्द्रालये ॥ ३३ ॥

( इत्युक्त्वोत्थाय प्रहर्षात्परस्परमालिङ्गन्ति परस्परं वस्त्राभरणानि च प्रयच्छन्ति । मुहूर्त्तान्निवृत्ते च तस्मिन्नानन्दकोलाहले )

राजा—कृतवर्मन् !

[73]सिच्यन्तां राजमार्गाः सुरभिसुसलिलैः केतवस्तोरणानि
वध्यन्तां सत्पताकाः प्रतिसुरभवनं दीपमाला लसन्तु ॥
दासीनां या यदिच्छेद् दिशत विनयतस्तच्च तच्चाशु तस्यै
विप्रेभ्यो गोसुवर्णान्यथ मणिवसनक्षेत्रभूमन्दिराणि ॥ ३४ ॥

---

मान्य महाराज ! आर्य तात वसुदेव ! आर्य बलभद्र ! इति त्रीनपि एतान्यथा योग्यमनुक्रमेण सम्बोध्य ' श्रीरुक्मिणीप्रमुखानां सर्वासां समसमये पुत्ररत्नानि जातानि ' इति संश्राव्य ' वर्द्धापिताः स्थः ' इति मङ्गलोदग्रं निवेदनम् । तानि च दीर्घायुरारोग्यानन्दभाञ्जि भूयासुः परशिवप्रसादादेवेत्याशंसमानाः सानन्दाश्रुमुख्यः सर्वाः प्रणमन्तीति ।

( ७२ ) मङ्गलोदन्तश्रवणेन जातानन्दाः सर्वेऽपि सम्भूयैव गृणन्ति अद्येत्यादि । श्रीकरुणार्णवस्य श्रीसाम्बशम्भोः समस्तसुखदाः शिवाः कल्याण्यो—निस्तुलाः करुणादृग्वीचयः सर्वत्र—अस्मद्गृहेषु—प्रसृताः,किञ्च वृद्धानां पुण्यनिचयश्चाऽद्य फलितः, दैशिकाः अस्मत्कुलगुरवः—सत्या आशिषो येषां तादृशा अद्य जाताः; यदद्य श्रीकृष्णचन्द्रालये सत्पुत्रपरम्परा विलसति । एवं वदन्तस्ते सर्वे मिथ आलिङ्गन्तो वस्त्राभरणानि च प्रयच्छन्तो हर्षाविर्भावमनुभवन्तिस्म ।

( ७३ ) राजा उग्रसेनः कृतवर्म्माणं मङ्गलमयसमयकर्त्तव्यान्यादिशति-सिच्यन्तामित्यादिना । सुरभिसलिलै राजमार्गाः सिच्यन्तां, केतवः तोरणानि पताकाश्च बध्यन्तां, प्रतिदेवालयं दीपमालाः लसन्तु । किञ्च दासीनां ( निर्द्धारणे षष्ठी ) मध्ये या यदिच्छेत्तस्यै तद् वस्तु आशु दिशत; तच्च विनयतो, यतोऽनादरेण दत्तं मनोभङ्गं जनयेदिति विनयेन प्रतिपादयतेत्यर्थः । ब्राह्मणेभ्यश्च गाः सुवर्णानि मणीन् वसनानि क्षेत्रभुवो मन्दिराणि च विनयेन दिशतेति पूर्वेण सम्बन्धः ।

किञ्च—[७४]न सन्ति चौरा भगवत्प्रभावा-

च्छून्यासु कारास्विति पञ्जरस्थाः॥

लीलाविहङ्गाः शुकसारिकाद्या

विमुक्तबन्धा विहरन्तु सौख्यात्॥ ३५॥

कृतवर्मा—यथामहाराजाज्ञं सर्वं कर्त्तुं गच्छामि (इत्युक्त्वा निष्क्रान्तः)

वसुदेवः—वत्स कृष्णचन्द्र! श्रीगर्गाचार्यमाहूय जातकर्मविधीन् यथाविधि विधेहि।

श्रीकृष्णः—[७५]यथाज्ञा पितृचरणानाम्। (इत्युक्त्वा निष्क्रान्तः)

राजा—[७६]अयि सभ्याः! परमानन्दप्रसङ्गेन विस्मृतसर्वव्यवहाराणामस्माकमविदित एव भोजनसमयो व्यतीतस्तदेत भोजनाय गच्छामः। (इत्यासनादुत्तिष्ठति)

सभ्याः—(समुत्थाय) यथाज्ञा महाराजस्य। इत इतो देवः (निष्क्रान्ताःसर्वे)

([७७]ततः प्रविशन्ति—सपरिवारो राजा उग्रसेनः षष्ठीजागरणमहोत्सवाय मिलिता नानादिग्देशागता नृपतयः पौरजानपदा यादवाश्च)

नृपतयः—([७८]नानोपायनानि निवेद्य) महाराज! श्रीकृष्णचन्द्रस्य मन्दिरेषु पुत्ररत्नानां समुत्पत्तिं निशम्यास्माकं मनःसु य आनन्द उच्छलति न तं वर्णयितुं शक्ता वयम्। परमकृपापारावारस्य श्रीमहेश्वरस्य कृपया सर्वेऽपि ते दीर्घायुष्मन्त आरोग्यवन्त आनन्दवन्तश्च भूयासुरिति प्रार्थयामहे महेश्वरम्।

---

(७५) यदा राज्ञाऽऽज्ञप्तं सर्वमनुष्ठातुं निर्गतः कृतवर्म्मा तदा श्रीकृष्णचन्द्रोऽपि श्रीवसुदेवेन—'वत्स! गर्गाचार्यमाहूय यथाविधि सर्वेषां पुत्राणां जातकर्मविधीन्विधेही'त्याज्ञप्तस्तथा कर्त्तुं 'यथाज्ञा पितृचरणाना'मिति वदन्निष्क्रान्तः।

(७६) राजापि—परमानन्दप्रसङ्गेन व्यवहारान्तराणां विस्मरणं लोकानां स्वभावसिद्धमनुवदन् भोजनसमयात्ययं निमित्तीकृत्योत्तिष्ठति। तमनुसरन्तः सर्वे सभ्या 'इत इतो देव' इति वदन्तो निष्क्रान्ताः।

(७७) इदानीं षष्ठीमहोत्सवप्रसङ्गेन समागतानां राज्ञां पौराणां च प्रवेशः पुत्राणां वस्त्राभरणादिदानार्थम्।

(७८) अनेकविधोपायनहस्ता राजानः 'महाराजे'त्यादि 'प्रार्थयामहे महेश्वर'मित्यन्तेन वर्द्धापयन्ते।

उग्रसेनः—[79]राजानो महाराजा राजाधिराजाश्च ! श्रीपरमेश्वरप्रसादाच् श्रीमतां च सर्वेषां शुभेच्छाभिः शुद्धाभिः परेश्वरप्रार्थनाभिश्च एष परमानन्दमयः समय आयात इति मन्यामहे।

पौरा जानपदाश्च—( नानोपायनानि निवेद्य )

[80]श्रीकृष्णेन वयं यथा तनयवत् सम्पालिता लालिता-
नि:सीमात्मजनस्थवत्सलतया सम्पोषिताश्चानिशम् ॥
तत्पुत्राश्च तथैव नः प्रियतमाः स्वीयाः प्रजा नश्चिरं
प्रेमार्द्राः परिपालयन्त्विति वयं सम्प्रार्थयामः शिवम् ॥ ३५॥

श्रीशङ्करस्य करुणामृतपूर्णसिन्धोः
सम्प्रोच्छलत्करुणवीक्षणसत्तरङ्गैः ॥
सर्वत्र शान्तिरतुला प्रबलः प्रमोदश्चानन्द-
मग्नमिह विश्वमिदं विभाति ॥ ३६ ॥

धन्या हि देवकसुताऽऽनकदुन्दुभिश्च
पुण्यैरगण्यगणनैश्च ययोरिदानीम् ॥
श्रीकृष्णचन्द्र इह पुत्रमुखावलोक-
नि:सीमनिस्तुलसुखानुभवैकपात्रम् ॥ ३७ ॥

इत्येवं स्मारं स्मारं प्रमोदामहे।

---

( ७९ ) उग्रसेनस्तदुत्तरं सविनयं ददाति 'राजानः ! श्रीपरमेश्वरप्रसादाच् श्रीमतां युष्माकं च शुभेच्छाभिः शुद्धभावेन कृताभिः परमेश्वरप्रार्थनाभिश्चैष समय आयात ' इति।

( ८० ) पौरा जानपदाश्च उपायनानि पुरतो निवेद्य प्रार्थयन्ते—श्रीकृष्णेन यथा वयं तनयवत् पालिता लालिताश्च, असीमवात्सल्येन नित्यं सम्पोषिता अपि, तथैव तत्पुत्रा अपि स्वीयाः प्रियतमाः प्रजाः नः ( प्रजारूपानस्मान् ) प्रेमार्द्राः सन्तश्चिरं पालयन्तु इति वयं शिवं प्रार्थयामः । किञ्च करुणामृतपूर्णसिन्धोः श्रीशङ्करस्य सम्प्रोच्छलत्करुणवीक्षणान्येव सत्तरङ्गास्तैः सर्वत्र अतुला शान्तिः प्रबलः प्रमोदः ( सर्वतः ) आनन्दमग्नमिदं विश्वमिह विभातीत्यन्वयः। अपिच—देवकसुता—देवकी—धन्या, आनकदुन्दुभिर्वसुदेवश्च धन्य इति लिङ्गविपरिणामेनान्वयः। ययोरगण्यैः पुण्यैरिदानीं श्रीकृष्णचन्द्रः पुत्रमुखावलोकनसुखानुभवपात्रमभूदित्यर्थः । एवं वृत्तान्तं पौनःपुन्येन स्मरन्तो वयं मोदामहे इति पौरा जानपदाश्च जगदुः।

राजा—[८१]पौरा जानपदाश्च! यथार्थमुच्यते भवद्भिः श्रीदेवकीश्रीवसुदेवयोरेवागण्यानां पुण्यानामयं परिणामः । किञ्च निजनरपतिप्रियहितमेव प्रतिदिनमभिकाङ्क्षन्तीनां भवादृशीनां सुप्रजानां शुभाकाङ्क्षापि साम्प्रतं सम्प्राप्तस्यास्य महोदयस्य कारणं मन्यामहे ।
यतः—राज्ञां मनोवचःकायैः प्रजामेवाभिरक्षताम् ॥
प्रजाभिराशिषो दत्ता मूर्त्ताः कामदुघा हि ताः ॥३८ ॥
इति हि सिद्धान्तः ।

प्रजाः—[८२]शोभते श्रीमतामेवं वक्तुं महाराजानां, युष्माकं बालनिर्विशेषा वयं, कुतो युष्माभिः सह वक्तुं प्रतिवक्तुं वा शक्ताः ।
( इत्युक्त्वा प्रणमन्ति । ब्राह्मणाश्चाशीर्वादमन्त्रान् पठन्ति )

[८३]श्रीकृष्णचन्द्रतनयाः सनया भवन्तु
श्रीकृष्णचन्द्रतनयाः सजया भवन्तु ॥
श्रीकृष्णचन्द्रतनयाः सदया भवन्तु
श्रीकृष्णचन्द्रतनया अभया भवन्तु ॥ ३९ ॥

---

( ८१ ) तानुत्तरयति उग्रसेनः—यथार्थमुच्यते भवद्भिरित्यादिना तदुक्तमनुमोदमान एव पौराणां मनांस्यावर्जयितुं ' निजनरपतेः प्रियं हितं चाभिकाङ्क्षन्तीनां भवादृशीनां सुप्रजानां शुभाशंसा अपि साम्प्रतिकस्य महोदयस्य कारणतामाभजन्त इति मन्यामहे इत्याह । स्वोक्तसमर्थनाय साधकमुपन्यस्यति—मनोवचःकायैः प्रजामभिरक्षतां राज्ञां, प्रजाभिर्दत्ता आशिषो, मूर्त्ताः कामदुघा एव, इति हि व्यवहारसिद्धः सिद्धान्त इत्यर्थः ।

( ८२ ) अत्र भवतां महाराजानामेवं वक्तुं शोभते—प्रजासु राजोदयनिमित्ततार्पणं श्रीमतामुचितमेवेत्यर्थः । वयन्तु युष्माकं बालनिर्विशेषा युष्माभिः सह वक्तुं प्रतिवक्तुं वा कुतः शक्ताः ( भवेमेति शेषः ) ।

( ८३ ) ब्राह्मणाशीर्वादमन्त्राणां निष्कर्षस्तु—श्रीकृष्णचन्द्रतनयाः—सनयाः सजयाः सदयाः अभयाः गुणिनः सुखिनः नितरामरोगाः दीर्घायुषः प्रबलबुद्धिबलाः सकलाः कलाज्ञाः श्रीमन्महेश्वरकृपादृष्टिवृष्ट्या श्रीकृष्णतुल्यबलबुद्धिपराक्रमश्रीह्रीधीधराश्च, सन्तु इति सर्वत्र सम्बध्यते, यत्र भवन्त्वित्यादि पृथङ्नोपात्तम् । अत्र श्रीकृष्णचन्द्रतनया इति पदमष्टकृत्व उच्चारितं हर्षोत्कर्षेण । पूर्वस्मिन् वाक्ये ' प्रबलबुद्धिबला ' इत्युक्तं परस्ताच्च श्रीकृष्णतुल्यबल-

श्रीकृष्णचन्द्रतनया गुणिनो भवन्तु
श्रीकृष्णचन्द्रतनयाः सुखिनो भवन्तु ॥
श्रीकृष्णचन्द्रतनया नितरामरोगा
दीर्घायुषः प्रबलबुद्धिबलाश्च सन्तु ॥ ४० ॥
श्रीमन्महेश्वरकृपामृतदृष्टिवृष्ट्या
श्रीकृष्णचन्द्रतनयाः सकलाः कलाज्ञाः ॥
श्रीकृष्णतुल्यबलबुद्धिपराक्रम-
श्रीह्रीधीधराश्च शिवभक्तिपरा भवन्तु ॥ ४१ ॥

( सर्वेप्युत्थाय ब्राह्मणेभ्यः प्रणम्य वस्त्रालङ्कारान्सुवर्णदक्षिणासहितान् समर्पयन्ति )

ब्राह्मणाः—( प्रहृष्टवदनाः )[८४]सर्वेषां वः शिवमस्तु श्रीशङ्करदयादृष्टेति नः प्रार्थना ।

( इति वदन्तो निष्क्रान्ताः )

नृपतयः—[८५]महाराज ! महोत्सवप्रसङ्गेन प्रभातप्राया रजनी तत्स्वानि स्वान्यवमोचनस्थानानि गन्तुमीहामहे महाराजस्यास्ति चेदाज्ञा ।

---

बुद्धिपराक्रमे'त्यादि निर्दिष्टं तेन पौनरुक्त्यं न शङ्कनीयम् । यतः प्रबलं प्रभूतं बुद्धिबलं ज्ञानवैभवं येषामिति विवक्षितं, तदनन्तरं बलबुद्धिपराक्रमादि येषां श्रीकृष्णेन तुल्यमिति विवक्षयोक्तं, तेन प्रबलबुद्धिबलादपि श्रीकृष्णसमानबुद्धि-बलपराक्रमादिमत्त्वमतिशाय्येवेति न पौनरुक्त्यलेशोऽपि । अपिच तस्मिन्नेव वाक्ये अग्रे श्रीह्रीधीधराश्चेत्यत्र धीपदेन पुनः पुनरुक्तशङ्कोदयः सुलभो भवति तथापि तत्र लक्ष्मीलज्जासंवलिताया धियो विशिष्टपदार्थतया बुद्धिसामान्यल-क्षणानाक्रान्तत्वेन उचित एव पृथगुपन्यास इति सर्वमनवद्यम् । ब्राह्मणाशीर्वा-दवाक्यान्ते 'शिवभक्तिपरा भवन्त्वि'ति वचनं, यथेदानीं श्रीकृष्णकृतशिवाराधनेन पुत्रलाभलक्षणोभ्युदयो जात एवमायतावपि उत्तरोत्तराधिकाभ्युदयाशंसीत्या-कूतम् ।

( ८४ ) श्रीकृष्णाभ्युदयाधिगमेन सानन्दत्वेपि प्रहृष्टवदनत्वं तु ब्राह्मणा-नां वस्त्रालङ्कारसुवर्णदक्षिणादिलाभप्रयुक्तमेवेति तदेवानूदितम् । श्रीशङ्करदया-दृष्ट्या सर्वेषां वः शिवमस्त्विति वदन्तो निष्क्रान्ताः ।

( ८५ ) नृपतयोपि स्वान्यवमोचनस्थानानि गन्तुकामा राज्ञ आज्ञा मर्थयन्ते ' महोत्सवप्रसङ्गेन प्रभातप्राया रजनी'त्यादि निगदन्तः ।

राजा—[८६]भद्रमुखाः ! सुखं गच्छत ( सात्यकिं प्रति ) सात्यके ! एतान्सर्वान् हरिकरिनरनौकारथैः स्वानि स्वानि निवासस्थानानि प्रापय ।

सात्यकिः—( साञ्जलिबन्धमुत्थाय ) यथाज्ञा महाराजस्य ( इत्युक्त्वाऽऽगन्तून्प्रति ) एत महाराजा एत, इत इतः सर्वे ( इति वदन्सर्वैर्नरेन्द्रैः सह निष्क्रान्तः )

( प्रजाः पौरा जानपदाश्च सर्वान् प्रणम्य निष्क्रान्ताः )

श्रीकृष्णः—( [८७]वामाक्षिस्फुरणमभिनीय स्वगतम् ) कुतोऽनवसरे दुर्निमित्तम् ? अथवा श्रीमहेश्वरानुग्रहगृहीतानामस्माकं दुर्निमित्तमपि सुनिमित्तमेव ।

उग्रसेनः—( [८८]हृदयकम्पमभिनीय ) वसुदेव ! किमेतदानन्दमये समये निष्कारणं हृदयकम्परूपं दुर्निमित्तं भवति ?

वसुदेवः—[८९]आर्याः ! ममाप्यकस्मादेव हृदयकम्पो भवति ।

बलरामः—[९०]आर्यौ ! ममापीदानीं वामो भुजः स्फुरति ( सर्वे क्षणं सचिन्ता भवन्ति )

वसुदेवः—आर्याः ! शृणुत मदीयं निश्चयम् ।

उग्रसेनः—अवहिताः स्मः श्रोतुम् ।

---

( ८६ ) षष्ठीजागरस्य सिद्धप्रयोजनत्वादिदानीमनुजानाति राजा राज्ञः स्वावसथान् गन्तुम् । 'सात्यके' इत्यादिना च तेषां वाहनादियोजनामप्यादिशति ।

( ८७ ) सात्यकिपुरोगा आगन्तुकनृपाः प्रजाः पौरा जानपदाश्च यदा निष्क्रान्तास्तदा आत्मना चतुर्थः श्रीकृष्णः स्वगतमाह—'कुतोऽनवसरे दुर्निमित्तं? वामाक्षिस्फुरणरूपमित्यर्थः । अथ वेत्यादिना स्वयमेव समाधत्ते—श्रीमहेश्वरानुग्रहभाजां दुर्निमित्तमप्यायतौ सुनिमित्तमेव भवति; सर्वथा शुभोदर्कमेवेतियावत् ।

( ८८ ) उग्रसेनोपि हृदयकम्पलक्षणं दुर्निमित्तमद्धा भणति ।

( ८९ ) वसुदेवोपि तथाविधमेवापशकुनमावदति 'ममापी'त्यादि ।

(९०) बलरामस्तु वामभुजस्फुरणमाभाष्य सर्वैः साकं सचिन्तस्तिष्ठति ।

वसुदेवः—[११]किं निमित्तमनिशं शिवङ्करं किं निमित्तमथवाऽशिवङ्करम्।।
वेद्मि नैतदिति, वेद्मि केवलं शङ्करस्मरणमेव शङ्करम् ।। ४२ ।।

उग्रसेनः—( [१२]सहर्षम् ) वसुदेव ! सम्यक् स्मारिता दुर्निमित्तप्रतिक्रिया, तथा कुर्मः ।

( इत्युक्त्वा सर्वे समुत्थाय सप्रणामम् )

शिव शिव शिव शम्भो श्रीशिवाप्राणबन्धो !
भव भव भव भूत्यै भूयसां श्रेयसां नः ।।
हर हर हर दैन्यं दुःखदारिद्र्यजन्यम्
कुरु कुरु करुणार्द्रा दृष्टिवृष्टीः समन्तात् ।। ४३ ।।

अपि च—

शिवशतानि ततानि करोतु नः शिवदया शिवया सहितः शिवः।।
यदवलोकलवेन लवे लवे नवनवा विकसन्ति शिवर्द्धयः ।। ४४ ।।

( एवमुक्त्वा प्रणम्योपविशन्ति )

---

( ९१ ) स्वाभिप्रायमाविष्कर्तुमनसो वचनं श्रोतुकामेनोग्रसेनेन 'अवहिताः स्मः श्रोतुमित्युक्ते वसुदेवः स्वनिश्चयप्रकटनेन सर्वान् विगतचिन्तान् करोति । किं निमित्तं शिवङ्करं किञ्चाशिवङ्करमिति नाहं वेद्मि, केवलं शङ्करस्मरणं शङ्करं—कल्याणकरमित्येव वेद्मि । जातेपि दुर्निमित्ते शङ्करस्मरणेन तन्निवृत्तिः सुकरैवेत्याशयः ।

( ९२ ) दुर्निमित्तप्रतिक्रियावगमेन सहर्षमुग्रसेनः समुत्थाय सममेवोत्थितैः सर्वैः सम्भूय शिवं स्तौति । शिवेत्यादि द्विस्त्रिरुच्चारणं स्वयमास्थितस्योपायस्य फलाविलम्बमाशासितुम् । भूयसां श्रेयसां भूत्यै—सम्पत्त्यै—भव, श्रेयांसि सम्पादयेत्यर्थः । दुःखदारिद्र्यजन्यं दैन्यं हर, दारिद्र्यशब्दोत्र न्यूनतापर्यायः, कृपादरिद्र इत्यादाविव । तथा च आकाङ्क्षितवस्तुप्राप्तिप्रतिबन्धकं हरेति यावत् ।

शिवं ददातीति शिवदा, तादृश्या शिवयोमया सहितः शिवः शिवशतानि ततानि—विस्तृतानि—करोतु । यदवलोकलवेन क्षणे क्षणे नवनवाः शिवर्द्धयः—कल्याणसम्पदो विकसन्तीति योजना ।

( ततः प्रविशति सोद्वेगा भद्रशीला )

भद्रशीला—( स्वगतम् )[९३]किमिदमाश्चर्यं ? वायुनापि दुःसञ्चारे श्रीकृष्णस्याप्यन्तः पुरे चोरप्रवेशः ! ! तत्रापि पुत्ररत्नस्य चौर्यमिति नाल्पं खेदस्थानम् । निवेदयामि तावन्महाराजाय ( अग्रतोऽवलोक्य ) अहो महाराजादयः सर्वेप्यस्मिन्नेवास्थानमण्डपे स्थिताः परमेश्वरं स्तुवन्ति प्रणमन्ति च । तद्गत्वा निवेदयामि । ( किञ्चिदग्रतो गत्वा ) महाराज ! महाराज ! परित्रायस्व परित्रायस्व, श्रीकृष्णस्यान्तःपुरे कश्चिच्चोरः प्रविष्टः ।

राजा—( [९४]साश्चर्यम् ) भद्रशीले ! किमेतद्ब्रवीषि ? श्रीद्वारकायां श्रीकृष्णचन्द्रप्रवलप्रभावाच्चोरशब्दोपि कुतः ? श्रीकृष्णगृहेषु पुत्रपरम्पराप्राप्तिदर्शनानन्देनोन्मत्तासि किं मत्तासि वा ?

भद्रशीला—( [९५]सास्रम् ) महाराज ! न मत्तास्मि न वोन्मत्तास्मि, सत्यं ब्रवीमि । षष्ठीजागरणमहोत्सवागतानां सुहृदां सम्बन्धिनां सम्भावनायां व्यग्रास्वस्मासु देव्यां च श्रीरुक्मिण्यां जागरण-

---

( ९३ ) प्रविश्य सोद्वेगा भद्रशीला दासी स्वगतं ब्रूते—किमिदमाश्चर्यमित्यादि । वायुनापि यत्र दुष्करः सञ्चारस्तत्र श्रीकृष्णस्यान्तःपुरे चोरप्रवेश इत्याश्चर्यनिदानम् । चौर्यमपि न यस्य कस्यचिद्वस्तुनः सुवर्णरत्नादेरपि तु पुत्ररत्नस्येत्यपरमाश्चर्यकारणम् । महाराजाय निवेदयितुमग्रतोवलोक्य महाराजादीनवलोक्य सम्बोध्य महाराजं—'परित्रायस्वे'ति द्विरुक्तिः सम्भ्रमेण—श्रीकृष्णस्यान्तःपुरे कश्चिच्चोरः प्रविष्टः इति निवेदयति ।

( ९४ ) वृत्तान्तमेनं वितथं मन्यमानो राजा—श्रीकृष्णप्रभावादत्र चोरशब्दोपि न श्रूयते; किं श्रीकृष्णगृहेषु पुत्रपरम्पराजन्मदर्शनेन उन्मत्तासि ?—इति भद्रशीलामधिक्षिपति ।

( ९५ ) भद्रशीला—महाराजेत्यादिना प्रमाणमित्यन्तेन वृत्तान्तं निवेदयति । न मत्तास्मीति वचनं वक्ष्यमाणे विश्वासार्जनार्थं । सत्यमेवब्रवीमि इति प्रतिज्ञाय, सकलजनानां व्यापारान्तरव्यग्रतया रुक्मिण्याश्च षष्ठीजागरणान्तसुलभनिद्रतया लब्धावकाशश्चोरः कुमारं जहार । प्रेङ्खोलं शून्यमवलोक्य प्राप्तमूर्च्छां रुक्मिणीमुपचरति परिजनः। अहमेनं वृत्तान्तं भवद्भ्यो निवेदयितुमागतेत्यतः परं यत्कर्त्तव्यं तत् कर्त्तुं प्रभवन्ति भवन्त इत्याशयो 'महाराजः प्रमाण' मित्यस्य ।

श्रमप्राप्तनिद्रायां कश्चिच्चोरो देव्याः श्रीरुक्मिण्याः कुमारं चोरयामास। क्षणात् प्रवुद्धा च देवी यावत्प्रेङ्खोले विलोकयतिस्म तावच्छून्यमेव प्रेङ्खोलं विलोक्य 'हा कुमारः क गतः' इति कृतार्त्तनादा मूर्च्छया शय्यायां निपतिता। तदीयार्त्तनादश्रवणव्यग्राः सर्वाः परिचारिका मूर्च्छापनयनोपचारान् कुर्वन्ति। अहं चात्याहितमेतन्महाराजाय निवेदयितुमागतास्मि, ततः परं महाराजः प्रमाणम्। (इत्युक्त्वाऽश्रूणि मुञ्चति)

महाराजः—([९६]स्वगतम्) हा!! दुर्निमित्तपरिणामोऽयमागतः (प्रकाशम्) भद्रशीले! मा खेदं कुरु, गच्छ त्वरया, समाश्वासय देवीम्। न यक्षो रक्षो देवो दानवो मानवो वा श्रीकृष्णचन्द्रस्यान्तःपुरे चौर्यं कर्त्तुं शक्तः। आसन्नमरणेन केनचित्साहसमेतत् कृतमिति मन्येऽहम्। स चोरः सद्य एव मरणमाप्स्यति, कुशली च कुमारः सद्यः समागमिष्यति; तन्मा चिन्तां कुरु।

वसुदेवः—[९७]भद्रशीले! परमानन्दविस्मृतविवेकानामस्माकमेवायं प्रमादो यद्बालग्रहरक्षोपचारा आदित एव न कृता इति। इदानीं प्रतिप्रसन्नमन्दिरं पवित्रतरब्राह्मणद्वारा श्रीशिवकवचपाठान् श्रीदुर्गासप्तशतीपाठान् श्रीरुद्राभिषेकजलमार्जनानि श्रीमहामृत्युञ्जयमन्त्राभिमन्त्रितभस्माभिवन्दनानि च कारय येन न कश्चिद् बालग्रहो भूतो वा प्रेतो वा पिशाचो वा डाकिनी वा

---

(९६) पूर्ववृत्त-वामाक्षिस्पन्दनादि-दुर्निमित्तमास्मृत्य तत्परिणामोयमिति मन्वानो महाराजः खेदमवगूह्य—गच्छ त्वरया, देवीं समाश्वासय, श्रीकृष्णान्तःपुरं प्रवेष्टुं देवादयोपि नालं किन्तु मृत्युकवलितेन येनैतत्कृतं स नचिरादेव मरणमाप्स्यति, कुमारश्च सद्य एव समागमिष्यति, तद्विषये चिन्ता न कार्येत्याह दासीम्।

(९७) वसुदेवोऽपि पूर्वमेवानुष्ठेयं बालग्रहरक्षादि प्रमादान्नानुष्ठितं येनैतदेवं जातम्। इदानीमन्यदपि किञ्चिदेवंविधं मा भूदित्याशासानः शिवकवचपाठादि कारयितुमादिशति भद्रशीलां, कुमारचोरस्य जगत्त्रयेपि न कोपि रक्षक इति सद्य एव सर्वमिष्टं भविष्यति अतश्चिन्तां विहायान्तःपुरे गत्वा रुक्मिणीमाश्वासयेति।

शाकिनी वा पुत्ररत्नानि द्रष्टुमपि शक्नुयात् । किञ्च कुमारं कुशलिनं प्राप्तमेवावेहि । अस्मद्गृहचोरस्य जगत्त्रयेऽपि कोऽस्ति रक्षकः ? तत् समाश्वासय वत्सां रुक्मिणीम् ।

भद्रशीला—यथाज्ञा आर्याणां तथा सर्वं करिष्यामि ।

( ततः प्रविशतः ससम्भ्रमौ भीमार्जुनौ )

उभौ—[९८]महाराज ! महाराज ! मातुलाः ! अप्राप्तनिवासस्थानाभ्यामेवावाभ्यां मध्येमार्गं श्रुतं यत् केनचिद्दुष्टेन प्रेङ्खोलाद् देव्या रुक्मिण्याः कुमारोऽपहृत इति ।

उग्रसेनः—अथ किम् । [९९]एषा भद्रशीलाऽधुनैवैतदत्याहितं निवेदयितुमागतास्ति ।

वसुदेवः—वत्सौ ! [१००]मा चिन्तां कुरुतं, श्रीसदाशिवेन परमया कृपया प्रदत्तं पुत्रं कोऽपहर्त्तुं प्रभवेत् ? केवलं केनचिदासन्नमरणेन स्वमरणायैवेदं चापलं कृतमिति मन्येऽहम् ।

उग्रसेनः—[१०१]वत्सौ ! पूर्वस्यां दिशि चतुरङ्गया सेनया सहितोऽहं गच्छामि, दक्षिणस्यां वसुदेवः, पश्चिमायामक्रूर, उत्तरस्यामुद्धव इति निश्चयः कृतोऽस्ति । यामार्द्धयामाभ्यन्तर एव च चोरं निहत्य कुमारं कुशलिनमानयिष्यामः । क वराकः श्रीकृष्णचन्द्रगृहे चौर्यं कृत्वा गमिष्यति ? तद्युवाभ्यां यावदस्मदागमनं सर्वे समाश्वासनीया जनाः ।

भीमसेनः—[१०२]आर्याः ! अलमार्याणां तादृशे कार्ये ईदृशश्रमग्रहणेन,

---

( ९८ ) स्थितायामेव भद्रशीलायां भीमार्जुनौ प्रविश्य—'अप्राप्तनिवासस्थानाभ्यां—अलब्धावसथाभ्यां, अधुनैवागताभ्यामितियावत्, श्रुतमावाभ्यां—यत् प्रेङ्खोलाद् देव्या रुक्मिण्याः कुमारः केनचिदपहृत' इत्याहतुः ।

(९९) उग्रसेनो भद्रशीलोक्तेन तद्वचः प्रमाणयति अथ किमित्यादिना ।

( १०० ) वसुदेवस्तु शिवप्रदत्तवस्त्वपहारे न कोपि प्रभुरिति विश्वस्तः स्वानिष्टमर्थयमानेन कृतमेतत्केनचिदित्याह वत्सावित्यादिना ।

( १०१ ) उग्रसेनः स्वनिश्चयं पाण्डवावाश्रावयति पूर्वस्यामित्यादिना ।

( १०२ ) सन्निहितेष्वस्मासु उग्रसेनवसुदेवाक्रूरोद्धवानां कुमारमार्गणार्थं दिक्षु धावनमनुचितमिति बोधयन्नाह भीमसेनः—'आर्या' इत्यादि । एता-

अहं वाऽर्जुनो वा उभौ वाऽऽवां तं चोरं पातालतलाद्वा महेन्द्रभवनाद्वा गृहीत्वा हत्वा च कुशलिनं कुमारमानयिष्यावः ।

श्रीकृष्णः—[103]आर्याः! यथाह्यार्यो भीमसेनः । अलं श्रीमत्तामेतच्चिन्तया । भीमसेनार्जुनसात्यकिकृतवर्मभिर्दुष्टचोरान्वेषणाय चतसृष्वपि दिक्षु गन्तव्यमिति मे युक्तं प्रतिभाति ।

उग्रसेन-वसुदेवौ—यथा श्रीकृष्णचन्द्र आज्ञापयेत्तथा कर्त्तव्यम् । स खलु सद्विचारपारावारपारदृश्वा वरीवरीति ।

(ततो भीमसेनार्जुनसात्यकिकृतवर्माणः प्रवद्धाञ्जा उग्रसेनवसुदेवौ प्रणम्य) यथाज्ञार्याणाम् (इत्युक्त्वा च निष्क्रान्ताः)

उग्रसेन-वसुदेवौ—[104]वत्से भद्रशीले! एहि वयमेव ब्राह्मणानाहूय सर्वोपद्रवशान्तिविधीन् कारयामः ।

भद्रशीला—यथाज्ञार्याणाम् । इत इत आर्याः! (इति वदन्ती सह ताभ्यां निष्क्रान्ता)

बलभद्रः—[105]अयि श्रीकृष्णचन्द्र! केयं ते गम्भीरता धीरता सहिष्णुता च!! दुष्टश्चोरोऽन्तःपुरं प्रविश्य पट्टराज्ञ्या देव्या

---

दृशे कार्ये आर्यैः श्रमो न ग्रहीतव्यः किन्तु वयमेव सर्वं साधयिष्याम इत्यर्थः । यद्यपि अहमेक एव शक्त एतत्कर्तुं तथापि तथाकथनमभिमानमातनोतीति 'वा'—निपातान्तरितमर्जुनस्यापि केवलस्य तत्करणसामर्थ्यमुक्त्वा 'उभौ वाऽऽवा' मित्यनेन कैमुतिकेनादूरभाविनीमर्थसिद्धिं गदति—'पातालतलाद्वे'त्यादिना ।

(१०३) भीमसेनवचोनुमोदमानः श्रीकृष्णः स्वमतं प्रकटयन्नाह 'आर्याः' इत्यादि । भीमसेनार्जुनसात्यकिकृतवर्म्मभिर्यथासङ्ख्यं प्राच्यादिषु चतसृष्वपि दिक्षु गन्तव्यमित्ययं कल्पः सम्मतो ममेत्यर्थः ।

(१०४) यदा खलु श्रीकृष्णोक्तमनुमोदितमुग्रसेनवसुदेवाभ्यां तदा भीमसेनप्रभृतय उग्रसेनवसुदेवौ प्रणम्य 'यथाज्ञार्याणा' मित्युक्त्वा निष्क्रान्ताः । अनन्तरमुग्रसेनवसुदेवावपि भद्रशीलया दर्शितमार्गौ, 'ब्राह्मणानाहूय सर्वोपद्रवशान्तिविधीन् कारयाम' इति निजसङ्कल्पं जल्पन्तौ भद्रशीलया सहैव निष्क्रान्तौ ।

(१०५) इदानीं बलभद्रः श्रीकृष्णस्य निरुद्वेगतायां विस्मयमानः पृच्छति । का इयं ते गम्भीरता यन्नाल्पखेदस्थाननिदाने दुष्टचोरस्यान्तःपुरप्रवेशेऽपि न ते खेद उपलक्ष्यते । का च ते इयं धीरता यत्पट्टराज्ञ्या अन्तः

रुक्मिण्या एव कुमाररत्नमपहृत्य पलायित इति नाल्पं खेदस्थानं नाल्पं व्रीडास्थानं नाल्पं च परिहासास्पदं; सत्यपि तथा त्वं त्वपरिम्लानमुखमुद्रः पूर्ववदेव आनन्दमग्नो लक्ष्यसे, मम तु ताम्यन्त्यङ्गानि क्थ्यत इवात्मा शुष्यतीवानन्दसमुद्रो न किञ्चिद्रोचते, क्व कदा वा कुमारस्यापहर्त्तारमन्विष्य तं हत्वा, स राक्षसश्चेन्नीराक्षसं, स यक्षश्चेन्निर्यक्षं, स दानवश्चेन्निर्दानवं स दैत्यश्चेन्निर्दैत्यं च जगत्त्रयं करोमीति स्फुरति भुजयुगलम्। परं भवदीया क्षमा भवदीया शान्तिर्भवदीया निरुद्वेगलेशता च मां विस्मयपयोराशौ मज्जयति; ततः पृच्छामि—ईदृशेऽपि शत्रुकृते पराभवे कथं निरुद्वेगलेशोसीति ?

श्रीकृष्णः—( [१०६]प्रहस्य ) आर्य ! शृणु मे निरुद्वेगताकारणम्—

श्रीशङ्करेण करुणामृतसागरेण
प्रेम्णा स्वयं करुणया तनयाः प्रदत्ताः ॥

---

पुरमर्यादाभङ्गेऽनल्पव्रीडास्पदरूपेऽपि न व्याकुलतागन्ध इति धीरतावधिः। केयं च ते सहिष्णुता यदपहृत्य कुमाररत्नं पलायितेऽपि तस्मिंश्चोरे—द्रव्यापहारेपि राज्ञो राजकिंकराणाञ्च प्रमादपारवश्यमनुमिनोति लोकः किं पुनर्जातमात्रापत्यापहारेऽप्यसञ्चेष्टतः कलत्रापहरणापदापकृष्यते ? इति लोकानामुपहासास्पदत्वेऽपि नामर्षोद्भव इति सहिष्णुताऽतिरेकः। इत्येवं श्रीकृष्णस्य अनन्यादृशप्रकृतित्वमन्वाह-त्वन्तु अपरिम्लानमुखमुद्रः पूर्ववदेवानन्दमग्नो लक्ष्यसे इति। अत्र 'कार्याजनिः कारणेऽपी' ति विभावनालंकृतिः। स्वाशयं प्रकटयति—मम तु ताम्यन्ति अङ्गानि इति वस्तुवृत्तोक्तिः। क्थ्यत इवात्मेत्यत्र इवप्रयोगेण वस्तूत्प्रेक्षा। शुष्यतीत्यपि तथैव। न किञ्चिद्रोचते इत्युद्वेगदशावेदनम्। क्व कदेत्यादि स्फुरति भुजयुगलमित्यन्तं स्वोत्साहस्वरूपनिरूपणम्। एतावतापि क्षमा शान्तिर्निरुद्वेगलेशतेति मां विस्मयपयोराशौ मज्जयति ततः पृच्छामि। प्रश्नाक्षराणि निगदति 'ईदृशेऽपी' त्यादि 'निरुद्वेगलेशोसी'त्यन्तम्।

( १०६ ) श्रीकृष्णो बलभद्रस्यापातदर्शित्वं विभाव्य प्रहस्य तदीयविस्मयापनोदनोपयोगि स्वनिरुद्वेगताकारणमाचष्टे। शृण्वित्यादिना। स्वंभावत एव करुणासागरेण शङ्करेण, तत्रश्च करुणयेत्युक्तिः क्षीरसागरेण क्षीरस्येव करुणासागरेण करुणाया यथेष्टं व्ययः सुकर इति बोधनाय, तत्रापि प्रेम्णा सानन्दं स्वयं, नत्वन्यप्रेरणया प्रदत्ताः—पूर्वोक्तप्रकर्षेण दत्ताः—ये तनयाः

ये तेषु चैकमपि कः परिहर्त्तुमीशो
लोकत्रयेपि दनुजो मनुजोऽसुरो वा? ॥ ४५ ॥
भ्रातस्तथापि तनयोऽपहृतो ह्यकस्मात्
केनापि सापि परमेशितुरेव लीला ॥
तस्याद्रिराजतनयाहृदयेश्वरस्य
प्रायोऽस्मदीयमुदयं विविधं विधातुम् ॥ ४६ ॥
[107]रक्षामणौ जगति जाग्रति विश्वरक्षां
कर्त्तुं शिवासहचरे परमेश्वरेऽस्मिन् ॥
चिन्तैव का वद तदीयपदाम्बुजैक-
लग्नात्मनां न इह शङ्कररक्षकाणाम् ॥ ४७ ॥
किञ्च—यद् यद् भवे भवति तत् परमेश्वरेच्छा-
मालम्ब्य सर्वमशुभं च शुभं च सर्वम् ॥
तस्मादवाप्तमशुभं शुभमेव मन्ये-
नेच्छा यतोऽस्य निजभक्तजनाशुभाय ॥ ४८ ॥

---

तेषु एकमपि तनयं हर्त्तुं दनुजमनुजासुराणामन्यतमोपि नेशः। लोकत्रयेपीत्युक्तिर्देवनागादीनां गर्भीकरणाय ॥ ४५ ॥

हे भ्रातः! तनयः केनापि हृतस्तदपि अस्मदीयं विविधमुदयं विधातुं परमेशितुः प्रायो लीलैवेति मन्ये इति शेषः। लीलाविहरणेषु अद्रिराजतनयाहृदयेश्वरत्वविशिष्टस्यैव परशिवस्य हेवाकित्वेन तादृशविशेषणोपादाने परिकरालंकृतिः ॥ ४६ ॥

(१०७) स्वस्य निरुद्वेगतानिदानभूतमात्मनिश्चयं प्रणिगदति श्रीकृष्णः—रक्षामणाविति—परशिवे रक्षामणित्वारोपेण द्रव्यस्य तैलादेः सांसिद्धिकद्रवत्वादिगुणवद्यस्य जगद्रक्षणमयत्नसिद्धं—नैसर्गिकमेवेति बोधितं—तादृशे शिवासहचरे—शक्तिरिक्तस्य रक्षणवार्त्ताप्यनुपपन्नेति स्वशक्तिसहचरिते श्रीपरमेश्वरे अस्मिन्=हृदि सन्निहिते=विश्वरक्षां कर्तुं जगति जाग्रति सति तदीयपदाम्बुजैकलग्नात्मनां, शङ्करो रक्षको येषां तादृशाणां च नोऽस्माकं चिन्तैव का? कीदृशीति वद। किञ्च अस्मिन् भवे संसारे शुभमशुभं वा भवति तत्सर्वं परमेश्वरेच्छामालम्ब्य भवति, तस्मात् परमेश्वरात् (सकाशाद्) अवाप्तं प्राप्तमशुभमपि शुभमेव मन्ये, यतोऽस्य महेश्वरस्य निजभक्तजनस्याशुभं कर्तुमिच्छा नैवस्यादित्येष निश्चय एव मे निरुद्वेगताकारणमित्याशयः ॥

एव निश्चय एव मे निरुद्वेगताकारणम् ।

बलभद्रः—श्रीकृष्णचन्द्र ! धन्योसि खलु श्रीमहेश्वरानन्यभक्तानामग्रेसरोसि—

[108]सन्त्येव शङ्करपदाम्बुजयुग्मभक्ता
लोकत्रयेपि शतशोथ सहस्रशो वा ॥
श्रीकृष्णचन्द्र भगवंस्त्वमिव त्वमेव
श्रीमन्महेश्वरपदाम्बुजबद्धबुद्धिः ॥ ४९ ॥
तदतः परमावाभ्यामिदानीं किं कर्त्तव्यम् ?

श्रीकृष्णः—[109]आर्य ! आवाभ्यान्तु—

शिवचरणसरोजद्वन्द्वमाधाय चित्ते
गलितनिखिलचिन्तोद्वेगवेगाशयाभ्याम् ॥
निजजनसुखदः श्रीराजराजेश्वरोऽर्च्यो-
ऽखिलजगदुपशान्त्यै श्रीशिवास्वान्तकान्तः ॥ ५० ॥

बलभद्रः—साधु कृष्णचन्द्र ! साधु, तर्हि श्रीराजराजेश्वरमन्दिरमार्गं मे दर्शय ।

श्रीकृष्णः—इत इत आर्यः ( इति वदन् बलभद्रेण सह निष्क्रान्तः )

( ततः प्रविशत्युद्विग्ना मायावती )

मायावती—[110]अहो महेश्वरीमहेश्वरयोरपि वचनानि मिथ्या भवन्ति!!

---

( १०८ ) इदानीं बलभद्रः श्रीकृष्णोक्तमाकर्ण्य तन्निश्चयं प्रशंसन्नाह धन्योऽसीत्यादि । लोकत्रयेपि शङ्करपदाम्बुजयुग्मभक्ताः शतशः सन्त्येव तत्रापि भगवन् ! श्रीमन्महेश्वरपदाम्बुजबद्धबुद्धिस्तु त्वमिव त्वमेवेत्यनन्वयः । स्वपरिकल्पितयुद्धसन्नाहाद्यनादरेण श्रीकृष्णमुखादुपायान्तरं जिज्ञासमान इव पृच्छति—"तदतः परमावाभ्यामिदानीं किं कर्त्तव्यमिति ।

( १०९ ) उपायमेव विवृण्वानः श्रीकृष्ण आह 'आर्य' इत्यादि । हे ज्येष्ठबन्धो ! आवाभ्यान्तु शिवचरणसरोजद्वन्द्वं चित्ते आधाय गलितनिखिलचिन्तोद्वेगवेगाशयाभ्यां निजजनसुखदः श्रीशिवास्वान्तकान्तः श्रीराजराजेश्वरः ( न केवलमात्मोपद्रवमात्रशमनाय किन्तु ) अखिलजगदुपशान्त्यै अर्च्यः; नान्यदुपायान्तरमनुष्ठेयमिति योजना ।

( ११० ) श्रीकृष्णोक्तोपायानुष्ठानाय त्वरमाणो बलभद्रः श्रीकृष्णेनैव

नैवं घटते । परमानन्दमये श्रीमहेश्वरीपाणिग्रहणसमये मया सप्रणामं प्रार्थितः श्रीमहेश्वरः श्रीमहेश्वर्याः कर्णे प्रोक्तवान् ' श्रीमहेश्वरी च श्रीमहेश्वरोक्तं मत्कर्णे प्रोक्तवती, तदनन्तरं च दयार्द्रया दृशा मां विलोक्य श्रीमहेश्वरेणोक्तम् ।

' यथैव प्रोच्यते देव्या तथैवाचरिते सति ॥
वत्से ! ते भविताऽवश्यं प्राणप्रियसमागमः ॥ ५१ ॥
मायाशतविदं हन्तुं नाऽमायाशतवित् क्षमः ॥
मायाशतं त्वया तस्माज् ज्ञातव्यमसुरात् ततः ॥ ५२ ॥
तच्च त्वत्पतये देयं तत्र प्राप्ताय सत्वरम् ॥
ततस्तं स्वरिपुं हत्वा प्राप्ता सुखपरम्पराः' ॥ ५३ ॥ इति ।

[111]मयापि तदाज्ञानुसारेण—

भक्ष्यभोज्यचोष्यलेह्यविनिर्माणकलाः कलाः ॥
सादरं प्रतियच्छन्त्या ज्ञातं मायाशतं ततः ॥ ५४ ॥

---

दर्शितराजराजराजेश्वरमन्दिरमार्गो भगवता सहैव निष्क्रान्तस्तदा कामकलत्रस्य रते रूपान्तरतापन्नाया मायावत्याः प्रवेशमुपनिबध्नाति कविः प्रसङ्गसङ्गत्यै । मायावत्या उद्वेगकारणन्तु शिवोदितसमयात्ययशङ्का, तां पुनः सा स्वयमेव समाधत्ते—' अहो ' इत्यादिना । महेश्वरीमहेश्वरपदोपादानेन तद्वचने मिथ्याभावासम्भव एवोक्तो 'नैवं घटते ' इति वचनेन । समयविशेषे प्रोक्तस्य वचनस्य समयविशेषसम्बन्धजनितातिशयवत्त्वं स्मृतिमानयति । श्रीपार्वतीपाणिग्रहणसमये रत्या प्रार्थितेन महेश्वरेण श्रीमहेश्वर्याः कर्णे यदुक्तं, तदुपायतथैव च महेश्वरोक्तं महेश्वरी रत्याः कर्णे प्रोक्तवती तदेव पुनर्महेश्वरेण रतिं प्रति सूचितम् । यथा देव्या प्रोच्यते तथा आचरिते ते प्राणप्रियसमागमोऽवश्यं भवितेति धृतिदानेनाश्वास्य-रहःकथितमुपायं साक्षात्सहेतुकमाभणति—मायाविदं हन्तुं माय्येव प्रभवतीति त्वयाप्यसुरात्ततः मायाशतं ज्ञातव्यमिति । तच—मायाशतं—त्वत्पतये देयमुपदेष्टव्यमित्यर्थः । ततः प्राप्तमायाशतः स ( त्वत्पतिः ) स्वरिपुं हत्वा—मायाबलेन जित्वा—सुखपरम्पराः प्राप्स्यतीत्यवगमनम् । ' व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः । ' इति भारविवचोप्येतामेव नीतिमनुरुन्धे ।

( १११ ) इदानीं मायावती ज्ञातमायाशता पत्ये उपदेष्टुं त्वरमाणेव ब्रूते—तदाज्ञानुसारेण—शिवाज्ञामनुसृत्य—मयापि ततः असुरात्, कलाः—मनोहराः लेह्यादिनिर्माणकलाः सादरं प्रतियच्छन्त्या ( तिलेभ्यः प्रतियच्छति माषामिति-

परं कस्मै समर्पयामि ? नाद्यापि मे प्राणप्रियोऽत्राऽऽगतः ।
[११२]कति युगानि गतानि महेश मे स्मरहर स्मर हे स्मरमन्तरा ॥
त्रुटिरपि प्रणतप्रिय चाद्य मे युगशतायत एव विना पतिम् ॥५५॥
तत् कृपां मयि विधाय कृपाब्धे प्रेषय प्रणतपाल पतिं मे ॥
आशुतोष कथमद्य न तुष्यस्यत्र ते पदपरेपि जनेऽस्मिन् ॥ ५६ ॥
अपराधशतानि विस्मर स्मरशत्रो ! स्मरनिर्मितानि चेत् ॥
प्रणतप्रियतामवेक्ष्य ते प्रणतायां मयि माऽदयो भव ॥ ५७ ॥

( इति वदन्ती मूर्छया पतति—क्षणादेव पुनः सञ्ज्ञामुपलभ्य )

शिव[११३]शिव शिव शम्भो नात्र लब्धः पतिर्मे
प्रबलतरकुकृत्यैर्मामकीनैर्महेश ! ॥

---

वत्प्रयोगसाधुता ) ज्ञातं मायाशतं; परं कस्मै समर्पयामि, नाद्यापि प्राणप्रियो मेऽत्रागतः इति विमृशति । एतावता कालप्रतीक्षणेनापि स्वप्राणपतेरनागमनमेवेदं 'कथं महेश्वरीमहेश्वरयोरपि वचनानि मिथ्या भवन्तीति' शङ्काबीजम् ।

( ११२ ) स्वमनोरथस्य सद्यः सिद्धये मायावती महेश्वरमभिष्टौति । हे स्मरहर ! स्मरं विना मे कति युगानि गतानि इति स्मर, पतिं विना अद्य मे त्रुटिरपि युगायते, हे प्रणतप्रिय ! । तत् हे कृपाब्धे ! मयि कृपां कृत्वा, कृपासमुद्रस्य कृपाकरणमलोभेनैव सुकरमित्यर्थः, मे प्राणपतिं प्रेषय, हे प्रणतपाल आशुतोष ! आभ्यां सम्बुद्ध्यन्तविशेषणाभ्यां विलम्बासहत्वमावेदितं भगवतः । ते पदपरेऽपि अस्मिन्—मल्लक्षणे—जने अत्र समये कथं न तुष्यसि अद्य—अद्यापीत्यर्थः । स्मरनिर्मितानि अपराधशतानि चेत् स्युस्तथापि तानि विस्मर हे स्मरशत्रो ! अत्र रतिमुखेन स्मरशत्रो इति सम्बोधनोच्चारणं, त्वं स्मरस्य शत्रुरपि—ते प्रणतप्रियतामवेक्ष्य प्रणतायां मयि अदयो मा भवेत्यग्रेतनवाक्येन शिवस्य सद्य आनुकूल्यापादनार्थम् ।

( ११३ ) पूर्वोक्तवचनान्ते रतिर्मूर्छापतिता पुनरचिरेणैव सञ्ज्ञामुपलभ्य—मामकीनैः प्रबलतरकुकृत्यैरत्रजन्मनि मया पतिर्न लब्धः । शिवेति त्रिरुच्चारणं खेदातिशयनिर्वेदयोर्द्योतकम् । अतः हे देवदेव ! हे अनाथनाथ ! हे दयाब्धे ! परजन्मनि स पतिराशु देय इति मे चरमाऽभ्यर्थना । एवमुक्त्वा प्राणत्यागाय केशैर्गले उद्बन्धनं यावत् कर्तुमिच्छति तावदेव वामाक्षिस्फुरणेन भाविशुभसूचनं मत्वा 'मरणं तु यदा कदाऽपि सुसाध्यमेव परन्तु एतेन सुनिमित्तेन कदा-

परजनुषि दयाब्धे ! देवदेवाऽऽशु देयः
पतिरिति चरमा मेऽभ्यर्थनाऽनाथनाथ ! ॥ ५८ ॥

( इत्युक्त्वा केशैर्गले उद्बन्धनं कर्तुमिच्छति—तावदेव—वामाक्षिस्फुरणमभिनीय ) किमेतत् सुनिमित्तमस्यां वेलायां ! सुलभं मरणं, दुर्लभः प्रियतमसमागमस्तत् क्षणं विलम्बमवलम्बे । ( इत्युक्त्वा उद्बन्धनमुन्मुञ्चति )

( नेपथ्ये )

मातर्मायावति ! कपाटमुद्घाटय ( इति कपाटमङ्गुल्या प्रहरति )

मायावती—( नेत्रे चेलाञ्चलेन प्रमृज्य ) कोऽस्ति भोः ! ( इति वदन्ती कपाटमुद्घाटयति )

राजसेवकः—( प्रविश्य ) मातः ! पश्यैष महामत्स्यः केनचित् कैवर्त्तकेन [114]महाराजायाधुनैवोपायनीकृतः ।

मायावती—उपायनयोग्य एवायं मत्स्यः । ततस्ततः ?

सेवकः—[115]ततो महाराजेनाऽऽज्ञप्तोऽहम् ' एष मत्स्योऽद्यैव संस्कार्य ' इति मायावत्यै कथयेति ।

मायावती—यथाऽऽज्ञा महाराजस्य तथा करिष्यामि ( इत्युक्त्वा मत्स्यं सुवर्णपात्रे गृह्णाति )

सेवकः—देवि ! गच्छामि ( इत्युक्त्वा निष्क्रान्तः )

---

चिन्नचिरेणैव प्रियतमसमागमः स्यात्तदुपेक्षणं न साम्प्रतमतः क्षणं प्रत्यवेक्षे ' इत्युद्बन्धनमुन्मुच्य प्राणत्यागाध्यवसायाद्विरमति तावदेव नेपथ्ये कश्चिद्राजसेवकः कपाटमंगुल्या प्रहरन् ' मातर्मायावति ! कपाटमुद्घाटय ' इति यदाऽऽह तदा मायावती कपाटमुद्घाटयति ।

( ११४ ) कपाटे उद्घाटिते राजसेवकः प्रविश्य महामत्स्यमग्रे निधाय निवेदयति मातरित्यादि । एष महामत्स्यः केनचित्कैवर्त्तकेन अधुनैव महाराजायोपायनीकृतः ।

( ११५ ) मायावत्या तं महामत्स्यं पश्यन्त्या ' उपायनयोग्य एव अयं मत्स्य ' इत्युक्ते, सेवकः—' एष मत्स्यः अद्यैव संस्कार्य ' इति भवत्यै कथयितुमहमाज्ञप्त इत्याह ।

मायावती—( [११६]वामाङ्गवामाक्षिस्फुरणमभिनयन्ती छुरिकया महामत्स्यं विदार्य तत्र च बालं विलोक्य )

( स्वगतम् ) मत्स्योदरेऽयमतसीकुसुमप्रभाभो
बालो विलोक्यत इहामललोलनेत्रः ॥
जीवन् कथं नु चिरमत्र लभेत वृत्ति-
मित्येष मे मनसि विस्मयमातनोति ॥ ५९ ॥

अहो !! कुतो महामत्स्यस्योदरे जीवतो बालकस्य सम्भवः !! किमेतदाश्चर्यम् ! कस्मा एतत् पृच्छामि ? को मे संशयमपनुद्यात् ? ।

( आकाशे )

पतिरयं तव नूतनविग्रहः सुखकरो भविता तव हे रते ! ॥
नहि महेश्वरवाग् वितथा भवेन्न शिवभक्तिलताप्यफला भवेत् ६०

तत एनं बालं पालय पोषय लालय, प्राप्तयौवनस्य चास्य मायाशतं शिक्षय तेन तस्य विजयोऽभ्युदयश्च सेत्स्यति ।

( इत्युक्त्वा विरमति )

मायावती—( [११७]सानन्दम् ) नमोऽव्यक्तस्वरूपायै भगवत्यै गगनवाण्यै ॥

( इत्युक्त्वा तं कुमारं मणिमयमञ्जूषायां निधाय )

---

( ११६ ) 'यथाज्ञा महाराजस्य' इत्युक्त्वा मायावत्या यदा स महामत्स्यः सुवर्णपात्रे गृहीतस्तदा मायावतीमापृच्छ्य सेवके गते तं महामत्स्यं छुरिकया विदारयन्ती वामाक्षिस्पन्दनादि शुभनिमित्तं प्रकटयन्ती मत्स्योदरे दृश्यमानं कुमारं वर्णयति मायावती स्वगतम् । इह मत्स्योदरे अतसीकुसुमप्रभयासदृशी आभा—देहकान्तिर्यस्य, अमले लोले च नेत्रे यस्य तादृशः अयं बालो विलोक्यते । अयं बालः अत्र मस्योदरे जीवन् सन् कथं चिरं वृत्तिं लभेत इत्येष बालो मे मनसि विस्मयमातनोति । विस्मयमेव प्रथयति—अहो महामत्स्योदरे जीवतो बालकस्य कुतः सम्भवः, किमेतदाश्चर्यमित्यस्य—कीदृशमेतदाश्चर्यमित्यर्थः । कस्मै एतत्पृच्छामि यो मे संशयमपाकुर्यादिति यावद्विचारयति तावदाकाशवाणी—हे रते ! नूतनविग्रहोऽयं ते पतिस्तव सुखकरो भविता, हि—यतो—महेश्वरवाग् वितथा न भवेत् नापि शिवभक्तिलता विफला भवेत् । तत एनं बालं पालय पोषय लालय, प्राप्तयौवनस्य चास्य मायाशतं शिक्षय, तेन तस्य विजयः अभ्युदयश्च सेत्स्यतीत्यादिश्याऽशरीरिणी वागुपरता ।

( ११७ ) तामेतामाकाशवाणीं श्रुत्वा प्रहृष्टा मायावती 'नमोऽव्यक्त-

अधुना सन्निहितो भोजनावसरस्तन्महानसं गत्वा सूदान् आज्ञापयामि महामत्स्यमेनमुपस्कर्तुम्। (इत्युक्त्वा निष्क्रान्ता।)

([118]ततः प्रविशति रुक्मिण्या सहितः श्रीकृष्णः)

श्रीकृष्णः—[119]देवि! किमित्यमन्दानन्दनिमग्नेव लक्ष्यसे? विधृत-दिव्यभव्यवस्त्रालङ्कारा च कुत्र गन्तुमिच्छसि?

रुक्मिणी—[120](सहर्षम्) अद्यतनानन्देऽप्यनभिज्ञो मे प्राणनाथः? आश्चर्यमाश्चर्यम्!!

श्रीकृष्णः—[121]देवि रुक्मिणि! परमशिवप्रसादेन नित्यानन्दमग्ना-नामस्माकमद्यतनानद्यतनानन्दयोर्गणनैव क्वास्ति।

रुक्मिणी—तर्हि शृणोतु मे प्राणनाथः।

श्रीकृष्णः—अवहितोऽस्मि श्रोतुम्।

रुक्मिणी—[122]देव्या जाम्बवत्याः पुत्रो वत्सः साम्बः स्वस्मिन्ननुरक्तां कुरुकुलमहाराजस्य दुहितरं स्वयंवरे जहार।

---

स्वरूपायै (अत्र स्वपदेन वक्तृव्यक्तिरुच्यते तथा च) अदृष्टवक्तृरूपायै (इष्टोदन्तश्रावणेन) भगवत्यै गगनवाण्यै नमः' इति नमस्कारेणाकाशवाणीं सम्पूज्य तं च कुमारं मणिमयमंजूषायां निधाय 'अधुना सन्निहितो भोजनाव-सर' इत्यादि सापदेशं व्याहरन्ती महामत्स्योपस्काराय सूदानादेष्टुं महानसं गन्तुं निष्क्रान्ता।

(११८) एकतः श्रीकृष्णः अन्यतश्च रुक्मिणी प्रविशतीत्यर्थः।

(११९) दिव्यवस्त्राभरणादिधारणनिमित्तमजानानः श्रीकृष्णः पृच्छति देवि! इत्यादिना कुत्र गन्तुमिच्छसीत्यन्तेन।

(१२०) अतिमहतोऽस्यानन्दावसरस्यानभिज्ञं श्रीकृष्णमाक्षिपन्तीवाह रुक्मिणी सहर्षम्—कृष्णाय आनन्दोदन्तं निवेदयितुं लब्धावसराया युक्तमेव सहर्षत्वम्—अद्यतनानन्देऽपीत्यपिना एतादृशवृत्तान्तस्तु श्रीमता पूर्वमेव विदितो भवेदस्माभिस्तु श्रीमन्मुखादेवावगम्येतेत्याशयः। अत एव आश्चर्यमाश्चर्यमिति वीप्सया विस्मयो द्योत्यते।

(१२१) श्रीकृष्णस्तु रुक्मिणीमानन्दवशामुपहसन्निवाह—देवि! पर-मशिवप्रसादेन नित्यानन्दमग्नानामस्माकं तादृशशाश्वतिकानन्दलाभे अद्यतनत्वा-नद्यतनत्वादिवैशिष्ट्यभाजः सातिशयानन्दस्य क्वैव गणना—न क्वाप्यस्तीत्यर्थः।

(१२२) तर्हि शृणोतु मे प्राणनाथ इति रुक्मिण्या कृतार्थनाय 'अव-

**श्रीकृष्णः**—( सहर्षम् )[१२३]वत्सेन साम्बेन मत्पुत्रत्वं सफलं कृतम् । ततस्ततः ?

**रुक्मिणी**—ततः कर्णदुर्योधनाद्यैर्महारथैः सह युद्धं साम्बस्य प्रवृत्तम् ।

**श्रीकृष्णः**—[१२४]अत्र कः सन्देहः । भवेदेतदेवमेव । ततस्ततः ?

**रुक्मिणी**—ततो द्वन्द्वयुद्धे वत्सेन साम्बेन पराजितास्ते सर्वे सम्भील्यान्यायेन साम्बं बबन्धुः ।

**श्रीकृष्णः**—[१२५]अधर्मयुद्धमेतत् । ततस्ततः ?

**रुक्मिणी**—ततः कुरूणामन्यायं श्रुत्वा कुरून् विजेतुं सेनया सहिताः सज्जाः सर्वेपि यादवकुलमहारथाः ।

**श्रीकृष्णः**—युज्यत एवैतन्निष्प्रतिमपराक्रमाणां यादवमहारथानाम् । ततस्ततः ?

**रुक्मिणी**—तत[१२६]उभयेषां शान्तिमिच्छन्तः सरलतरस्वभावा आर्या बलभद्रा उद्धवादिभिः सह हस्तिनापुरं गताः ।

---

हितोस्मि श्रोतु'मिति दर्शिताभिमुख्याय कृष्णाय साम्बाचरितं लक्ष्मणाहरण—वृत्तान्तं कथयति । देव्या जाम्बवत्याः पुत्रः साम्बः स्वस्मिन्ननुरक्तां कुरुकुलमहाराजस्य—दुर्योधनस्य—दुहितरं ( लक्ष्मणां ) स्वयंवरे ( सम्प्रवृत्ते इत्यध्याहार्यम् ) जहार ।

( १२३ ) साम्बेन मत्पुत्रत्वं सफलं कृतमित्यस्य—यथा त्वमपि मया भवानीमन्दिरादपहृता एवं साम्बेनापि तां राजकन्यामपहरता पितरमनुसरता मम पुत्रता सफला कृतेति भावः । 'पैतृकमनुहरन्ति पुत्रा मातृकं दुहितर' इतिन्यायानुरोधिपुत्रधर्मावगमेन सहर्षत्वम् । जिज्ञासाकुलः पृच्छति 'ततस्तत' इति ।

( १२४ ) कर्णदुर्योधनाद्यैर्महारथैः साम्बस्य युद्धं प्रवृत्तमिति रुक्मिण्योक्ते 'एतदेवमेव भवेदत्र कः सन्देहः' इति वदतो भगवतः, कन्यापहारे कन्यापितृपक्षीयानां समुत्थानं भवेदेवेत्याशयः ।

( १२५ ) द्वन्द्वयुद्धे हि अभिषेणयितारमन्तरेणान्तरे न कोऽप्यतिपतेदिति समयबन्धस्तत्र सम्भूय सर्वेषामेकं प्रत्यभिषेणनमन्याय इत्यत उक्तमधर्मयुद्धमेतदिति धर्मादपेतमिति यावत् ।

( १२६ ) यदा 'कुरूणामन्यायं श्रुत्वा तान् जेतुं यादवकुलमहारथाः सेनया सह सन्नद्धा' इति रुक्मिण्या कथितं तदा 'युज्यत एवैत'दित्यादि

श्रीकृष्णः—( सपरितोषम् )[१२७]सम्यगेतत् कृतमार्यैर्मे। परस्परं गाढसम्बन्धबद्धानां कुरूणां यदूनाञ्च मिथो युद्धमेव न शोभते। ततस्ततः ?

रुक्मिणी—[१२८]नाथ! प्रथमं मदान्धतयाऽनादृतार्यवचना अपि क्षणादार्यैः प्रदर्शिते प्रभावे प्रणम्य सवधूकं साम्बमार्येभ्यः समर्पयामासुः।

श्रीकृष्णः—को वाऽस्मदार्यचरणानां वचनानि नाङ्गीकुर्यात्? ततस्ततः?

रुक्मिणी—तत[१२९] इदानीमार्यैः परिरक्षितो बद्धमुक्तो वत्सः साम्बः सवधूकोऽत्र समागतोऽस्तीति परमानन्दसमुद्रो मनसि मे समु-

---

क्षात्रधर्मानुरूपमाचरणमनुमोदमानेन कृष्णेन कथितं परन्तु युद्धवार्त्ताश्रवणजन्योद्वेगवेगितान्तःकरणोऽग्रेतनवृत्तजिज्ञासुः पृच्छति 'ततस्तत' इति। तामेतामस्याकुलतां शमयन्ती रुक्मिणी ब्रूते—उभयेषां कुरूणां यदूनाञ्चेत्यर्थः। शान्तिमिच्छन्त इति हि स्वैरं हास्तिनपुरगमने निमित्तम्। न पुनर्निर्बलत्वादिहेतुनेत्यभिप्रायः। सरलतरस्वभावत्वमेव शान्तीच्छाप्रयोजकीभूतं तत्रापि मन्त्रपण्डितैरुद्धवादिभिः सह तत्र गमनं स्वेष्टपरिणामस्य साधनसौकर्य्याय। आर्या बलभद्राः इति रुक्मिणीमुखेन बहुवचनोच्चारणं ज्येष्ठत्वप्रयुक्तगौरवावेदकमिति।

( १२७ ) गाढसम्बन्धबद्धानामित्युभयेषां हेतुगर्भं विशेषणम्, तादृशसम्बन्धवतां मिथो युद्धमेव न शोभते इत्युत्तरवचस उपपादनाय। सम्यगेतत् कृतमार्यैर्मे बलभद्रैरिति परितोषावेदनम्। शेषावतारस्य सुलभकोपस्य रामस्य परकृतावहेलनासहिष्णुतया तदुक्तानङ्गीकारे भवेत् कदाचित्पुनर्युद्धापत्तिरिति शङ्काकुलः पृच्छति 'ततस्तत इति।

( १२८ ) तामाशङ्कां निवर्तयति रुक्मिणी—नाथ! मदान्धतया प्रथमं बलभद्रवचो नादृतं कौरवैस्तथापि यदा लाङ्गलव्यापारप्रावीण्यमार्यैः प्रदर्शितं तदा प्रणम्य सवधूकं साम्बमार्येभ्यः समर्पितवन्त इति।

( १२९ ) अथापि श्रीकृष्णेन विशेषजिज्ञासुना 'ततस्तत' इति प्रेर्यमाणा रुक्मिणी स्वकीयहर्षहेतुं विवृण्वती सती श्रीकृष्णमपि विनोदभागिनं कर्तुमर्थयते—तत इत्यादिना। इदानीमागतो वत्सः साम्बः सवधूक इति तमेव विलोकयितुं गच्छामि—प्राणनाथोपि ( भवानपि ) मया सह तत्रागत्य मामधिकानन्दवतीं करिष्यतीत्याशासे—इत्यनेन एतादृशविजयिपुत्रमुखदर्शनावसरे दम्पत्योस्सहावस्थानं प्रमोदातिशयजनकं भवेदित्याशयः प्रकटितः। तत्रापि

च्छलति । ततो देवीं जाम्बवतीं सवधूकं च वत्सं साम्बं विलोकयितुं गच्छामि । प्राणनाथोपि मया सह तत्रागत्य मामधिकानन्दवतीं करिष्यतीत्याशासे ।

**श्रीकृष्णः**—अत्र कः सन्देहोऽवश्यमागमिष्यामि, दर्शय मे देव्या जाम्बवत्या मन्दिरमार्गम् ।

**रुक्मिणी**—( सहर्षम् ) इत इतः प्राणनाथः ( इति वदन्ती सह श्रीकृष्णेन निष्क्रान्ता )

( ततः [130]प्रविशति साधारणवस्त्रालङ्कारा औदास्यमग्ना जाम्बवती सवधूकः साम्बश्चम्पकमाला दासी च )

**जाम्बवती**—[131]वत्स साम्ब ! वत्से सौभाग्यवति ! प्रथमं श्रीराजराजेश्वरमस्मत्कुलदैवतं प्रणम्य श्रीराजराजेश्वर्यै इयं गजमुक्ताऽर्पणीया । तदनन्तरं च देव्याः श्रीरुक्मिण्या मन्दिरं गत्वा तत्रस्थितेभ्यस्ते तातचरणेभ्यः प्रणामान् कृत्वाऽयं हीरकहारस्तत्कण्ठे-

---

सपत्नीभावेऽपि भगिनीनिर्विशेषां जाम्बवतीं निजतनयं सवधूकं वीक्ष्य प्रहृष्टान्तरङ्गां वर्द्धापयितुं गच्छन्त्या रुक्मिण्याः श्रीकृष्णसार्थोऽतीव मनस्तोषाय भवेदिति भावः । बद्धमुक्त इति पीतप्रतिबद्ध इतिवत्समासः । आर्यैः परिरक्षित इत्यनेन मध्येमार्गं कैरप्यबाधितः कुशलीति यावत् ।

( १३० ) श्रीकृष्णेन 'अवश्यमागमिष्यामि' इति स्वीकृतप्रार्थना, 'दर्शय मे जाम्बवत्या मन्दिरमार्ग'मिति च प्रेर्यमाणा रुक्मिणी 'इत इतः प्राणनाथ' इत्येवं मार्गमादर्शयन्ती श्रीकृष्णेन सह निष्क्रान्ता । तत औदास्यमग्नाया जाम्बवत्याः प्रवेशः । सवधूकपुत्रमुखदर्शनावसरे जाम्बवत्या औदास्यमग्नत्वमतीवासाम्प्रतं, तद्बीजमग्रे स्फुटीभविष्यति । चम्पकमालाया दास्याः सहागमनं राजव्यवहारोचितम् ।

( १३१ ) इदानीं जाम्बवती वधूवरावनुशास्ति वत्सेत्यादि चेत्यन्तेन । प्रथमं श्रीराजराजेश्वरमस्मत्कुलदैवतं परमशिवं प्रणम्य तत्र च श्रीराजराजेश्वर्यै इयं गजमुक्ताऽर्पणीया, ततो रुक्मिणीमन्दिरं गतेन त्वया तत्र नियतसान्निध्यं ते पितरं ( श्रीकृष्णं ) प्रणम्य अयं हीरकहारस्तत्कण्ठेऽर्पणीयः, पश्चादियमिन्द्रनीलमणिमाला ते मात्रे रुक्मिण्यै अर्पणीयेति । अत्र रुक्मिणीसम्मानने हेतुं गृणाति—देवी रुक्मिणी मत्तोऽप्यधिकं तेऽभ्युदयकाङ्क्षिणीत्यादि । दासीं सहगन्तुमादिशति चम्पकमाले ! इति ।

समर्पणीयः । पश्चात् ते मात्रे रुक्मिण्यै प्रणम्येयमिन्द्रनीलमणिमालार्पणीया । देवी श्रीरुक्मिणी स्वकीयनिःसीमवात्सल्यविवशाशया मत्तोऽप्यधिकं तेऽभ्युदयकाङ्क्षिणी विजयकाङ्क्षिणी मङ्गलकाङ्क्षिणी च । ( दासीं प्रति ) चम्पकमाले ! त्वमेताभ्यां सह गच्छ ।

चम्पकमाला—यथाज्ञा देव्या ( इत्युक्त्वोत्तिष्ठति )

जाम्बवती—वत्स [132]साम्ब ! पुनरपि वदामि, त्वयि वत्सलत्वमावहन्तीषु सर्वासु ते मातृषु देवी रुक्मिणी तु रुक्मिण्येव, ततोऽतीव तस्यां भक्तिर्विधेया । शास्त्रेष्वप्युक्तं'—पितुः शतगुणं माता भक्त्याराध्या शिवेच्छुभि'रिति तद् गच्छ मातुस्ते देव्याः श्रीरुक्मिण्या मन्दिरं, यतो देव्याः श्रीरुक्मिण्या एवाशीर्वचनैः परमेश्वराभ्यर्थनैः शुभेच्छाभिश्च त्वं कुशली सवधूकश्चात्रागतोऽसीति मन्येऽहम् ।

साम्बः—मातः ! यथायुष्मदाज्ञं श्रीराजराजेश्वरं प्रणम्य प्रथमं मातुः श्रीरुक्मिणीदेव्या एव मन्दिरं गमिष्यामि ।

( ततः [133]प्रविशति रुक्मिणी श्रीकृष्णचन्द्रेण सहिता )

---

( १३२ ) यावच्चम्पकमाला 'यथाज्ञा देव्या' इत्युक्त्वोत्तिष्ठति तावत् 'पुनरपि वदामि' इत्युपक्रम्य देव्या रुक्मिण्याः प्रीत्यतिशयं ब्रुवाणा जाम्बवती तस्यां बहुमानं सहेतुकं निगदति 'वत्से'—त्यादि । यद्यपि सर्वास्ते मातरस्त्वयि वात्सल्यं दधति तथापि रुक्मिणी तु रुक्मिण्येवेत्यनेन रुक्मिण्या वात्सल्यमनुपममेवकारेणावेदयति । तथा च तस्यामतितरां भक्तिर्विधेयेत्याह । तत्र शास्त्रवाक्यं प्रमाणत्वेनोपक्षिपति 'पितुः शतगुणं माते'त्यादि । रुक्मिण्यामनितरसाधारणसद्भावोत्पादनाय पुनरप्याह—रुक्मिण्या एवाशीर्वचनैस्तत्कृतपरमेश्वराभ्यर्थनैस्तदीयाभिरेव शुभेच्छाभिश्च त्वं सवधूकः कुशली गृहानागत इत्यहं मन्ये, तस्याः पादवन्दनादि सद्भावपूर्वकं कुर्या इत्यर्थः ।

( १३३ ) यावत्साम्बः 'मातः ! यथायुष्मदाज्ञं प्रथमं राजराजेश्वरं प्रणम्य श्रीरुक्मिणीमन्दिरमेव गमिष्यामीति' प्रतिज्ञाय निर्गन्तुमिच्छति तावदेव रुक्मिणी श्रीकृष्णेन सह प्रविशति । अत्र श्रीकृष्णपदोपरि अप्रधाने तृतीयानिर्देशेन रुक्मिण्या एवागमनं मुख्यं श्रीकृष्णस्य तु तदाग्रहेणैवेति पूर्ववृत्तान्त

रुक्मिणी—देवि जाम्ववति ! वयमेव ते मन्दिरं प्राप्ताः । वत्सं साम्वं सौभाग्यवतीं वधूं च विलोकयितुमातुरतरा मे दृष्टिः ।

जाम्बवती—( [134]साश्चर्यानन्दमुत्थाय विलोक्य च ) अहो परमकृपापारावारः प्राणनाथोऽप्यलङ्करोति मे मन्दिरम् ! ! सुदिनमिदं सुवर्णसूर्यश्चाद्य मे प्रातःसमयः ( इत्युक्त्वा रत्नसिंहासने श्रीकृष्णं श्रीरुक्मिणीं चोपवेश्य प्रणम्य राजोपचारैः सम्पूज्य—वधूवरौ प्रति ) वत्सौ ! पूजयतं परया भक्त्या मातापितरौ वाम् । गृह एव श्रीगङ्गा समागता ।

साम्बः—( [135]किञ्चिद्विलम्बमानो मातुर्मुखं विलोकयति )

जाम्बवती—वत्सौ ! मा विलम्बं कुरुतं, श्रीराजराजेश्वरीराजराजेश्वरावेव ते मातापितृरूपेणागताववेहि ।

साम्बः—यथाज्ञा श्रीमातुः ( इत्युक्त्वोभयोश्चरणकमलपूजां विधाय श्रीभगवते हीरकहारं श्रीरुक्मिण्यै चेन्द्रनीलमणिमालां समर्प्य सवधूकः साष्टाङ्गपातं प्रणमति )

उभौ—( उभयोः शिरसि कोमले करकमले निधाय सहर्षाश्रुपातम् )

---

स्मारणम् । अत एव प्रथमं रुक्मिण्येव ब्रूते—देवि जाम्बवति । वयमेव ते मन्दिरं प्राप्ताः, यतः साम्बं तद्वधूं च विलोकयितुमातुरतरा मे दृष्टिरिति हेतुकथनम् ।

( १३४ ) श्रीकृष्णमागतं दृष्ट्वा ससम्भ्रमा जाम्बवती साश्चर्यानन्दं विलोक्य उत्थाय च—परमकृपापारावारो मे प्राणनाथोऽपि मे मन्दिरमलङ्करोति ! ! ( मे इति पदं देहलीदीपवदुभयत्र सम्बध्यते ) सुदिनमद्य मे प्रातः समयश्चाद्यतनः सुवर्णसूर्योदयवानित्याद्युपचारवचांसि वदन्त्येव श्रीकृष्णं रुक्मिणीं च रत्नासने उपवेश्य सम्पूज्य वधूवरावादिशति—वत्सौ ! ( पुमान् स्त्रियेत्येकशेषः ) परया भक्त्या पूजयतं वां मातापितराविमौ, गृहे एव गङ्गा आयातेति । यत्नसाध्ये वस्तुनि अनायासोपनते गङ्गाया गृहागमनं निदर्शनीक्रियते लोकैः ।

( १३५ ) प्रथमं जाम्बवत्यैवाज्ञप्तं—यदादौ श्रीराजराजेश्वरं प्रणम्यानन्तरं रुक्मिणीमन्दिरं गत्वा तत्र स्थितयो रुक्मिणीश्रीकृष्णयोर्वन्दनं विधायेत्यादि—इदानीं पुनः सैवाज्ञापयति ' पूजयतं वां मातापितरा 'विति एवं पूर्वापरविरुद्धां मात्राज्ञामास्मृत्य यावत्साम्बो विलम्बते तावदेव पुत्राशयमाज्ञाय तदीयाशङ्कामपनिनीषुर्जाम्बवती—' वत्सौ ! मा विलम्बं कुरुतं, यतः श्रीराजराजेश्वरीं

[136]वत्स साम्ब ! सदा साम्बसदाशिवपदाश्रयात् ॥
सवधूकोऽनुभूयास्त्वं पराः सुखपरम्पराः ॥ ६१ ॥

( जाम्बवतीं प्रति ) देवि जाम्बवति ! श्रीमहेश्वरप्रसादाद् वर्धापितासि । सवधूकस्य वत्सस्य साम्बस्य मुखकमलमवलोक्य मोदामहे ।

जाम्बवती—[137]सोऽयं युवयोः प्रसादाद् वृद्धानां पुण्यप्रभावाद् गुरुजनानामाशीर्भिश्चाभ्युदयो जात इति मन्येऽहम् ( इत्युक्त्वाधोमुखी अधस्तिष्ठति )

रुक्मिणी—देवि देवि ! नेदं शोभते, मया सहैवात्र सिंहासने उपविश।
( इत्युक्त्वा बलात्तां सिंहासने उपवेशयति )

श्रीकृष्णः—प्रिये[138]जाम्बवति ! परमानन्दमयेऽप्यस्मिन् महामहोत्सवसमये कथमुदासीनेव लक्ष्यसे ?

---

राजराजेश्वरावेव ते मातापितृरूपेणागताववेहि ' इत्यादिशत् । मातापितरौ हि पार्वतीपरमेश्वरयोः प्रतिनिधित्वेनाम्नातौ शास्त्रेषु अतश्च स्वयमुपायातयोरेतयो राजराजेश्वरीराजराजेश्वरभावेनैव पूजने कृते न मदुक्तपूर्वक्रमपरित्यागशङ्कावकाश इति निःशङ्कमनुष्ठीयतामुभयोः पूजनमित्याकूतम् ।

( १३६ ) ' यथाज्ञा श्रीमातु 'रिति मातृवचः सम्मान्य सम्पूज्य रुक्मिणीश्रीकृष्णौ भगवते हीरकहारं मात्रे चेन्द्रनीलमणिमालां समर्प्य सवधूकः साम्बः प्रणमति तदा उभयोः शिरसि करकमले निधाय उभावपि सहर्षाश्रुपूरमाशिषमुद्गिरतः ' वत्से 'त्यादिना । अत्राशीर्वचनेऽपि—सदा साम्बसदाशिवपदाश्रयात् सवधूकः पराः सुखपरम्पराः त्वमनुभूया—इति कथनेन शिवप्रसादलब्धोदयाय साम्बाय तादृशाभ्युदयस्य शाश्वतिकतासिद्धये सर्वदा साम्बसदाशिवपदाश्रयणमुपदिष्टं भगवतेत्यभिसन्धिः । तदेव पुनर्जाम्बवतीवर्द्धापनेऽपि व्याहरतः ' श्रीमहेश्वरप्रसादाद् वर्द्धापितासीति ' ।

( १३७ ) ' युवयोः प्रसादा 'दिति भगवत्प्रसादमेव स्वाभ्युदये हेतुमुक्त्वा वृद्धानां पुण्यचयस्य गुरुजनाशिषां च तत्र सहकारित्वमाभाषमाणा अधोमुखी अधस्तिष्ठति जाम्बवती, तावत्तां बलादाकृष्य रुक्मिणी ' देवि नेदं शोभते ' इत्यादि वदन्ती सिंहासने एव स्वपार्श्वे तामुपवेशयति ।

( १३८ ) सोद्वेगमुखमुद्रां जाम्बवतीमालक्ष्य श्रीकृष्णस्तामुद्वेगकारणं पृच्छति—परमानन्दमयेऽप्यस्मिन् महोत्सवसमये कथमुदासीनेव लक्ष्यसे—इति ।

जाम्बवती—न[१३९]किञ्चिन्नाथ ! न किञ्चिदपि ( इत्युक्त्वाऽश्रूणि मुञ्चति )

रुक्मिणी—सखि सखि ! किमिदं कुरुषे ? असमये औदासीन्यमुद्भाव्य प्राणनाथमप्यौदासीन्यमग्नं कुरुषे; किमेतदुचितं ते ?

जाम्बवती—कल्याणि ! जानामि खलु नैतदुचितं, परं किङ्करोमि ? नाहमौदासीन्यमुद्भावयामि स्वयमेवैतदौदासीन्यमुद्भवति, तत्र को मेऽपराधः ?

श्रीकृष्णः—( [१४०]साश्चर्यम् )

प्राणप्रिये मयि सति प्रणतप्रिये श्री-
शम्भौ प्रसादसुमुखे विपुले च राज्ये ॥
पुत्रेषु साम्बसदृशेषु परःशतेषु
प्राणप्रिये ! कुत इयं त उदासताऽहो ॥ ६२ ॥

रुक्मिणी—[१४१]प्रियस्वसर्यथार्थमाह प्राणनाथः ।

जाम्बवती—[१४२]नाथोऽस्माकं त्वमसि भगवन् ! दैवतं श्रीमहेशः

---

( १३९ ) जाम्बवती पुनरपन्हुवानेव स्वोद्वेगकारणं 'न किञ्चिन्नाथे' त्युक्त्वा 'न किञ्चिदपि' इति पुनर्वदन्त्यश्रूणि मुञ्चति तदा तदाशयानभिज्ञा रुक्मिणी तामुपालभते—असमये औदासीन्यमुद्भाव्य प्राणनाथमप्यौदासीन्य-मग्नं कुरुषे; किमेतदुचितं ते ? सर्वथा नोचितमिति भावः ।

( १४० ) प्रथमन्तु हर्षनिर्भरतया क्षुब्धा स्यात् जाम्बवतीति मेने भगवान् परन्तु यदा रुक्मिण्युक्तमनुमान्य 'जानामि खलु नैतदुचितं, परं किङ्करोमि ? नाहमौदासीन्यमुद्भावयामि, स्वयमेवैतदौदासीन्यमुद्भवति,'—न तद् रोद्धुं प्रभवामीत्याशयवत्या जाम्बवत्या 'तत्र को मेऽपराधः' इति निरुपायताऽऽवेदिता तदा श्रीकृष्णः शङ्कितचित्तः साश्चर्यं पृच्छति—प्राणप्रिये मयि, प्रणतप्रिये श्रीशम्भौ प्रसादसुमुखे, विपुले च राज्ये, साम्बसदृशेषु परस्सहस्रेषु पुत्रेषु सत्सु ते इयमुदासता कुतः ? सर्वथा उदासतावकाशो नास्तीत्यभिप्रायः । तथाप्यौदासीन्यमित्याश्चर्यमहोनिपातेन व्यञ्जितम् ।

( १४१ ) रुक्मिणी श्रीकृष्णोक्तमनुमोदते 'प्रियस्वसः ! यथार्थमाह प्राणनाथ' इति ।

( १४२ ) इदानीं स्वोद्वेगकारणं विवृणुते जाम्बवती—हे भगवन् ! अस्माकं नाथस्त्वमसि, दैवतं च श्रीमहेशः, किञ्च नः साहाय्यदा कारुण्यार्द्रा-

कारुण्यार्द्रा हिमगिरिसुताऽस्त्येव साहाय्यदा नः ॥
सत्यप्येवं नहि नहि विभो ! रुक्मिणीनन्दनो यो
बाल्ये नष्टो मिलति, किमयं स्वल्प औदास्यहेतुः ? ॥६३॥

किञ्च—नाथस्त्वं भगवान् दयामृतमयः श्रीशङ्करो दैवतं
देवी श्रीकरुणासरित् प्रतिदिनं साहाय्यदा पार्वती ॥
सत्यप्येवमनन्यतुल्यशरणा श्रीरुक्मिणीनन्दनं
द्रष्टुं न प्रभावामि, तर्हि बलवान् भाव्यर्थ एव ध्रुवम् ॥ ६४ ॥

( एवं वदन्त्यश्रूणि मुञ्चति )

रुक्मिणी—( १४३स्वगतम् ) अहो देव्या जाम्बवत्याः सौहार्दमप्रतिमं, या मद्दुःखेन मत्तोप्यधिकं दुःखं मनसि धारयति । ( प्रकाशम् ) सखि सखि ! अलमलं चिरव्यतीतव्यसनस्मरणेन । भगवता वसिष्ठेनापि 'राम शान्तिं न पश्यामि सर्वविस्मरणादृत' इति श्रीरामचन्द्रं प्रति प्रोक्तम् ।

---

गिरिसुता अस्त्येव—अत्र हिमगिरिसुतायाः कारुण्यार्द्रेतिविशेषणदानेन प्रार्थनाऽनपेक्षस्वभक्तहितकरत्वं बोधितम्—एतावति अनुकूलकारणकलापे सत्यपि हे विभो ! बाल्ये नष्टो रुक्मिणीनन्दनो नाद्यापि मिलति; किमयं स्वल्प औदास्यहेतुः ? अत्रभवतोऽप्यत्र औदास्यं—उदासीनता—उपेक्षाप्रवणतेति यावत् इति काका बोधितम् । अत्र भवतोऽपि न स्वल्पा उपेक्षेतिभावः । अथ भगवन्तमुत्तेजयितुमाह किञ्चेत्यादि । त्वं ह्यस्माकं नाथो दयामृतमयः, दैवतं च श्रीशङ्करः—नाम्नैव कल्याणकरः—प्रतिदिनं साहाय्यदा च श्रीकरुणासरित् पार्वती देवी; एवं सत्यपि—एकैकस्मिन् स्वाश्रितविपन्निवारणक्षमे कारणे, तादृशकारणत्रयसमवाये समुदितेऽपि—श्रीरुक्मिणीनन्दनं द्रष्टुं न प्रभवामि तर्हि ध्रुवं भाव्यर्थ एव बलवान्—यत्प्रतिक्रिया एवंविधकारणैरपि कर्त्तुं न शक्यते—इति वदन्त्यश्रूणि मुञ्चन्ती स्वाशयमाविष्कृतवती ।

( १४३ ) रुक्मिणी स्वगते, स्वदुःखेन दुःखातिशयं वहन्त्या जाम्बवत्या अप्रतिमं सौहार्दं भावयन्ती धैर्यप्रदानाय प्रकाशं ब्रूते—सखि सखि इत्यादि । अत्र सखि ! इति द्विःसम्बोधनं जाम्बवत्या अधीरतावधीरणाय । अलमलं चिरातीतव्यसनस्मरणेन—यत् किल स्मृतं सद् दुःखाकरोति, वरं तस्यास्मरणमेवेति भावः । अत्र वसिष्ठोक्तं प्रमाणयति—शान्त्युपायस्य मनोलयस्य परमं साधनं सर्वविस्मर-

जाम्बवती—देवि [१४४]देवि ! कथय कथमिव विस्मरामि तं, यो मे ज्येष्ठः साम्बः ।

श्रीकृष्णः—देवि ! [१४५]अप्रतिक्रियायां विधिविधित्सायां धैर्यमेव परमाधारः सर्वेषाम् ।

जाम्बवती—[१४६]सत्यं, परं कथं धैर्यं धार्यमित्यपि प्राणनाथ एव शिक्षयतु ।

श्रीकृष्णः—[१४७]प्राणप्रिये ! भवति यद्यदिहाशुभं तद्
यद्वा शुभं भवतु लोकदृशा तथापि ॥
सर्वं शुभं परिणतौ शिवभक्तिभाजां
यच्छङ्करः सकलशङ्कर एव देवः ॥ ६५ ॥

एष निश्चयो धैर्यधारणोपायः ।

---

णमेवेत्याशयेन श्रीरामचन्द्रं प्रति वसिष्ठेनोक्तं 'राम ! सर्वविस्मरणाद् ऋते शान्तिं न पश्यामि—अत्र उत्तमपुरुषप्रयोगेण—मादृशोऽपि जनो यदि न पश्येत्का कथा पुनरन्येषामतो यदि शान्तिमिच्छसि तर्हि सर्वविस्मरणाभ्यासं कुर्वित्युपदिष्टं' तद्वत् त्वमपि तद्दुःखनिदानं विस्मृतिपथमेव नयेत्याशयः ।

( १४४ ) देवि ! कथय कथमिव विस्मरामि तं ? यो मे ज्येष्ठः साम्बः इति वदन्ती जाम्बवती यत्पदपरामृष्टे प्रद्युम्ने ज्येष्ठसाम्बत्वारोपेण साम्बापेक्षया तस्मिन्नात्मनोऽधिकं ममत्वमुद्गृणाति । न कथमपि विस्मर्तुं प्रभवामीत्याशयः ।

( १४५ ) या हि विधेर्विधित्सा प्रतिक्रियाशून्या तद्विषये सर्वेषां धैर्यमेवाधारो नाऽन्यदित्यर्थः । अतश्च भवत्या धैर्यमेवाश्रयणीयमित्याह श्रीकृष्णः ।

( १४६ ) जाम्बवती श्रीकृष्णोक्तं 'सत्य' मित्युक्त्या सम्मान्य 'परं कथं धैर्यं धार्यम्'—इत्यपि भवतैव शिक्षणीयम् इत्याह । एवंविधप्रसङ्गे धैर्यधारणाय स्वयं न प्रभवामीत्याशयः ।

( १४७ ) श्रीकृष्णो धैर्यधारणोपायं व्याकरोति । हे प्राणप्रिये ! यद् यद् इह लोके अशुभं भवति यद् वा लोकदृशा शुभं ( भवति ) तद् भवतु सर्वं तथैव, तथापि शिवभक्तिभाजां तु सर्वं परिणतौ शुभमेव भवेत्—यत् कारणं शङ्करः स्वयं सकलानां शङ्करः—कल्याणकर—एव । एतेन शिवशरणानामस्माकमिदानीमापातप्रतीतं दुःखमपि परिणतौ सुखमेव भवेदित्याकारक—निश्चय एव धैर्यधारणोपायः परम इत्युपदिष्टम् ।

जाम्बवती—प्राणनाथ ! परिणतेरप्यवधिश्चिन्तनीयः ।

[१४८]याताः षोडश वत्सराः प्रतिदिशं भीमादयो निर्भया
भ्रामं भ्राममहो न हन्त विरता अन्वेष्टुमेनं शिशुम् ।।
अद्यापि भ्रमणैकबद्धहृदया नो व्रीडया तेऽन्तिके-
ऽप्यायान्तीह कदा शुभा परिणतिर्भाव्येति नो वेद्म्यहम् ।।६६।।

श्रीदैवाधीने वस्तुनि किमस्माकं बलम् ?
[१४९]तथाप्येतावत्तु प्रष्टुमीहे—

पुत्रं गुरोर्यमगृहादपि चानयस्त्वं
नारायणस्य निकटाद्दश विप्रपुत्रान् ।।
यश्चाऽऽनयस्त्वरितमर्जुनसारथिः सन्;
सत्वं कुमारममुमानयितुं न शक्तः ? ।। ६७ ।।

श्रीकृष्णः—( [१५०]स्वगतम् ) अहो जाम्बवत्याः श्रीरुक्मिणीदुःखेन दुःखिता परां काष्ठामारूढा । ईदृशीभिः कुलकामिनीभिरेवाहं

---

( १४८ ) अथापि धैर्यमलभमाना चिरकालावेक्षयापि अनासादिताभिलषिता श्रीकृष्णमुल्लाघयति—परिणतेरप्यवधिश्चिन्तनीयो न वा ? । तदेव विस्तार्य वर्णयति—षोडश वत्सराः याताः ( नष्टस्य बालकस्येति शेषः ) प्रति दिशं निर्भयाः भीमादयो ( ये प्रेषितास्तेपि ) एनं शिशुमन्वेष्टुं भ्रामं भ्रामं—दिगन्तराणि भ्रान्त्वा हन्त नाद्यापि विरताः साम्प्रतमपि भ्रमणे एव एकं—मुख्योद्देश्यतया—बद्धं ( कृतसङ्कल्पं ) हृदयं येषां तादृशाः अलब्धप्रद्युम्ना व्रीडया ते अन्तिकमपि नाऽऽयान्ति; अतश्च भवदादिष्टा शुभा परिणतिः कदा भाव्या—भवित्री—इत्यहं न वेद्मि । दैवाधीने वस्तुनि किमस्माकं बलं ? न किमपीत्यर्थः ।

( १४९ ) जाम्बवतीदानीं श्रीकृष्णं मार्मिकवचोभिरुपालब्धुमीहते तथापीत्यादिना । यद्यपि दैवायत्ते वस्तुनि निरुपायतैव शरणं तथापि साक्षाद्दृष्टानेकभवत्प्रभावाहमेतावद्—वक्ष्यमाणं—प्रष्टुमीहे । विवक्षितं प्रश्नयति—यस्त्वं गुरोः पुत्रं यमगृहादप्यानयः, यश्च पुनर्नारायणसकाशाद् दश विप्रपुत्रानपि अर्जुनसारथिः सन्नानयः, स त्वममुं कुमारं प्रद्युम्नमानयितुं न शक्तः ? ।

( १५० ) श्रीकृष्णः स्वगते जाम्बवत्याः रुक्मिणीदुःखेन दुःखिता परां काष्ठामारूढा इत्यहोपदेन सविस्मयमुक्त्वा निजराज्ञीनां परस्परं सौहार्ददर्श-

भाग्यशाली । बहुभार्याणां पुरुषाणां येषां भार्यासु परस्परं स्नेह-सौहार्दसान्द्रहृदयत्वं प्रतिदिनं वर्द्धते तेषामेव गृहेष्वभ्युदयनिवासो विजयनिवासः कल्याणपरम्परानिवासश्च भवति। (प्रकाशम्) प्रिये जाम्बवति ! परमशिवचरणमेव शरणीकृत्य निश्चिन्तचित्ता भव, स एव सर्वं शिवं करिष्यति ।

जाम्बवती—[१५१]प्राणनाथ ! श्रीरुक्मिणीकुमारापहरणदुःखादुन्मत्ता किमप्यविवेकेन वदामि तत् क्षन्तव्यम् ।

परशिवपदभक्तः प्राणनाथाऽस्यनन्यः
कथमशिवमिदं सत्पुत्रचौर्यस्वरूपम् ? ।।
तव सदन, इयं या शल्यतुल्यास्तिशङ्का
मम मनसि निषण्णा तां त्वमेवोज्जिहीथाः ।। ६८ ।।

रुक्मिणी—देवि देवि ! [१५२]अलमलमविवेकस्यातिभूमिकामारोहसि, यदस्माकं पूर्वकृतानपराधानविगणय्य सकललोकशिवङ्करं परमशिवं परमेश्वरमुपालभसे तेनाऽस्मत्प्राणनाथो रोषमुपैष्यति । प्रारब्धमपरिहार्यमेवेति नाविदितं मे प्रियसख्या ।

---

नेन प्रीयमाणान्तःकरणो बहुभार्याणां भार्यासु स्नेहसौहार्दार्द्रहृदयत्वप्रयुक्तं गृहेषु अभ्युदयविजयकल्याणपरम्परादीनां निवासं निगद्य प्रकाशं जाम्बवतीमाह । परमशिवचरणमेव शरणीकृत्य निश्चिन्तचित्ता भव, स एव सर्वं शिवं करिष्यति ।

(१५१) इदानीं जाम्बवती श्रीकृष्णोक्तमधरोत्तरेण प्रतिब्रुवाणा किञ्चिद्धार्ष्ट्यमवलम्बते—हे प्राणनाथ ! त्वमनन्यः परशिवभक्तोसि तथापि तव सदने सत्पुत्र चौर्यरूपमशिवं कथम् ? इयं या मम मनसि शल्यतुल्या शङ्का निषण्णाऽस्ति तामेतामाशङ्कां त्वमेवोज्जिहीथाः—निवारयेत्यर्थः । अत्र साक्षात् परशिवस्याप्याक्षेपच्छायाऽऽयाति तदेव मनसिकृत्य पूर्वमेव तया—श्रीरुक्मिणीकुमारापहरणदुःखेनोन्मत्तप्रायाहं किमपि विवेकविधुरं वदामि तत् क्षन्तव्य'मिति वाक्यारम्भएव क्षमाभ्यर्थना कृतास्ति ।

(१५२) एतं जाम्बवत्या विवेकात्ययमसहमाना रुक्मिणी—'देवि देवि' इति द्विरुक्तेन प्रतिरोधमिव कुर्वती—अलमलम्—न वक्तव्यमेवमित्याह । अविवेकस्य अतिभूमिकामारोहसि यतःकारणादस्माकं प्राक्तनाशुभफलमनिष्टं दैवकृतमिव मन्वाना देवेष्वपराध्यसि । अपि चैतेनास्मत्प्राणनाथो रोषमेष्यति ।

जाम्बवती—देवि ! [१५३]प्रारब्धमपरिहार्यमेवेति नियमस्त्वशिवभक्तानां, शिवभक्तानां तु, प्रारब्धमुल्लङ्घ्य नियतिं निराकृत्य दैवं प्रतिहत्य परममेव शिवं परमशिवः करोतीति शास्त्रसिद्धम् । प्राणनाथोऽस्माकं स्वेष्टदेवतोपालम्भेन रुष्येच्चेत्स्वेष्टदेवतां सम्प्रार्थ्यास्माकं शिवपरम्पराः कारयेत् । नाहं त्वमिव सागरगम्भीरहृदयास्मि या त्वं क्षणे क्षणे कुमारापहारदुःखानि दुःसहान्यनुभवन्त्यपि नाणुमात्रमपि प्राणनाथस्याग्रे दर्शयसि, मयाप्यद्यावधि त्वयेव गुप्तं दुःखं सोढम् । अन्या अपि सर्वाः 'माऽस्मद्दुःखं विलोक्य प्राणनाथस्यान्तःकरणं दुःखितं भूदि'ति निगूढमेव दुःखानि सहन्ते । त्वदीयेनानेन दुःखेन का न दुःखवत्यो ? यदस्माकं शिरोरत्नं ज्येष्ठा श्रेष्ठा च त्वमेवासि । [१५४]परमद्य तु वत्सस्य साम्बस्याऽभ्युदयविलोकनेन नवीभूतं कुमारापहरणदुःखम् । यदि तं नापाह-

---

प्रारब्धापरिहार्यता तु भवत्या नाविदिताऽतो देवोपालम्भः सर्वथाऽनुचित इति भावः ।

( १५३ ) इदानीं जाम्बवती श्रीकृष्णरोषभीतेव किञ्चित्सान्त्ववाद प्रकारादरेण भगवदुपालम्भं सन्तनुते—देवि ! प्रारब्धापरिहार्यतानियमस्तु—शिवभक्तभिन्नानां, शिवभक्तानां तु प्रारब्धमुल्लङ्घ्य नियतिं निराकृत्य दैवं निहत्य परमशिवः शिवमेव करोतीति शास्त्रसिद्धम् । प्राणनाथोपि यदि स्वेष्टदेवतोपालम्भेन रुष्येच्चेत् स्वेष्टदेवतां सम्प्रार्थ्य कारयेदेवाऽस्माकं शिवपरम्पराः । इदानीं रुक्मिण्या गाम्भीर्यं दुःखसहिष्णुतां च भङ्ग्या बोधयन्ती ततः स्वस्या व्यतिरेकमाह—नाहं त्वमिवातिगम्भीरहृदया, या त्वं दुःसहानि कुमारापहारदुःखान्यनुभवन्त्यपि प्राणनाथस्याग्रे नाणुमात्रमपि दर्शयसि । अद्यावधि तु मयापि त्वयेव गुप्तं सोढं दुःखं, न केवलमहमेव किन्त्वन्या अपि 'अस्मद्दुःखावगमेन प्राणनाथस्यान्तःकरणं मा दुःखितं भूदिति निगूढमेव दुःखानि सहन्ते । अनेन त्वद्दुःखेन का न दुःखवत्यः ? सर्वा अपि दुःखवत्य इत्यर्थः । यतस्त्वमेवास्माकं ज्येष्ठा श्रेष्ठा चेति—सर्वासामस्माकं शिरोरत्नरूपासि तेनैव त्वय्यस्माकमात्मभावस्तत्प्रयुक्तं च त्वद्दुःखेन दुःखित्वं सर्वासामुपपद्यत एवेत्यर्थः ।

( १५४ ) चिरातीतस्य दुःखस्येदानीमुद्रेके हेतुं निगदति—परमद्य तु वत्ससाम्बस्याभ्युदयविलोकनेन नवीभूतं तत्कुमारापहारदुःखमिति । दुःखोद्रेकमेव हेतुहेतुमद्भावेन समर्थयति—यदि तं कुमारं कश्चिन्नापाहरिष्यत् तर्हि सो-

रिष्यच्चेत् कश्चित्तर्हि सोऽप्यद्य पूर्णषोडशवर्षवयस्कः सवधूकोऽस्मन्नेत्राण्यानन्दयिष्यत् साम्ब इवेति मनस्यौदासीन्यं निरवधिकमुच्छलितं तत्समकालमेव समागतेन प्राणनाथेन "प्राणप्रिये कुत इयं त उदासताऽहो" इति पृष्टया मया सर्वं निवेदितम् । सत्यं ब्रवीमि देवि सत्यं ब्रवीमि—

[155]यावज्ज्येष्ठं कुमारं ते नहि द्रक्ष्यामि सोदयम् ॥
तावत् साम्बोदयोऽप्येष न मे मनसि हर्षदः ॥ ६९ ॥

( इत्युक्त्वाश्रूणि मुञ्चति )

रुक्मिणी—सखि ! [156]जानामि सर्वं, परं प्रहर्षमये समये प्रहर्षप्रदर्शनायैव कृपयाऽस्मन्मन्दिरमलङ्कुर्वतः प्राणनाथस्यान्तःकरणं चिरव्यतीतदुःखं स्मारयित्वा नोद्वेजनीयमित्यस्माकं कुलकामिनीनां धर्म इत्यभ्यर्थ्यसे ।

जाम्बवती—( [157] सरोषम् ) देवि ! क्षन्तव्यम् । नमः कुलकामिनी-

---

प्यद्य पूर्णषोडशवर्षवयस्कः साम्ब इव सवधूकोऽस्मन्नेत्राण्यानन्दयिष्यत्—सोऽयं विचारः साम्बाभ्युदयदर्शनेन मन्मनसि समुद्भूतस्तेन निरवधिकौदासीन्यमुच्छलितं तावदेव गृहमुपयातेन प्राणनाथेन—'प्राणप्रिये ! कुत इयमुदासता' इति पृष्टया मया सर्वं निवेदितम् । अत्रावसरे दुःखोद्रेकपरवशेन दूयता हृदयेनोक्तं न दोषावहं गणनीयमित्याशयेन ब्रूते—सत्यं ब्रवीमि देवि ! सत्यं ब्रवीमि नात्र मम काप्यधीरता अविनीतता वा गणयितुमुचितेति भावः ।

( १५५ ) स्वमनोगतमाशयं प्रकटयति जाम्बवती—यावत् सर्वज्येष्ठं ते कुमारं सोदयं न हि द्रक्ष्यामि तावदेष साम्बोदयोऽपि मे मनसि हर्षदो न भवतीत्यर्थः इत्येवं वदन्त्यश्रूणि मुञ्चति ।

( १५६ ) जाम्बवतीगदितमवितथमनुमन्यमाना रुक्मिणी स्वाशयं प्रकटय्य दर्शयति । सखि जानामि सर्वं ते हृद्गतं तथाप्यानन्दमयेऽस्मिन् समये प्रहर्षप्रदर्शनायैव कृपयाऽस्मन्मन्दिरमुपायातस्य प्राणनाथस्यान्तःकरणं चिरातीतदुःखस्मारणेन नोद्वेजनीयमेषोऽस्माकं कुलकामिनीनां धर्म इति हेतोरभ्यर्थ्यसेऽतो विरमेति भावः ।

( १५७ ) किमहं कुलकामिनीधर्मं न जानामि यत्त्वमेवमुपदिशसीति रोषकारणम् । देवि ! क्षन्तव्यम्—यद्यत्र तवानुचितं भायात्तद्विषये इत्यर्थः ।

धर्माय, य एतावत्कालं पालितोपि न किञ्चित् फलतिस्म। दीर्घया दृशा विचार्यमाणे जन्मतः सप्तमेऽहनि केनचिद्दुष्टेनापहृतस्य कुमारस्याद्यापि प्रयत्नपरम्पराभिः प्रवृत्तिरेव नोपलभ्यते। एतद्विषये मूलकारणन्तु कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थस्यास्यास्मत्प्राणनाथस्योपेक्षैवास्तीति मन्येऽहम्। यदि स एव कुमारमन्वेष्टुमिच्छेत् तर्हि क्षणमात्रेण किं न कुर्यादिति त्वमेव विचारय। परं सकलमायाविगणमहेश्वरः कस्यां लीलायां खेलतीति न जाने। रुष्यतु वा तुष्यतु वा प्राणनाथो, यन्मे मनसि स्फुरति तद्ब्रवीमि।

रुक्मिणी—सखि! स्वस्थमानसा भव। समाश्वस्ता भव।

श्रीकृष्णः—([१५८]स्वगतम्) अहो जाम्बवत्याः परदुःखदर्शनासहिष्णुता, सपत्नीष्वपि प्रेमप्राबल्यं च। (प्रकाशम्) देवि रुक्मिणि! न मे रोषावकाशः। सा खलु दुःसहदुःखदूनहृदया स्वमनोगतं सर्वं सरलतया प्रकाशयति, परं युवाभ्यामिदानीं ममापि निश्चयः श्रोतव्यः।

---

कुलकामिनीधर्मानादरमभिनयति—'नमः कुलकामिनीधर्मायेति'। अनादरे हेतुमपि प्रणिगदति—य एतावत्कालं तूष्णीम्भावेन पालितोऽपि न किञ्चित् फलति। फलाभावे निदानं विवृणोति—कर्तुमकर्तुमन्यथाकर्त्तुं समर्थस्याऽस्य=सम्मुखावस्थितस्य=प्राणनाथस्योपेक्षैवेति मन्येऽहम्। स्वमन्तव्यमेव विशदयति—यदि स एव कुमारमन्वेष्टुमिच्छेत्तर्हि क्षणमात्रेण किं न कुर्यादिति त्वमेव विचारयेति रुक्मिणीं पर्यनुयुङ्क्ते। उपेक्षाहेतुमनाकलयन्ती भगवन्तमकरुणमिव व्यञ्जयन्त्याह—सकलमायाविगणमहेश्वरः (अयमस्मत्प्राणनाथः) कस्यां लीलायां खेलति—किमर्थमुपेक्षते, को वाऽत्रोपेक्षायां तस्य निमित्तभूतो हृद्गतः सङ्कल्पः स्यादिति न जाने। रुष्यतु वा तुष्यतु वेत्यस्मिन् विषयेऽनपेक्षयैव मया तु यन्मनसि स्फुरितं तदुक्तम्।

(१५८) रुक्मिण्या—स्वस्थमानसा समाश्वस्ता च भवेति कृतसान्त्वना यदा तूर्ष्णींस्थिता जाम्बवती तदा श्रीकृष्णः स्वगते तस्याः परदुःखासहिष्णुतां सपत्नीष्वपि प्रेमप्राबल्यं च सविस्मयमाभाष्य रुक्मिण्या उद्भावितं स्वस्मिन् रोषावेषं प्रत्याचष्टे—देवि रुक्मिणि! न मे रोषावकाशः, सा खलु (जाम्बवती) दुःसहदुःखदूनहृदया स्वमनोगतं सर्वम् (आधिहेतुम्) सरलतया

रुक्मिणी जाम्बवत्यौ—प्राणनाथ ! अवहिते स्वः श्रोतुम् ।
श्रीकृष्णः—[१५९]प्रिये जाम्बवति ! त्वमुन्मत्तासि, नाहमुन्मत्तोऽस्मि—
शृणु—

श्रीशङ्करेण करुणामृतसागरेण
प्रेम्णा स्वयं करुणया तनयाः प्रदत्ताः ॥
ये, तेषु चैकमपि कः परिहर्त्तुमीशो
लोकत्रयेऽपि दनुजो मनुजोऽसुरो वा ॥ ७० ॥

रुक्मिणी—( स्वगतम् ) अहो !! प्राणनाथस्य परमशिवे श्रद्धातिशयः ।
जाम्बवती—[१६०]नाथ ! त्वमिव त्वमेव परमेश्वरे दृढश्रद्धावान्, परं कुमारोऽपहृत इति तु जगत्प्रसिद्धम् ।
श्रीकृष्णः—जाये ! तथापि तनयोऽपहृतो ह्यकस्मात्
केनापि सापि परमेशितुरेव लीला ॥
तस्याद्रिराजतनयाहृदयेश्वरस्य प्रायो-
ऽस्मदीयमुदयं विविधं विधातुम् ॥ ७१ ॥

जाम्बवती—( स्वगतम् ) अनीदृशः को वेदृशं वक्तुं शक्तः स्यात् ।
श्रीकृष्णः—[१६१]रक्षामणौ जगति जाग्रति विश्वरक्षां
कर्त्तुं शिवासहचरे परमेश्वरेऽस्मिन् ॥

---

प्रकाशयति अतो नात्र मे रोषः सर्वथोदयार्हः । भगवान् स्वनिश्चयं श्रावयत्युभे अपि—परमिदानीं युवाभ्यां ममापि निश्चयः श्रोतव्यः इति । श्रुत्वा च ममोपेक्षा वाऽनादरोवेत्यादिनिश्चेतव्यमित्यर्थः ।

( १५९ ) रुक्मिणीजाम्बवतीभ्याम् 'अवहिते स्वः श्रोतु'मिति कथिते पूर्वं बलभद्रकृतप्रश्नोत्तरे प्रकाशितमेव स्वनिश्चयं प्रकटयितुं 'त्वमुन्मत्ताऽसि नाहमुन्मतोऽस्मी' ति जाम्बवतीमुल्लाघयन् वदति श्रीकृष्णः—( श्लोकोऽयं (१०६) अङ्के व्याख्यातः )

( १६० ) जाम्बवती 'त्वमिव त्वमेव परमेश्वरे दृढश्रद्धावान्' इत्यनन्वयेन भगवन्तं व्याजस्तुत्येव प्रशंसमानैव 'परं कुमारोऽपहृत इति तु जगत्प्रसिद्धम्' इत्यनेन भगवदनूदितं स्वस्या उन्मत्तात्वं परिहरन्ती भगवत्युपेक्षामापरोयति ।

( १६१ ) श्रीकृष्णेन 'जाये !' इति पद्येन—अस्मत्तनयापहारेणापि महेश्वरस्यास्मदीयमुदयं विधातुं कापि लीलैवेत्यहं मन्ये—इति निवेदिते, जाम्ब-

चिन्तैव का वद तदीयपदाम्बुजैक-
मग्नात्मनां न इह शङ्कररक्षकाणाम् ॥ ७२ ॥

अयं निश्चय एव मे निरुद्वेगकारणं निश्चिन्ततताकारणं निरुदासताकारणमुपेक्षाकारणं च ।

रुक्मिणी—[१६२]प्राणनाथ ! सत्यं सत्यं परमशिवे परमेश्वरेऽस्माकमस्मद्बालानां च रक्षां कर्त्तुं जाग्रति सति किमर्थं कापि चिन्ता विधेया ?

न त्वत्समः शम्भुभक्तो भक्तवश्यो न तत्समः ॥
त्वत्प्रार्थितः किं न कुर्याच्च् शङ्करोऽखिलशङ्करः ॥ ७३ ॥

जाम्बवती—[१६३]यद्यहं ते प्रियतमा यदि मे त्वं वरप्रदः ॥
तर्हि देव्याः कुमारं तं दयया दर्शयाशु नः ॥ ७४ ॥

( इत्युक्त्वा साष्टाङ्गपातं प्रणमति )

श्रीकृष्णः—( [१६४]स्वगतम् ) अहो जाम्बवत्याः श्रीरौक्मिणेये कुमारे किमप्यकृत्रिमं वात्सल्यं वर्त्तते ततस्तस्या मनःसन्तोषाय प्रार्थ-

---

वती—'अनीदृशः को वेदृशं वक्तुं शक्तः ?' इति पुनरपि भगवतः प्रपञ्चवचनरचनापाटवे गदिते पुनरपि भगवान् पूर्वोक्तमेव स्वनिश्चयमक्षरान्तरैः प्रकटयति—रक्षामणावित्यादि—( अयमग्रेतनश्च 'जाये' इति द्वावप्येतौ श्लोकौ ( १०७ ) अङ्के व्याख्यातौ ) फलितमाह भगवान्—अयमेव निश्चयो मम निरुद्वेगस्य, निश्चिन्ततताया, अनुदासताया उपेक्षायाश्च कारणं; नान्यदित्यर्थः ।

( १६२ ) रुक्मिणी श्रीकृष्णोक्तमनुमोदते—सत्यमित्यादिना । यथा त्वत्समः शम्भुभक्तो न, तथा तेन शङ्करेण समो भक्तवश्योऽप्यन्यो नास्ति अतः किमर्थं चिन्ता विधेयेति ।

( १६३ ) रुक्मिणीवाक्यान्ते 'त्वत्प्रार्थितः किं न कुर्याच्च् शङ्करो लोकशङ्कर' इति श्रुत्वा यदि श्रीकृष्ण इच्छेत् तर्हीदानीमेवेष्टं सिद्ध्येदिति सञ्चिन्त्योदीर्णभावा जाम्बवती भगवन्तमाग्रह्णाति—यदि अहं ते प्रियतमा, यदि च त्वमिदानीं मे वरप्रदः, तर्हि देव्या रुक्मिण्यास्तं कुमारं दयया आशु नोऽस्मान् दर्शय—इत्युक्त्वा प्रणमति ।

( १६४ ) भगवान् स्वगते, जाम्बवत्याः रौक्मिणेये तनयेऽकृत्रिमं वात्सल्यं विभाव्य तस्याः मनस्तोषाय भगवन्तं चन्द्रचूडामणिं प्रार्थयामीति

यामि प्रणतप्रतिपालं दयालुशिरोमणिं श्रीरोहिणीरमणचूडामणिम्। (प्रकाशम्) प्रिये रुक्मिणि! प्रिये जाम्बवति! यद्येवमेव युवयोराग्रहस्तर्हि प्रार्थयामहे महेश्वरम्।

उभे अपि—यथायुष्मदाज्ञं कर्त्तुमवहिते स्वः। यदि प्राणनाथस्येच्छा चेत् श्रीराजराजेश्वरमन्दिरे गत्वा प्रार्थयामहे।

श्रीकृष्णः—प्राणप्रिये!

[१६५]कुत्र कुत्र न शिवः शिवप्रदः सर्वदा शिवपरायणात्मनाम्॥
सन्निधिस्थ उपलक्ष्यतेऽखिलं विश्वमेव हि सदाशिवात्मकम्॥७५॥

तदत्रैव जाम्बवतीमन्दिर एव श्रीसदाशिवः प्रार्थनीयः सदाशिवप्राप्तये।

उभे अपि—[१६६]यथाज्ञा प्राणप्रियस्य। आवामपि युष्मत्प्रार्थनानुसारेण वीणामृदङ्गं वादयिष्यावः।

---

सङ्कल्प्य प्रकाशमुभे अप्याह—प्रिये रुक्मिणि! प्रिये जाम्बवति! यद्येवमेव युवयोराग्रहस्तर्हि प्रार्थयामहे महेश्वरमिति। अत्र रुक्मिण्या पूर्वमाग्रहलेशोऽपि न प्रदर्शितस्तथापि 'युवयो' रिति द्विवचनेन तामपि गर्भीकुर्वन् भगवान्—रुक्मिण्या अप्येतत्प्रियमितिबुद्ध्या तथा प्रायुङ्क्त। अत एवोत्तरवाक्ये उभे अपि 'यथा युष्मदाज्ञं कर्तुमवहिते स्वः' इति व्याहृत्य 'यदि प्राणनाथस्येच्छा चेद्राजराजेश्वरमन्दिरं गत्वा प्रार्थयामहे' इति प्रार्थनायाः सद्य एव सफलत्वसिद्धये श्रीराजराजेश्वरसान्निध्याय तथाभ्यर्थनां कृतवत्यौ।

(१६५) श्रीकृष्णस्तु जाम्बवतीसदनेपि शिवसांनिध्यमविशिष्टं मन्वानस्तत्रैव प्रार्थनां विधातुमीहते—प्राणप्रिये! इत्यादिना शिवपरायणान्तःकरणानां शिवप्रदः शिवः कुत्र कुत्र संनिधिस्थो न उपलक्ष्यते? अपि तु सर्वत्रोपलक्ष्यत इति भावः। हि—यतः—अखिलं विश्वं शिवात्मकमेव, अतो यत्र कुत्रापि कृतां शिवप्रार्थनां श्रोतुं शिवस्तत्र सन्निहित एव 'सर्वतः श्रुतिमल्लोके सर्वमावृत्यतिष्ठतीति' श्रुतेः। तस्मादत्र जाम्बवतीमन्दिर एव सदा शिवप्राप्तये सदाशिवः प्रार्थनीय इति।

(१६६) उभे अपि 'यथाज्ञा प्राणप्रियस्य' तथैव करिष्याव इति सम्मान्य श्रीकृष्णस्य शिवप्रार्थनाविधावानुकूल्यदानार्थं 'आवामपि युष्मत्कृतप्रार्थनानुसारेण वीणामृदङ्गं (तूर्याङ्गत्वादेकवद्भावः) वादयिष्यावः' इत्युक्त्वा-

श्रीकृष्णः—( साञ्जलिबन्धम्, नेत्रे निमील्य )

१६७यत्पदाब्जमभिपूज्य सा रमा मामवाप परमप्रियं पतिम् ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः ॥७६॥
यत्कृपाकणिकया कयाऽप्यहं श्रीरमां प्रियतमामवाप्तवान् ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः ॥७७॥
यद्दयादृगवलोकलेशतो वेद वेदमखिलं पितामहः ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः ॥७८॥
यत्कृपेक्षणत एव चाप्तवानिन्द्र इन्द्रपदमुत्तमोत्तमम् ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः ॥ ७९ ॥
निस्तुलां नवनिधीशतां गतो यत्कृपालवबलान्निधीश्वरः ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः ॥८०॥
यत्कृपालवबलाच्च लोकपा लोकपालपदवीमुपागताः ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः ॥८१॥

---

वीणां मृदङ्गं चादाय वादयतः । स्त्रीणां गीतवाद्यनृत्यकलासु प्रावीण्यं पूर्वकालेऽभूदेवमद्यत्वेऽप्यवश्यमपेक्ष्यते, पुंसां विनोदो हि तादृशसहकारिकारण सापेक्ष एव ।

( १६७ ) श्रीकृष्णो नेत्रे निमील्य ध्यानावस्थः पुरत एव परमशिवं भावयन् स्तौति । 'यत्पदाब्ज'मित्यादिना 'रुक्मिणीनन्दनं नः' इत्यन्तैस्त्रयोदशभिः श्लोकैः । यस्य पदाब्जमभिपूज्य सा रमा परमप्रियं मां पतिमवाप [ लीलायाः स्वप्नतुल्यतया लिट्प्रयोगो नाऽसाधुः ] सोयं सदाशिवः प्रार्थितः सन् नोऽस्मभ्यं सदा शिवः इष्टफलदश्च भवतु, एतावानंशः सर्वत्र समान एव । कयापि यत्कृपाकणिकया अहं श्रीरमां प्रियतमामाप्तवान्; यदीयदयादृगवलोकलेशतः पितामहो—ब्रह्मा अखिलं वेदं वेद—ज्ञातवान्; यत्कृपेक्षणत एवेन्द्र ऐन्द्रं पदमुत्तमोत्तममाप्तवान्; यत्कृपालवबलान्निरुपमां निधीशतां निधीश्वरः—कुबेरः—प्राप्तः; यत्कृपालवबलाल्लोकपा इन्द्रादयो लोकपालपदवीमुपागताः-यत्कृपातश्च उपमन्युर्बाल एव उत्तमां क्षीरसागरस्वामितामवाप; यत्कृपातश्चेह लोके स्वल्पजीवी अपि मृकण्डनन्दनः कल्पजीवी अभूत्; प्रोषितासुर्गतप्राणाऽपि मदालसा यत्कृपावशतो जीवितमाप; यश्चोपास्य एष चन्द्रमाः अक्षयादसाध्यतमात् क्षयमहामयादूरयान्मुक्तः सोयमिति पूर्ववत्सर्वत्र ।

यत्कृपात उपमन्युरुत्तमां क्षीरनीरनिधिनाथतां गतः ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः॥८२॥
स्वल्पजीव्यपि मृकण्डनन्दनो यत्कृपात इह कल्पजीव्यभूत् ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः॥८३॥
प्रोषितासुरपि सा मदालसा यत्कृपावशत आप जीवितम् ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः॥८४॥
मुक्त एष यमुपास्य चन्द्रमा अक्षयक्षयमहाभयाद् रयात् ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः॥८५॥
यत्प्रसादत इहाप्तवानहं पुत्ररत्ननिकरान् गुणाकरान् ॥
सोऽयमिष्टफलदः सदाशिवः प्रार्थितो भवतु नः सदा शिवः॥८६॥

चरणशरणमाप्य यस्य विष्णु-
र्विधिरपि चाऽऽप परम्पराः शिवानाम् ॥
अशरणशरणं स देवदेवो
भवतु सदा शिवदः सदाशिवो नः ॥ ८७ ॥

शिवद शिव दयादृङ् मय्यनन्ये त्वदीया
यदि यदि च तवाहं भक्त ईशास्म्यनन्यः ॥
कुरु शिवमखिलानां श्रीशिव श्रीशिवाढ्यो
वितर वितर नष्टं रुक्मिणीनन्दनं नः ॥ ८८ ॥

( इत्युक्त्वा दण्डवत् प्रणमति )

---

इदानीं स्वानुग्रहपुरस्कारेण स्तौति—यस्य प्रसादत इह अहं गुणाकरान् पुत्ररत्ननिकरान् आप्तवान्, सोऽयं—हृदि ध्येयाकारेण सन्निकृष्टत्वादिदमा निर्देशः—सदाशिवः प्रार्थितः सन् अस्माकं सदा—सर्वदा—शिवः कल्याणकरः इष्टफलदश्च भवत्विति पूर्ववत्सम्बन्धः । यस्य चरणशरणमाप्य विष्णुरपि विधिश्च शिवानां—कल्याणानाम्—परम्पराः आप, सः अशरणशरणं देवदेवः सदाशिवः नः सदा शिवदः भवतु । इदानीं साक्षात् परशिवं सम्बोध्य प्रार्थयते—हे शिवद शिव ! अनन्ये मयि यदि ते दयादृग्, यदि च हे ईश ! अहं तव अनन्यः भक्तः, ( तर्हि ) हे श्रीशिव ! अखिलानां शिवं कुरु; किञ्च श्रीशिवया पार्वत्या आढ्यो युक्तः सन् नष्टं—चिरादलब्धप्रवृत्तिकं रुक्मिणीनन्दनं नोऽस्मभ्यं वितर । अत्र वितरेति द्विरुक्तिरातुरतां बोधयति, सद्यो वितरेति यावत् ।

( ततः [१६८]प्रविशति आकाशमार्गेण श्रीपार्वतीसहितः शङ्करो रतिसहितः कामो नारदश्च )

श्रीशङ्करः—श्रीकृष्णचन्द्र ! तव भक्तिभरातितुष्टं
नित्यं त्वदेकवशमेव हि मामवेहि ॥
किं दुर्लभं तव मयीष्टद इष्टदेवे
किं वच्मि वा त्वमसि मे परमोऽन्तरात्मा ॥ ८८ ॥

( इति वदन् पुष्पकादवतीर्य श्रीकृष्णशिरसि करकमलं निधायोत्थापयति )

श्रीकृष्णः—( [१६९]सानन्दम्, नेत्रे समुन्मील्य श्रीपरमेश्वरीसहितं परमेश्वरं विलोक्य च ) रुक्मिणि रुक्मिणि ! जाम्बवति ! कृतार्थयतं लोचने परमशिवासमन्वितपरमशिवस्वरूपावलोकनसुखेन । ( इत्युक्त्वा पुनः शिवयोश्चरणयुगले पतति )

रुक्मिणी-जाम्बवत्यौ }—( ससम्भ्रममुत्थाय सहर्षाश्रुपातं प्रणमतः )

श्रीकृष्णः—[१७०]एतं देव्यौ ! एतं, जगतां मातापितरौ राजोपचारैः पूजयाम । अलभ्योऽयमकस्माल्लाभ उपनतः । एतदलभ्यलाभप्राप्तौ

---

( १६८ ) एवं स्तुत्वाऽन्ते च स्वाभिलषितं सम्प्रार्थ्य यावद् दण्डवत् प्रणमति तावदेव देवदेवो महादेवो भक्तानुग्रहपरवशः श्रीकृष्णाभ्युदयं परां कोटिमारोपयितुं श्रीपार्वतीसहित आकाशमार्गेण ( विमानारूढः ) प्रविशति; रतिसहितः कामो नारदश्च, प्रविशतीति प्रत्येकमभिसम्बध्यते । प्रविशन् विमानादनुत्तीर्ण एव श्रीशङ्करः—हे श्रीकृष्णचन्द्र ! तव भक्तिभरेण अतितुष्टमत एव नित्यं त्वदेकवशमेव मां निश्चयेन अवेहि । अतश्च इष्टदे इष्टदेवे मयि तव किं दुर्लभं ? न किमपीत्यर्थः । वा—अधिकं—किं वच्मि, त्वं मे परमः साक्षादन्तरात्मासि, नातः परं किमपि वक्तव्यमवशिष्यत इति यावत् । एवं वदन् पुष्पकादवतीर्य प्रणम्रं श्रीकृष्णं शिरसि करकमलं निधायोत्थापयति ।

( १६९ ) श्रीकृष्णः सानन्दं नेत्रे समुन्मील्य श्रीपार्वतीसहितं श्रीशिवं विलोक्य रुक्मिणीं जाम्बवतीं च सम्बोध्य 'कृतार्थयतं लोचने' इत्याद्यादिश्य स्वयं पुनः प्रणमति ।

( १७० ) रुक्मिणीजाम्बवतीभ्यां यथोक्तमनुष्ठिते 'एतं देव्यौ' इति निकटे आहूय 'जगतां मातापितरौ राजोपचारैः पूजयाम' इति चिकीर्षितं गृणाति । अलभ्योयमवसरोऽकस्मादतर्कित एवोपनतस्तस्यैतस्य लाभस्य जा-

जाम्बवतीसदाग्रह एव मूलमिति मन्ये। (एवमुक्त्वा उभौ सम्पूज्य रत्नासने संस्थाप्य नारदमपि सम्पूज्य रत्नासने निवेश्य) देव्यौ! प्रेष्यन्तां दास्य, आहूयन्तां सर्वेऽपि, श्रीपरमेश्वरीपरमेश्वरदर्शनानन्दमनुभवन्तु आबालवृद्धा अन्तःपुरवासिनोऽनिवारितप्रवेशाः पौरा जानपदा आगन्तुका नरा नार्यश्च।

रुक्मिणी-जाम्बवत्यौ — यथाप्राणनाथाज्ञं प्रेषिता दास्यो निवेदितश्च भगवन्निदेशः। पश्यतु प्राणनाथः—

[१७१] राज्यः सर्वाः कुवलयदृशस्तावकीना महेशं
दृष्ट्वा गौरीसहितममलैः पारिजातप्रसूनैः॥
वृष्टिं कुर्वन्त्यथ नृपवराः पूजयन्ति स्म रत्नैः
पूर्णं सर्वं सद इदमहो नागरै राष्ट्रियैश्च॥ ८९॥
मातापितृभ्यामभिपूजितोयं महेश्वरस्तौ बहुमानपूर्वम्॥
समीपतः स्थातुमथोग्रसेनमाज्ञापयच्च श्रीबलदेवमार्यम्॥९०॥

---

म्बवतीसदाग्रह एव मूलमित्यहं मन्ये। इति मध्ये जाम्बवत्या अपि सदाग्रहपदप्रयोगेण हठाग्रहत्वमपाकृतम्। एवमुक्त्वा श्रीपार्वतीपरमेश्वरौ सम्पूज्य रत्नासने संनिवेश्य नारदमपि तथैव सम्पूज्य पृथगासने निवेश्य रुक्मिणीजाम्बवत्यावाज्ञापयति। देव्यावित्यादि। अत्र प्रथममाबालवृद्धा अन्तःपुरजनास्ततश्च पौराजानपदा आगन्तुका नरा नार्यश्च आहूयन्तां ते च सर्वेऽनिवारितप्रवेशाः श्रीपरमेश्वरीश्रीपरमेश्वरदर्शनानन्दमनुभवन्तु' इति श्रीकृष्णस्य सर्वानुजिघृक्षाक्रान्तान्तरङ्गत्वमावेदितम्।

(१७१) रुक्मिणीजाम्बवत्यौ 'प्राणनाथस्याज्ञामनुसृत्य दासीः सम्प्रेष्य भगवन्निदेशो निवेदितः—तदाज्ञयैव सर्वे आयान्तीति 'पश्यतु प्राणनाथः' इत्येनेन सञ्ज्ञाप्य तदेव वर्णयतः—हे भगवन्! तावकीनाः कुवलयदृशः सर्वा राज्ञ्यो गौरीसहितं महेशं दृष्ट्वा अमलैः पारिजातप्रसूनैः वृष्टिं कुर्वन्ति, अथ इमे नृपवराः रत्नैः पूजयन्ति स्म इत्थञ्च इदं सदः—सभास्थानं—नागरैराष्ट्रियैश्च—पौरैर्जानपदैश्च—सर्वं पूर्णम् इत्याश्चर्येण अहो पदं प्रयुञ्जाते। अपिच मातापितृभ्यां—देवकीवसुदेवाभ्यामभिपूजितोऽयं महेश्वरः तयोर्बहुमानात् तावुभावपि स्वसमीपतः स्थातुमाज्ञापयत्; अथ च उग्रसेनमार्यं बलदेवमपि स्वसमीपे स्थातुमाज्ञापयदिति सम्बन्धः।

श्रीकृष्णः—देव्यौ ! सर्वेषां श्रीशिवयोर्दर्शनं जातमिति प्रमोदामहे ।

देव्यौ—[172]सोऽयं प्राणनाथस्य प्रेमलक्षणाया भक्तेः परिणामः ।

श्रीकृष्णः—( रतिकामौ विलोक्य स्वगतम्[173] ) काविमौ देवनिर्विशेष-स्वरूपौ भगवता सह समागतौ ? पृच्छामि तावद् भगवन्तमेव । ( प्रकाशम् )—

केयं कोऽयं कुत इह विभो ! नारदोऽयं कुतो वा
कस्मात् स्थानात् सदयहृदयश्चागतोऽसीह शम्भो ! ॥
पुत्रे केनाप्यपहृत इयं जाम्बवत्यापदब्धौ
मग्ना तस्याः कृत इह विभो प्रार्थितोऽसि क्षमस्व ॥ ९१ ॥

जाम्बवती—देवि रुक्मिणि ! श्रीकृष्णचन्द्रनिर्विशेषस्वरूप इव लक्ष्यते ।

रुक्मिणी—देवि [174]जाम्बवति ! केनचिदपहृतः कुमारो यदि कुत्रचिज्जीवति तर्हि ईदृगवस्थ एव भवेत् । ममान्तरात्मा अस्मिन्नधिकं स्निह्यति, सुनिमित्तानि च दृश्यन्ते ।

---

( १७२ ) यदा श्रीकृष्णेन 'सर्वेषां श्रीशिवयोर्दर्शनं जातमिति प्रमोदामहे' इत्येवमुक्तं तदा 'सर्वोऽप्ययमत्रभवतः प्रेमलक्षणाया भक्तेरेव परिणाम' इति देवीभ्यां प्रमोदनिदानमुपवर्णितम् ।

( १७३ ) श्रीकृष्णः स्वगते—रतिकामौ विलोक्य 'काविमौ देवनिर्विशेषस्वरूपौ भगवता सहागता'विति जिज्ञासाकुलः—'भगवन्तमेव पृच्छामि, इति स्वयमेव श्रीमहेशं प्रकाशं पृच्छति—हे विभो ! का इयं ? कश्चाऽयं ? अयं नारदः कुतः ( प्राप्तः ) ? शम्भो ! इह स्थाने स्वयमपि सदयहृदयः—अस्मदीयप्रार्थनाश्रवणसमकालमेव सन्निहित इव—कस्मात् स्थानात् आगतोऽसि ? । मध्ये स्वकृतप्रार्थनानिमित्तं निगद्य क्षमामर्थयते—हे विभो ! केनापि पुत्रे अपहृते ( रुक्मिण्या इति शेषः ) इयं जाम्बवती आपदब्धौ मग्ना—( सती चिरात् क्लिश्यन्ती रुक्मिणीसौहार्दाविष्टहृदया मामिदानीमतितरां प्रेरयतिस्म ) तस्याः कृते प्रार्थितोऽसीति श्रमं दातुं प्रवृत्तस्य मे साहसं क्षमस्वेति उक्त्वा श्रीमहेश्वरमुखात् स्वोक्तप्रश्नत्रयोत्तरं श्रोतुं प्रतीक्षते ।

( १७४ ) जाम्बवती कामं निर्वर्ण्य वदति 'देवि रुक्मिणि ! श्रीकृष्णचन्द्रनिर्विशेषस्वरूप इव लक्ष्यते' इति तच्छ्रुत्वा तत्र स्वमनोगतमुत्तरयति रुक्मिणी—देवि जाम्बवति ! केनचिदपहृतः कुमारो यदि क्वापि जीवति तर्हि

जाम्बवती—देवि ! [१७५]अधुना भगवानेव सर्वं कथयिष्यति, शृणुवस्तावत् ।

श्रीशङ्करः—[१७६]कामो नाम बभूव दैवतवरो विश्वत्रयीजित्त्वरो
यो मां मोहयितुं तपस्यभिरतं प्राप्तो हिमाद्रौ पुरा ॥
मद्भालस्थलनेत्रवह्निशिखया यो भस्मशेषोऽभवत्
तच्च श्रीयुतकृष्णचन्द्र सकलं नाऽज्ञातपूर्वं हि ते ॥ ९२ ॥

रुक्मिणी—सखि [१७७]जाम्बवति ! अन्यदेवोपक्रान्तम् । कुतस्तादृशं मे भाग्यं स्यात् ।

जाम्बवती—देवि ! [१७८]धैर्यं सन्धार्य सर्वं श्रोतव्यम् । न खलु प्रार्थनाश्रवणसम्प्राप्तस्य श्रीमहेशस्य दर्शनं निष्फलं भविष्यति ।

---

ईदृगवस्थ एव भवेत्—एतावद्वयस्क एव स्यादित्याशयः—अयमेव स स्यादिति गूढमाकूतम् । तदेव शंसति—ममान्तरात्मा अस्मिन् अधिकं स्निह्यति निमित्तानि च शोभनानि दृश्यन्ते इति । एतेन यो मत्पुत्रोऽपहृतः सोऽयमेव भवेदित्यनुकूलस्तर्कः ।

( १७५ ) जाम्बवती तत्त्वं ज्ञातुमातुराऽपि सधैर्यमेव रुक्मिणीमाह—देवि ! अधुना भगवान् महेश्वर एव श्रीकृष्णकृतप्रश्नत्रयोत्तरं ददत्सर्वं व्यक्तं कथयिष्यति, शृणुवस्तावत्—तच्छ्रवणेनैव सन्देहोपनेष्यत इत्याशयः ।

( १७६ ) श्रीकृष्णप्रश्नानामुत्तरमुपक्रमते श्रीशङ्करः—कामो नाम दैवतवरो बभूव ( यो मादृशेष्वपि कृतव्यवसाय इति दैवतवरपदाकूतम् ) यस्तपस्यभिरतं मां मोहयितुं पुरा हिमाद्रौ प्राप्तः, यश्च मद्भालस्थलनेत्रवह्निशिखया भस्मशेषः अभवत् , इत्येतत्सकलं हे श्रीकृष्ण ! ते न अज्ञातपूर्वं, किन्तु ज्ञातमेव स्यादिति मन्येहमित्यर्थः ।

( १७७ ) अत्रान्तरे कामपूर्वजन्मकथोपक्षेपेण स्वाभिलषितवार्त्तामन्तरितामिव मन्वाना रुक्मिणी नैराश्यमवलम्बते—सखि जाम्बवति ! अन्यदेवोपक्रान्तं श्रीशङ्करेणेत्यर्थः । 'कुतस्तादृशं मे भाग्यं स्यात्' इत्येत्तद्वचनस्य 'अयमेवसम्मुखावस्थितो मम पुत्रो भवेदित्येवंप्रकारं मे कुतो भाग्यं स्यादित्याशयः ।

( १७८ ) जाम्बवती रुक्मिणीमाश्वासयति–देवि ! सन्धार्य धैर्यं सर्वं श्रोतव्यम् । एकदेशश्रवणेन नैराश्यावलम्बनमनुचितं, सर्वं वाक्यं श्रुत्वाऽनन्तरमर्थोऽवधारणीय इत्यर्थः । धैर्यहेतुमपावृणोति–प्रार्थनाश्रवणेन सम्प्राप्तस्य श्रीमहेश्वरस्य दर्शनं न खलु सर्वथा निष्फलं भविष्यति

श्रीकृष्णः—[१७९]भगवन्! पुराणेतिहासेषु प्रसिद्धमेवैतच्चरितं भगवतः—
को वा सदर्पकन्दर्पदर्पघ्नो जगतीतले ॥
विना भवन्तं योगीन्द्रं योगिनां परमं गुरुम् ॥९३॥ ततस्ततः?

श्रीशङ्करः—[१८०]तस्येयं रतिरस्त्यनन्यशरणा पत्नी सतीष्वग्रणीः
पातिव्रत्यवतीषु सा समभजन्मां शुद्धया श्रद्धया ॥
अस्याः श्रीगिरिराजराजदुहितुर्जाते विवाहोत्सवे
स्वप्राणप्रियसङ्गमाय सरसा साऽभ्यर्थयन्मां मुहुः ॥ ९४ ॥

श्रीकृष्णः—युज्यत एव, पतिव्रतानां खलु प्राणप्रिय एव सर्वस्वम्। ततस्ततः?

श्रीशङ्करः—वत्से! [१८१]शम्बरमन्दिरे कुरु मुदा वासं चिरं निर्भया
मामेव प्रणयाद् भजन्त्यनुदिनं चेतोवचःकर्मभिः ॥

---

(१७९) श्रीकृष्णः शिवगदितं कामदाहवृत्तान्तं 'जानाम्येवे'ति बोधयितुं तस्य प्रसिद्धत्वमाह—भगवन्! भगवतो भवत एतत्कामदाहलक्षणं चरित्रं पुराणेतिहासेषु प्रसिद्धमेवेति। श्रीमहेश्वरं चाटुकारेण स्तौति—योगीन्द्रं योगिनाञ्च परमं गुरुं—योगशास्त्रस्यादिप्रवर्त्तकमित्यर्थः—एतादृशं भवन्तं विना जगतीतले सदर्पकन्दर्पदर्पघ्नः अन्यः कः? न कोपीत्यर्थः। शिवादितरे सर्वेपि कामवशङ्गता एवेत्यर्थः।

यदाह भोजः—कः कामेन न निर्जितस्त्रिजगतां पुष्पायुधेनाऽप्यहो।
कः क्रोधेन वशीकृतो न, न च को लोभेन सम्मोहितः ॥
योषिल्लोचनभल्लभिन्नहृदयः को नाऽऽसवानापदं,
को राज्यश्रियमाप्य नान्धपदवीं यातोऽपि सल्लोचनः ॥

(१८०) श्रीकृष्णेन पूर्ववाक्यान्ते 'ततस्तत' इत्युच्चारणेन जिज्ञासितमवशिष्टांशं कथयति—तस्य (कामस्य) इयं—पुरोवस्थिता—पत्नी रति अस्ति, या अनन्यशरणा—मदेकशरणा—पातिव्रत्यवतीषु सतीषु अग्रणीः श्रेष्ठा सा विशुद्धया श्रद्धया मां समभजत्। अग्रेतनं सम्बन्धं बुबोधयिषुः प्रसङ्गमवतारयति—अस्याः श्रीगिरिराजदुहितुर्विवाहोत्सवे जाते स्वप्राणप्रियस्य कामस्य सङ्गमाय सरसा, रसाकुला आतुरेति यावत्; सा रतिः मां मुहुरनेकवारमभ्यर्थयत्।

(१८१) 'युज्यत एव' इत्युक्त्वा 'पतिव्रतानां खलु प्राणप्रिय एव सर्वस्वम्' इत्यनेन समर्थ्य 'ततस्तत' इति कृष्णेन दर्शितां जिज्ञासामुपशमयितुमाह शङ्करः—हे वत्से-रते! शम्बरस्य दानवस्य मन्दिरे मुदा निर्भया सती

मायावत्यभिधा कयापि च महायुक्त्याऽऽशु मायाशतं
ज्ञात्वा शम्बरतोऽसुरादथ निजं प्राणप्रियं प्राप्स्यसि ॥ ९५ ॥

इति मयाऽऽज्ञप्ता सा शम्बरपुर एव निवासमकरोत् ।

श्रीकृष्णः—[१८२]दीनदयालुना देवेन सम्यगुपदिष्टम् । स्वकीयकोपाग्निदग्धाखिलाङ्गमपि कामं पुनः साङ्गं विधातुं परमानुग्रहं कृतवता भगवता न केवलं रतिरेवानुगृहीता किन्तु जगत्त्रय्यप्यनुगृहीता । ततस्ततः ?

श्रीशङ्करः—तत [१८३]एकदा शिशुपालेन कृतसख्यो निसर्गत एव निष्कारणवैरी सतां स शम्बरः—'सखे ! श्रीकृष्णः पुत्रप्राप्त्यर्थं तपोवनं गच्छतीति श्रुतं मया, तत्तपोभङ्गमहमवश्यं करिष्यामि; तथापि यदि परमशिवकृपया लब्धसिद्धिर्भविता श्रीकृष्णस्तर्हि रुक्मिण्यास्तु सर्वान् पुत्रानहमपहरिष्यामि मदीयपरममित्रस्य ते मनःसन्तोषार्थमिति—प्रतिज्ञातवान् ।

---

चिरं वासं कुरु । दानवगृहे निवासं कुर्वन्त्याः कथं मुद् भविष्यतीत्याशङ्कामपाकरोति—मनसा वचसा कर्मणा च मामेव प्रणयादनुदिनं भजन्ती सती । 'मायावती' इत्यभिधां दधाना—वासं कुरु इति सम्बधः । तत्र च कयाऽपि युक्त्या शम्बरासुरान्मायाशतं ज्ञात्वा निजं प्राणप्रियं प्राप्स्यसीति मयाऽऽज्ञप्ता सा शम्बरपुरे एव निवासमकरोदिति ।

(१८२) 'दीनदयालुना देवेन सम्यगुपदिष्टमिति' स्वोक्तस्योपपादनायैवोत्तरवाक्यम् । स्वयमेव यस्याङ्गं दग्धं तमेव पुनः साङ्गं विधातुमनुग्रहं कुर्वता रतिरेव केवलं नानुगृहीता किन्तु कामावष्टब्धा जगत्त्रयी अप्यनुगृहीतेति दयालुताऽवधिः ।

(१८३) एतावत्पर्यन्तं तटस्थतया श्रुतवता श्रीकृष्णेन 'ततस्तत' इत्यग्रेतनवृत्तावजिगमिषया नुन्नः श्रीशङ्करः श्रीकृष्णमिदानीमनिष्टमिव किञ्चिच्छ्रावयति—सतां ( भवादृशां ) निसर्गत एव निष्कारणवैरी स शम्बरः शिशुपालेन कृतसख्यः—( शिशुपालाय दातुं प्रतिश्रुतां रुक्मिणीं हरता श्रीकृष्णेन साकं शिशुपालस्य सख्युः शम्बरस्य वैरित्वप्रकटनायेदं विशेषणं ) एकदा शिशुपालस्य सविधे—'सखे!' इत्यादिना 'ते मनःसन्तोषार्थं' मित्यन्तेन वाक्येन—प्रतिज्ञां कृतवान् शम्बरः । प्रतिज्ञायां द्वावंशौ-एकस्तावत्—पुत्रप्राप्त्यर्थं

श्रीकृष्णः—तव [१८४]जनमपकर्त्तुं शम्बरो वा परो वा
रचयतु शतशो वा लक्षशो वा प्रतिज्ञाः ॥
निजजनपरिरक्षादीक्षिते जागरूके
त्वयि सति शिव कस्मात्तावकानां भयं नः ॥ ९६ ॥ ततस्ततः?

श्रीशङ्करः—[१८५]ततस्तपसि कृते विघ्ने निष्फलस्वप्रयासो दुष्टः शम्बरः श्रीरुक्मिण्याः प्रथमं कुमारमपाहरत् समुद्रे चिक्षेप च।

रुक्मिणी—[१८६]बालस्य तस्य दुष्टेन तादृशी दशा कृता? धिक् कर्मचाण्डाल! क्व ते कल्याणं भविष्यति। हा महासमुद्रे निक्षिप्तस्य यादोभिस्तत्क्षण एव भक्षितस्य कुतः पुनर्दर्शनाशापि। हृदय! मृषा मुदितमसि।

---

श्रीकृष्णस्तपोवनं गच्छति तस्य तपसो भङ्गं=विघ्नं=करिष्यामि, तदेतत्पूर्वाङ्के हंसरूपेण कमलसहस्रादेकस्य कमलस्यापहरणं वर्णितं यत्प्रतीकाराय भगवता स्वनयनमुत्पाटितम्। विघ्नोत्पादनेन मदीयमिष्टं सेत्स्यत्येवेति निश्चयाभावात्—'तथापि यदि परमशिवकृपया लब्धसिद्धिर्भवितेऽति द्वितीयांशोपक्रमः। तर्हि रुक्मिण्याः पुत्रांस्तु ते (शिशुपालस्य) मनःसन्तोषार्थमहमपहरिष्यामीति प्रतिज्ञाशेषः।

(१८४) शम्बरप्रतिज्ञावाक्यं श्रुत्वाप्यव्यथ एव श्रीकृष्णः स्वनिश्चयमाश्रावयति तवेति। हे शिव! तव जनं भक्तमपकर्त्तुं शम्बरो वा ततोऽपि परोऽधिकमायावी शतशो लक्षशो वा प्रतिज्ञाः रचयतु—करोतु—तथापि निजजनपरिरक्षादीक्षिते त्वयि जागरूके सति तावकानां नोऽस्माकं कस्माद् भयं? न कुतोपि भयलेशोपीति भावः।

(१८५) 'ततस्तत' इति चरमपदाभ्यां कृष्णेन जिज्ञासितमर्थं कथयति श्रीशङ्करः—ततस्तपसि कृते विघ्ने निष्फलप्रयासो दुष्टः शम्बरः श्रीरुक्मिण्याः प्रथमं कुमारमपाहृत्य समुद्रे प्रक्षिप्तवानिति।

(१८६) श्रुत्वैवैतद्रुक्मिणी 'तस्य बालस्य दुष्टेन तादृशी दशा कृता!' इति सञ्चिन्तयन्त्येव शपति 'धिक् कर्मचाण्डाल! क्व ते कल्याणं भविष्यति' एवंविधबालवधादिपातकमाचरतस्ते न क्वापि कल्याणाशेति भावः। स्वगतमिवाह—समुद्रे क्षिप्तस्य तत्क्षण एव यादोभिर्भक्षणे पुनस्तद्दर्शनाशा नैवेति पुरोऽवस्थितं कामं वीक्ष्य 'ममान्तरात्मास्मिन्नधिकं स्निह्यती'त्यादि वदन्त्या

जाम्बवती—देवि ! [१८७]क्षणं प्राणनाथस्य पत्नीत्वं सफलं कुरुष्व ।
अस्माकं प्राणनाथो वारं वारं वदति—

त्वयि सति जगदीशे विश्वरक्षामणौ
श्रीपरमशिव परेशे जागरूके दयाब्धौ ॥
अवितुमखिलमेतद्विश्वमद्रीन्द्रकन्यासहित
उपनतानां किं भयं तावकानाम् ॥ ९७ ॥

इत्येतदपि न शृणोषि—
ज्वलनज्वालाजालाच् शस्त्रास्त्रासारवर्षणान् महाब्धेश्च ॥
सिंहव्याघ्राहिभ्योऽप्यवितुं जनमात्मनः शिवः शक्तः ॥ ९८ ॥
तन्मा चिन्तां कुरु ।

श्रीकृष्णः—दुष्टः स्वानुरूपमेव कुर्यात् । ततस्ततः ?

---

यो मनोरथ उदपादि तमिदानीं समुद्रक्षेपवृत्तान्तश्रवणेन सञ्जिहीते—' हृदय ! मृषा मुदितमसि ' ' सोऽयं स्यादिति ' तवाशंसनं मृषैवेत्याशयः ।

(१८७) जाम्बवती तादृशं तस्या निराशाबोधकं वचनं श्रुत्वा सोपालम्भं तामाश्वासयति—देवि ! क्षणमात्रं तु श्रीकृष्णपत्नीत्वं सफलं—सार्थकं—कुरु; यथाऽस्मत्प्राणनाथः श्रीकृष्णः श्रीशङ्करे निहितसकलनिजकुशलचिन्ताभरो दृढास्थया सर्वदा निश्चिन्त एव वरीवर्त्ति एवं त्वमपि सुधीरा भव--तस्य पत्नी भूत्वा यदि त्वं क्षणे क्षणे एवं ताम्यसि तर्हि कृष्णपत्नीत्वं ह्रेपयसीत्यर्थः । श्रीकृष्णसङ्कल्पमेव विवृणोति—हे परमशिव ! परेशे विश्वरक्षामणौ दयाब्धौ जगदीशे अद्रीन्द्रकन्यासहिते त्वयि अखिलमेतद् विश्वमवितुं जागरूके सति उपनतानां—भवच्चरणमेव शरणं प्रपन्नानां—तावकानामस्माकं किं भयम् ? अत्र परमशिवेति सम्बोधनेन स्वरूपेणैव कल्याणगुणत्वं, परेशे इत्यनेन सर्वाधिकत्वं, जगदीशे इत्यनेन स्वतन्त्रत्वं, अद्रीन्द्रकन्यासहिते इत्यनेन शक्तिसम्पन्नत्वं, दयाब्धावित्यनेन निरुपधिप्रवृत्तिमत्त्वं, विश्वरक्षामणावित्यनेन मृडाभिधानस्य सर्वदारक्षणहेवाकित्वमखिलमेतद् विश्वमवितुं जागरूके इत्यनेन च विश्वावनव्यसनित्वमावेदितम् । तथा च तादृशमहादेवं प्रपन्नानां सर्वथा कुतोऽपि भयं नैव भवेदिति मुधैव त्वं स्वपुत्रलाभे निराशतां प्रकटयसीति जाम्बवत्याकूतम् । ' इत्येतदपि न शृणोषि ? ' श्रीकृष्णेनाभीक्ष्णमावर्त्यमानमपि नावधारयसीत्यर्थः । शिवस्य सर्वाधिकत्वमेव प्रपञ्चयति—ज्वलनज्वालाजालात्, शस्त्रास्त्राणामासारेण अविच्छिन्नधारापातेन वर्षणात्, महाब्धेः—

श्रीशङ्करः—[१८८]ततश्चिरतरसमयसम्प्राप्तप्राणप्रियविरहदुःखदीना मायावती स्वकीयकेशपाशोद्बन्धनेन मर्त्तुं प्रवृत्ता।

श्रीकृष्णः—क्वान्या गतिरबलाया अनाथायाः। ततस्ततः?

श्रीशङ्करः—[१८९]तदवसरे शम्बरप्रेषितेन राजसेवकेन महामत्स्यो मायावत्यै अर्पितः—"इदानीं भोजनावसरे संस्कार्य" इत्यस्ति शम्बरमहाराजस्याज्ञेत्युक्त्वा गते तस्मिन् सेवके, मायावत्या च स्वधितिना विदारिते मत्स्ये तदुदरादयं निजः प्राणप्रियदेवः प्राप्तः।

श्रीकृष्णः—श्रीसाम्बसदाशिवपदाब्जभक्तिकल्पलता न कदापि निष्फला भवति। ततस्ततः?

---

पोतभङ्गाद्यापत्तेः—सिंहव्याघ्राहिभ्योऽपि आत्मनो जनं—निजभक्तमवितुं शिवः शक्तः। तस्मात्समुद्रे शम्बरेण क्षिप्तस्य पुत्रस्य कथं पुनः प्राप्याशेति चिन्तां मा कुरु। अस्माभिश्चिन्तितुमशक्यमपि शिवःसम्पादयितुं प्रभवतीति चिन्तां जहीहीत्यर्थः।

(१८८) 'दुष्टो हि जनः स्वप्रकृत्यनुगुणमेवाचरणं कुर्यादेवेति' मध्ये शम्बराचरितं तत्स्वभावानतिगमित्याभाष्य कृष्णेन 'ततस्तत' इत्यग्रेतनवृत्तं बुभुत्सितं तदेव श्रावयति श्रीशङ्करः—चिरतरसमयसम्प्राप्तप्राणप्रियविरहदुःखदीना, अत एव दीर्घकालात्ययेपि पतिदर्शनालाभेन निराशयोद्विग्ना मरणाय कृतनिश्चया मायावती निजकेशपाशं गले उद्बद्ध्य मर्त्तुं प्रवृत्ता—प्रियविरहदुःखं ह्यसह्यमबलानां यथाह कविकुलगुरुः—

इष्टप्रवासजनितान्यबलाजनस्य दुःखानि तावदतिमात्रसुदुःसहानि। इति। इष्टप्रवासजनितदुःखस्यातिमात्रमसह्यत्वे किमु वक्तव्यमतिदीर्घकालनष्टस्य प्रियस्य प्रवृत्त्यनासादनेन प्रियानिष्टमाशङ्कमानानां पतिव्रतानामिति युक्त एव तस्यास्तादृशो मर्त्तुमध्यवसायः।

(१८९) श्रीकृष्णेन 'अनाथाया अबलायाः काऽन्या गति'रिति कथनेन तस्या मरणमेव शरणमापद्यते इत्याशयवता 'ततस्तत' इत्यनेन—मृता केनचिदवष्टब्धा वेति ज्ञातुमातुरता प्रदर्शिता तां शमयन्नाह श्रीशङ्करः—तस्मिन्नेवावसरे शम्बरप्रेषितो राजसेवकः आगत्य मायावत्यै महामत्स्यमेकमर्पितवान्, जगाद च यदेष मत्स्य इदानीमेव भोजनावसरे संस्कार्य इत्याज्ञप्तं महाराजेनेति। अनेन मत्स्यानयनोपन्यासेन तदीयो मरणसङ्कल्पो विघ्नित इत्यावेदितम्। अनन्तरं च तस्या अतर्कितसम्भवा स्वाभिलषितसिद्धिरुपनिपतितेत्यपि वर्णयति—

श्रीशङ्करः—[१९०]ततो मायावतीतः सम्प्राप्तमायाशतविज्ञानेन कामदेवेन कृतं शम्बरेण सह महद्युद्धम्। कीदृशं युद्धं कृतं तद्देवलोकादागतेनापि विलोकितं प्राप्तसन्तोषेण च नारदेन।

नारदः—[१९१]नाऽद्यावधि मया दृष्टं कदाचिद् युद्धमीदृशम्॥
यादृशं कामदेवेन कृतमेकेन निर्भयम्॥ ९९॥

श्रीकृष्णः—भगवतो नारदस्याप्याश्चर्यजनकं युद्धमिति विस्मयते मनो मे। ततस्ततः?

श्रीशङ्करः—[१९२]ततो मायावतीभक्तिरसविवशौ मायावतीप्रार्थनया तस्याः प्राणप्रियरक्षणार्थं शम्बरनगरं गतावावाम्।

श्रीकृष्णः—अनन्यभक्तजनभक्तिभावाधीनावेव भगवन्तौ। ततस्ततः?

---

तस्मिन् सेवके गते मायावत्या स्वधितिना विदारिते तस्मिन् महामत्स्ये तदुदरादेव (पुरोवस्थितं कामं निर्दिश्य) अयं निजः प्राणप्रियदेवः प्राप्तः।

(१९०) एतत्सकलं शिवभक्तेरेव फलमिति 'श्रीसाम्बसदाशिवपदाब्जभक्तिकल्पलता न कदापि निष्फला भवतीति' वाक्यभङ्ग्या निरुच्य 'ततस्तत' इति पुनरपि जिज्ञासाकुलं श्रीकृष्णमाह श्रीशङ्करः—मायावतीतः प्राप्तं मायाशतविज्ञानं येन तादृशेन कामदेवेन, शम्बरेण सह महद् युद्धं कृतम्। इदानीं नारदाय मध्ये वचनावसरं ददाति—कीदृशं युद्धं कृतं कामदेवेन तद्देवलोकादागतेन नारदेनावलोकितं 'प्राप्तसन्तोषेणे'ति फलरूपं विशेषणं—अवलोकनेन सन्तोषं प्राप्तो नारदः—इत्याशयः। तदेष नारद एव युद्धवर्णनं श्रावयिष्यतीति भावः।

(१९१) श्रीशङ्करेणैव प्रदत्तावसरो नारदो युद्धं वर्णयति—एकेन असहायेन कामदेवेन निर्भयं यथास्यात्तथा शम्बरेण सह यादृशं युद्धं कृतमीदृशं युद्धमद्यावधि कदाचिदपि क्वापि मया न दृष्टमिति।

(१९२) अनेकदेवासुरयुद्धप्रसङ्गानवलोकितवतो नारदस्याप्याश्चर्यजनकं युद्धं निशम्य 'विस्मयते मनो मे' इति सहेतुकविस्मयप्रदर्शनपूर्वमग्रेतनवृत्तं ज्ञातुं ताम्यन्निवाह श्रीकृष्णः—'ततस्ततः?'। तदुत्तरव्याजेन श्रीशङ्करः—मायावत्याः भक्तिरसेन विवशौ—स्वेच्छापरित्यागपूर्वकं तदिच्छानुरोधेन प्रवर्त्तमानौ—आवामुभावपि मायावतीप्रार्थनया तस्याः प्राणप्रियस्य कामदेवस्य रक्षणार्थं शम्बरनगरं गताविति वक्ति।

श्रीशङ्करः—तत [१९३]एकविंशत्या दिवसैर्निहतः शम्बरः कामदेवेन । यो हि—

न त्वया न च रामेण नाऽर्जुनेन परेण वा ॥
वध्यो मायाशताज्ञेन हतो मायाशताम्बुधिः ॥ १०० ॥
एकेन कामदेवेन शम्बरः सबलार्णवः ॥
गृहीतं निखिलं राज्यं गृहीता निधयोऽखिलाः ॥ १०१ ॥

श्रीकृष्णः—[१९४]भगवन् ! भवत्कृपावलोके किं दुर्लभम् ? ततस्ततः ?

श्रीशङ्करः—ततः कामदेवस्य जयं रतेः परमानन्दप्राप्तिं विलोक्य सपरितोषौ कैलासं गन्तुं प्रस्थितावावां यावत्तावत् त्वदीयाः प्रार्थनाशब्दा आवयोः श्रवणातिथितां प्राप्तास्ततः कैलासमार्गं परित्यज्य द्वारकां प्रति गन्तुमाज्ञप्तं पुष्पकम् ।

श्रीकृष्णः—अहो निरवधि भक्तवात्सल्यं भगवतः । ततस्ततः ?

श्रीशङ्करः—[१९५]ततः—'कैलासमार्गमपहाय कुत्र गम्यते भगवता' इत्याभ्यां पृष्टेन मया प्रोक्तम्—

---

( १९३ ) 'अनन्यभक्तिभावाधीनावेव भगवन्ता' वित्यभिनन्द्य 'ततस्ततः' इति परिणामं ज्ञातुमुत्केन श्रीकृष्णेन प्रेरितः श्रीशङ्करः—'ततः कामदेवेन एकविंशत्या दिवसैर्निहतः शम्बर' इत्युक्त्वा कामदेवस्य तत् कर्म श्लाघते—न त्वया ( स्वयं श्रीकृष्णेन ) न च रामेण ( बलभद्रेण ) नाऽर्जुनेन नापि परेण वा केनचिदपि योऽसुरः शम्बरो वध्यः—हन्तुं शक्यः; तत्र हेतुमाह मायाशताज्ञेन इत्येतद्विशेषणं सर्वान्वयि; यतोऽसावसुरः स्वयं मायाशताम्बुधिः । यो हि मायाप्रयोगकुशलः स्यात् स एव मायाविनं जेतुं प्रभवेन्नापर इत्याशयः । तादृशः शम्बरः सबलार्णव एकेन—एकाकिना—कामदेवेन हतः । नैतावदेव तदीयं निखिलं राज्यं गृहीतं, निधयोऽप्यखिलाः गृहीताः स्वायत्तीकृता इत्यर्थः ।

( १९४ ) सर्वमेतद् भगवतः कृपावलोकसम्पन्नमिति 'किं दुर्लभमि'ति काक्वा प्रबोध्य 'ततः किं वृत्तमि'ति 'ततस्तत' इत्युक्त्वा जिज्ञासते श्रीकृष्णस्तावदेव श्रीशङ्करः—ततः कामदेवस्य जयं रतेश्च परमानन्दप्राप्तिं विलोक्य-सपरितोषावावां कैलासं गन्तुं प्रवृत्तौ तावत्त्वदीयाः शब्दा आवयोः श्रवणातिथितां प्राप्ताः । तत्क्षणमेव कैलासप्रस्थानोन्मुखं पुष्पकं ( विमानं ) व्यावर्त्त्य द्वारकामागन्तुमाज्ञप्तम्—एषोऽस्माकमत्रागमनस्य सप्रयोजनो वृत्तान्तः—

( १९५ ) अथापि सावशेषं वाक्यमाकलयन् 'अहो निरवधि भक्त-

चराचरात्मा पुरुषोत्तमः स्वयं यदोः कुले साम्प्रतमात्तजन्मा ॥
श्रीकृष्णचन्द्रः स्मरणं मदीयं करोति तत् तं प्रतिगन्तुमीहे ॥१०२॥
स मे परं मित्रमभेदभावं स मेऽन्तरात्मा स च मानसं मे ॥
अशेषविश्वावनवद्धदीक्षा स एव मे शक्तिरवर्णनीया ॥ १०३ ॥

श्रीकृष्णः—[१९६]भगवन् ! भक्तवात्सल्यविवशतया भवदीयानन्यभक्तगणपरमाणुरयं जनः पर्वतीक्रियते । अलमत्युपचारेण स्वकीयेऽनन्यभक्तेऽपि मयि । ततस्ततः ?

श्रीशङ्करः—ततो मद्वचनं श्रुत्वा—

"श्रुत [१९७]श्रीकृष्णचन्द्रीय–यशोबलपराक्रमौ ॥
आवां तं द्रष्टुमिच्छावो यद्याज्ञा श्रीमतोर्भवेत् ॥ १०४ ॥"

---

वात्सल्यं भगवतः' इति स्तुवन्नेव 'ततस्तत' इति पृच्छति श्रीकृष्णस्तं श्रीशङ्करः—तत आभ्यां रतिकामदेवाभ्यां 'कैलासमार्गमपहाय कुत्र गम्यते भगवते'ति पृष्टेन मया चराचरान्तर्यामी पुरुषोत्तमः स्वयं साम्प्रतं यदोः कुले आत्तजन्मा श्रीकृष्णचन्द्रः मदीयं स्मरणं करोति, अतस्तं प्रति गन्तुमीहे—इत्युत्तरितमित्याह । अन्यदपि यत्तदानीमुत्तरावसरे उक्तं तदप्यनुवदति—स श्रीकृष्णो मे भेदभावरहितं परं मित्रं, स मे अन्तरात्मा, स च मे मानसं—हृदयं,—किं बहुना अशेषविश्वस्यावने रक्षणे बद्धदीक्षा–गृहीतव्रता मे अवर्णनीया शक्तिः स एवेत्यपि मयोक्तमिति शेषः । तथा च शैवे पार्वतीं प्रति शिववाक्यम्—

'अतः शरीरभूतोऽसौ मम जातस्त्वदात्मना ।
यो हि नारायणः सा त्वं शक्तिः शक्तिमतो मम' ॥ इत्यादि ।

(१९६) केवलं दर्शनदानायैवागतमिव मन्यमानः श्रीकृष्णः शङ्करोक्तमुपचारपरतयैव नयन्नाह—भक्तवात्सल्यवशतया भवदीयभक्तगणपरमाणुमपि मां पर्वतीकरोषीत्यलमुपचारेण मय्यनन्यभक्ते, इत्युक्त्वा यदतः परमवशिष्यते वक्तव्यं तदेवोपक्रम्यतामिति 'ततस्तत' इत्यनेनावेदयति ।

(१९७) ततो मदीयं द्वारकागमनसङ्कल्पं विज्ञाय—'श्रुताः श्रीकृष्णसम्बन्धिनो यशोबलपराक्रमाः याभ्यामेतादृशावावां—(रतिकामदेवौ) यदि श्रीमतः—(शङ्करस्य) आज्ञा भवेत् तर्हि तं श्रीकृष्णं द्रष्टुमिच्छावः' इति ताभ्यां प्रार्थितोऽहं 'प्रियं मे समारोहतं पुष्पकमि' त्याज्ञाप्य ताभ्यां सह शम्बरनगरादत्र समागतः; अनयोर्दम्पत्यो रतिकामदेवयोश्च सर्वं वृत्तान्तजातं निवेदितम् । एतस्मिन् वृत्तान्ते विस्मयावहान् प्रसङ्गान् परिगणयन् दैवानुकूल्यमुत्तरङ्गयति श्रीशङ्करः—विचार्यतामिदानीम्—क्व हिमाद्रिशिखरे-

इति ताभ्यां प्रार्थितोऽहं 'प्रियं मे, समारोहतं पुष्पकम्' इत्युक्त्वा आभ्यां दम्पतीभ्यां सह शम्बरनगरादत्रागतोऽस्मि। दम्पत्योश्चानयोः सर्वं वृत्तं कथितम् । विचार्यतामिदानीं—क हिमाद्रिशिखरे भस्मावशेषभवनं, क मत्स्योदरादुत्पत्तिः, क पूर्वजन्मप्रियतमासमागमः, क मायाशतविज्ञानसम्पादनं, क सुरासुरैरप्यजेयस्य सबलार्णवस्य शम्बरस्य पराकरणं, क तद्राज्यापहरणं, क च मयैव पूर्वं क्रोधेन्धनदग्धस्य तस्य रक्षणार्थं कैलासाच्छम्बरनगरगमनमेतत् सर्वं पतिव्रताशिरोमणिभूताया वत्साया रतेरनन्यभक्तेरेव फलम् । न खलु कदापि भक्तिकल्पलता निष्फला भवति ।

म्ववती—( [१९८]उत्थाय साञ्जलिबन्धम् ) परमकृपापीयूषपारावार परमेश्वर ! अस्माकं प्राणनाथेनाबाल्यादनुदिनमनन्या प्रेमलक्षणा भवद्भक्तिः परिशील्यते सा कदा फलिष्यति ?

---

भस्मावशेषभवनं, ( मद्भालनेत्राग्निना ) क मत्स्योदरादुत्पत्तिः, क पूर्वजन्मप्रियतमया ( रत्या ) समागमः, क मायाशतविज्ञानं (तस्या एव मायावतीभूतायाः सकाशात् ) क सुरासुरैः समुदितैरपि जेतुमसुकरस्य सबलार्णवस्य शम्बरस्य पराकरणं ( पराजयः ), क तद्राज्यापहरणं, ( पूर्वोक्तप्रसङ्गेभ्योऽप्यधिकविस्मयहेतुं प्रसङ्गमुपन्यस्यति ) क च मयैव पूर्वं क्रोधेन्धनदग्धस्य तस्य ( कामदेवस्य ) रक्षणार्थं ममैव कैलासाच्छम्बरनगरागमनम्; इत्येतत् सर्वं पतिव्रताशिरोमणीभूताया रतेरनन्यभक्तेरेव फलम् । भक्तेरेव महिमानं दृढीकर्त्तुमाह—न खलु भक्तिकल्पलता कदापि निष्फला भवतीति । इदं तद्बिन्दुनामकं पताकास्थानं नाट्याङ्गम् । यदाह धनञ्जयः—

पताकास्थानकान्यत्र बिन्दुरन्ते च बीजवत् ।

इति पूर्वं प्रकृतस्य पुत्रप्राप्त्यादिलक्षणस्य श्रीकृष्णचन्द्राभ्युदस्य श्रीशङ्करमुखाद् व्याकरणार्थं तन्मुखादेव प्रथमं जाम्बवतीमनसि प्रार्थनाकरणाय 'न खलु भक्तिकल्पलता निष्फला भवती'ति बीजवदुद्भेदनादयं बिन्दूपन्यासः ।

( १९८ ) एतच्छ्रुत्वैव जाम्बवती उत्थाय साञ्जलिबन्धं व्यजिज्ञपत्—हे परमकृपापीयूषपारावार ! परमेश्वर !—प्रथमसम्बोधनेन दयादरिद्रत्वाभावो द्वितीयसम्बोधनेन शक्त्यभावाभावश्च बोधितः—एतादृशस्य तव भक्तिरस्मत्प्राणनाथेन बाल्यादारभ्याद्य यावदनुदिनमनन्या प्रेमलक्षणा या परिशील्यते सा कदा फलिष्यति ? पूर्वोक्तविशेषणद्वयविशिष्टस्य स्वानन्यभक्ताभीष्टसाधने विलम्बो नोचितः, प्रत्युत स्वोक्तस्य 'न कदापि भक्तिकल्पलता निष्फले' त्यादिव्याहारस्य-

श्रीशङ्करः—वत्से ! ननु फलितैव ।

जाम्बवती—[199]भगवन् ! भगवद्दृष्ट्या फलितापि मद्दृष्ट्या न फलितास्ति !

श्रीशङ्करः—कथमिव ?

जाम्बवती—कमलदलविशाललोचनो मे
सुखयति नेत्रयुगं न रौक्मिणेयः ।।
शिवकर शिव यावदत्र तावत्
कथमिव ते फलितां वदामि भक्तिम् ।। १०५ ।।

श्रीशङ्करः—( सानन्दम् ) [200]धन्यासि वत्से ! धन्यासि । अयि देवकी-वसुदेवौ ! वत्स वलभद्र ! वत्स श्रीकृष्णचन्द्र ! वत्से रुक्मिणि ! वत्से जाम्बवति ! वत्से सत्यभामे ! वत्साः समस्ताः श्रीकृष्ण-चन्द्रराज्ञ्यो ! वत्सोग्रसेन ! वत्सा उद्धवाक्रूरभीमार्जुनसात्यकिकृत-वर्माणः ! सर्वे पौरा जानपदाश्च शृणुत ।

---

व्यभिचारोपीति सर्वथा नात्रोपेक्षया चिरयितुं साम्प्रतमिति प्रवलप्रयोजकव्यापार-पारवश्यप्रयुक्तप्रत्यग्रप्रसादासादनध्वनिः ।

( १९९ ) शिवाशयमजानानाया जाम्ववत्याः ‘ वत्से ! ननु फलितैव श्रीकृष्णस्य भक्तिकल्पलतेति ’ शङ्करवाक्यश्रवणेपि स्वाभीष्टलाभविरहमेव प्रकट-यति जाम्ववती—भगवन् ! भवद्दृष्ट्या ( श्रीकृष्णचन्द्रराज्ञीनां सर्वासां पुत्ररत्नरूप-फललाभेन ) फलितापि मदीयदृष्ट्या न फलितेत्याह—‘कथमिवे’ति श्रीशङ्करेण पृष्टा च स्वमनोगतं भक्तेः फलितताभावसाधकं हेतुं विवृणोति । यावत् ( अत्र आगत्येतिशेषः ) कमलदलविशाललोचनः रौक्मिणेयः—प्रद्युम्नः—मे नेत्रयुगं न सुखयति तावत् हे शिवकर शिव ! ते भक्तिं कथमिव फलितां वदामि ? न कथमपीतिभावः ।

( २०० ) सपत्न्या अपि तादृशं मिथो दुःखसंविभागित्वमालक्ष्य प्रीतः शिवः सानन्दं स्वानुग्रहं विवरितुकामो ‘ धन्यासी’ति जाम्ववतीमभिनन्द्य ‘ देवकीवसुदेवौ !’ इत्यारभ्य ‘ पौरा जानपदाश्च !’ इत्यन्तेन सर्वान् सम्बोध्य ‘ शृणुत ’ इति पदेनाभिमुखीकृत्य ‘ भगवन् सर्वे ( वयं ) सावधानाः स्मो भग-वद्वचनामृतरसं पातु ’मिति दत्तावधानान् सर्वानालक्ष्य श्रावयति—यः सूतिकासद-नतः असुरेण अपहृतः समुद्रे क्षिप्तश्च रौक्मिणेयः प्रतिदिनं मया प्रणयात् संर-क्षितः सोऽयं नवकामदेवः पुरः सम्मुखावस्थित एव विजयते । येन नवकाम-देवेन समिति—सङ्ग्रामे—उग्रवीर्यः शम्बर आहतः, येन च सपदि तदीयं राज्य-पदं हृतं, तमेनं कामं पूर्वजन्मजायया रत्या अन्वितमिन्दुवक्त्रं रुक्मिणीतनयमवेत

सर्वे—( बद्धाञ्जलि ) भगवन् ! सर्वे सावधानाःस्मो भगवद्वचनामृतरसं पातुम् ।

श्रीशङ्करः—यः सूतिकासदनतोऽपहृतोऽसुरेण
क्षिप्तश्च हन्त जलधौ किल रौक्मिणेयः ॥
संरक्षितः प्रतिदिनं प्रणयान्मया यः
सोऽयं पुरो विजयते नवकामदेवः ॥ १०६ ॥
येनाहतः समिति शम्बर उग्रवीर्यो
येनाहृतं सपदि राज्यपदं तदीयम् ॥
तं रुक्मिणीतनयमेनमवेत कामं
तत्पूर्वजन्मवनितान्वितमिन्दुवक्त्रम् ॥ १०७ ॥

( रौक्मिणेयं प्रति ) अयि वत्स ! प्रणम सवधूकस्ते पितामहीपितामहौ पितृव्यं पितरं मातॄश्च सर्वाः ।

कामः—यथाज्ञा देवदेवस्य ( इत्युक्त्वा रत्या सहितः सर्वान् प्रणमति, सर्वे च सानन्दाश्रुपातमालिङ्गन्ति वधूवरौ ) ( अत्रान्तरे श्रीराजराजेश्वरमन्दिरात् प्रतिनिवृत्तः सवधूकः साम्बोपि सर्वान् प्रणमति )

रुक्मिणी—( साश्रुपातम् ) [२०१]वत्स ! प्रथमं जाम्बवतीमेवैतां प्रणम, यया हठात् त्वद्दर्शनं श्रीकृष्णचन्द्रात् श्रीसाम्बशिवाच्च याचितम् । यस्या एव हठेन वयं सर्वाः कृतार्थाः । एनं तस्यास्तनयं सवधूकं साम्बमाश्लिष्य सौहार्दसुधासिन्धुमग्नो भव ।

कामः—यथाज्ञा श्रीमातृचरणानाम् ( इत्युक्त्वा साम्बमालिङ्गति )

---

जानीत । आचारप्रतिपत्तये च रौक्मिणेयं प्रत्याह--अयि वत्स ! सवधूकस्त्वमुपस्थितौ ते पितामहीपितामहौ—देवकीवसुदेवौ, पितृव्यं बलभद्रं, पितरं श्रीकृष्णं, रुक्मिणीप्रमुखाः सर्वा मातॄश्च प्रणम ।

( २०१ ) शिवाज्ञामनुमान्य यावत्सवधूकः कामः सर्वान्यथोक्तक्रमेण प्रणमति, अत्रान्तरे राजराजेश्वरमन्दिरात् प्रतिनिवृत्तं सर्वान् प्रणमन्तं सवधूकं साम्बं दृष्ट्वा सहर्षाश्रुपातं रुक्मिणी—वत्स ! यया हठात्कारेण श्रीकृष्णचन्द्रात्साम्बसदाशिवाच्च त्वद्दर्शनं याचितमासादितञ्च तामेतां जाम्बवतीं प्रथमं प्रणम; यस्या एव हठेन वयं सर्वे कृतार्थाः जाता इति शेषः। साम्बं निर्दिश्य—एनं तस्यास्तनयं साम्बमाश्लिष्य सौहार्दसुधासिन्धुमग्नो भवेत्याह । अत्र सवधूकमिति केवलमुद्देश्यविशेषणमेव न विधेयविशेषणम्, आश्लेषे केवलं साम्बस्यैवान्वययोग्यत्वात् ।

(आकाशात् [२०२]पुष्पवृष्टिः पतति)

सर्वे—जयतुजयतु भक्तवत्सलो भगवान् श्रीमहेश्वरः (इत्यानन्दकोलाहलः)

(शनैः शनैर्निवृत्ते तस्मिन्नानन्दकोलाहले सिंहासनादुत्थाय)

श्रीशङ्करः—[२०३]श्रीकृष्ण ! तेऽभ्युदयवीक्षणदग्धचित्ता
अन्तःकियन्त इति वेद्म्यहमेव न त्वम् ॥
तान् हन्तुमेतदवितुं जगदुर्वराया
भारं विनेतुमिदमद्य गृहाण चक्रम् ॥ १०८ ॥

(एवमुक्त्वा श्रीकृष्णाय चक्रं ददाति)

श्रीकृष्णः—(सहर्षमुत्थाय) महानयमनुग्रहः। (इति वदंश्चक्रं हस्ते गृहीत्वा प्रणमति)

श्रीशङ्करः—[२०४]किन्ते भूयः प्रियं करोमि ?

---

(२०२) मातुराज्ञामनुसृत्य यावत्साम्बमालिङ्गति प्रद्युम्नस्तावदाकाशात् पुष्पवृष्टिः पतिता, तदालोकनेन भगवतो महेश्वरस्य जयोद्घोषो लोककृतः। महेश्वरानुग्रहेणैव श्रीकृष्णस्यैतावदभ्युदयसिद्धेस्तस्यैव महेश्वरस्य जयोद्घोषणं प्राप्तावसरमिति भावः।

(२०३) आनन्दकोलाहले विरते श्रीशङ्करः श्रीकृष्णमाधिकारिकव्यक्तिभावभाजं मत्वाऽनुगृह्णाति—हे श्रीकृष्ण ! ते अभ्युदयवीक्षणेन दग्धचित्ताः अन्तस्त्वदीयोत्कर्षासहिष्णवः कति सन्तीति अहमेव वेद्मि, सर्वज्ञत्वात्, त्वं न वेत्सि इति शेषः। अत्र 'त्वं न वेत्सि' इति श्रीकृष्णस्य नाज्ञत्वकथने तात्पर्यमपितु सत्त्वस्वभावतयोपेक्षयाऽनादरेण वा तान् प्रति लक्ष्यदानाभावप्रयुक्तमवगणनमिति भावः। अथवा त्वदभ्युदयवीक्षणेनान्तर्दग्धाः कियन्तः सन्तीति केवलमहमेव न वेद्मि किन्तु त्वम् अपीति शेषः, सर्वान्तर्यामित्वादित्यर्थः। तान् ते अहितान् हन्तुं—परिपन्थिपराकरणमन्तरा जातस्याप्यभ्युदयस्य सप्रत्यूहत्वमाशङ्क्येतेति तेषां पराभवोपायप्रदानेनाभ्युदयस्य शाश्वतिकपर्यवसितत्वं व्यञ्जितम्। किञ्च एतद् जगद् अवितुं, जगद्रक्षणाधिकारस्यानायासेन निर्वहणार्थमित्यर्थः। अपिच उर्वराया धरित्र्या भारं, पृथिव्या भारभूतांश्च—विनेतुमपनेतुं नाशयितुमिति यावत्। एतच् चक्रं सुदर्शनाख्यं गृहाण। एवमुक्त्वा श्रीकृष्णाय चक्रमर्पयति।

(२०४) श्रीकृष्णश्चक्रं प्रतिगृह्य 'महानयमनुग्रह' इत्युपचर्य प्रणमति; ततः श्रीशङ्करः—'किन्ते भूयः प्रियं करोमी'ति सानुग्रहोद्रेकमुपच्छन्दयति।

'वराप्तिः काव्यसंहारः प्रशस्तिः शुभसूचनम्'

श्रीकृष्णः—[२०५]प्राप्तः षोडशवत्सरेऽत्र जनितो यः सप्तमे वासरे
दैत्येनापहृतोऽप्यनन्यशरणः श्रीरुक्मिणीनन्दनः ॥
हत्वा शम्बरमुग्रवीर्यमखिलं हृत्वा तदीयं धनं
कान्तासंयुत एष ते करुणया, किं वा प्रियं स्यात्ततः ? ॥१०९॥

किञ्च—साम्बो जाम्बवतीसुतोपि कुरुभिर्बद्धो निजे पत्तने
जित्वा तान् कुरुराजराजतनयायुक्तः समभ्यागतः ॥
एता आप्तसुपुत्ररत्नदशकाः सर्वा महिष्यो हि मे
देव ! त्वदुदयोदयश्च विजयः किन्नः प्रियं स्यात्ततः ? ॥११०॥

चरणकमलरेखाचक्रतश्चक्रमुग्रं ॥
दिनकरनियुताभं संविधायाशु शम्भो ॥
सपदि करतले मेऽभ्यर्पितं विश्वरक्षां
रचयितुमिह तस्मात्किंपरं नः प्रियं स्यात् ? ॥ १११ ॥

तथापीदमस्तु भरतवाक्यम् ।

---

इति धनञ्जयोक्तलक्षणलक्षितः काव्यार्थस्य संहरणात् काव्यसंहार इति प्रसिद्धं चरमं नाट्याङ्गमुपनिबध्नाति कविर्नाट्यसम्प्रदायमनुरुन्धानः ।

(२०५) श्रीशङ्करोदीरितं बहुमन्यमानः श्रीकृष्णो वरणीयशेषाभावमाभाष्य सिद्धं सकलं निजाभ्युदयमनूद्य निखिलजगतां कल्याणमाशास्ते—प्राप्त इत्यादिना । अत्र द्वारकायां जनितो यः सप्तम एव वासरे दैत्येनापहृतः श्रीशङ्करं भवन्तमन्तरेण अन्यशरणरहितः श्रीरुक्मिणीनन्दनः प्रद्युम्नः, उग्रवीर्यं शम्बरं हत्वा, अखिलं तदीयं धनं हृत्वा, एषः पुरोऽवस्थितः षोडशवत्सरे (समये-व्यतीते) ते करुणया प्राप्तः; ततः परमधिकं किन्नोऽस्माकमन्यत् प्रियं स्यात् । किञ्च—साम्बो जाम्बवतीसुतोपि कुरुभिर्निजे पत्तने बद्धस्तद्बन्धनाद् विमुक्तस्तान् कुरून् जित्वा कुरुराजराजतनयया हरणप्राप्तया युक्तः समागतः, एताश्च सर्वा मे महिष्यो राज्ञ्यः प्रत्येकमाप्तसुपुत्ररत्नदशका जाताः, सोयं सर्वोपि हे देव त्वदुदयया उदयो विजयश्च वरीवर्त्ति; ततः परमधिकं किं नः प्रियं स्यात् । अपिच—हे शम्भो ! चरणकमलरेखाचक्रत उग्रं दिनकरनियुताभं आशु चक्रमुत्पाद्य मे करतले सहसाऽभ्यर्पितं । किमर्थमित्याह—विश्वरक्षां रचयितुमिह लोके इति शेषः । तस्मात्परमधिकं नः प्रियं किं स्यात् ? न किमप्यवशिष्यत इत्यर्थः । तथापीदमस्तु भरतवाक्यम् । अम्बुधरा वर्षन्तु यथाकाममिति शेषः, धरा च वरा बीजप्ररोहाद्यनुकूलाऽत एव सतामुत्तमानां धान्यानां शाल्यादीनां सम्पदं धरतीति तथा

वर्षन्त्वम्बुधरा धराऽस्तु च वरा सद्धान्यसम्पद्धरा
सन्तु श्रीसुखिनो नृपाश्च सुखिनी भूपालभक्ता प्रजा ॥
सर्वेषां शिवमस्तु विश्वमखिलं हृष्टं च पुष्टं सदा
कारुण्यामृतसागरौ हरिहरावानन्ददौ स्तां च नः ॥ ११२ ॥

( निष्क्रान्ताः सर्वे )

इति श्रीमत्केशवगुरुकृपाकल्पवल्लरीपल्लवायमाने महामहोपाध्याय-
श्रीग्रकविशङ्करलालकृतौ श्रीकृष्णचन्द्राभ्युदयनाम्नि नाटके
पञ्चमोऽङ्को नाटकं च समाप्तिमगमत् ॥

दीपोत्सवे पश्चिमरात्रभागेऽभवत्सुपूर्णं मम मानसे यत् ।
गुरोः प्रसादेन महेश्वरस्य श्रीकेशवस्यापि च मे दयाब्धेः ॥ १ ॥
पूर्णं पुनर्लेखविधौ तदेतद्धरेः प्रबोधाह्नि सौम्यवारे ।
नन्दाङ्कनन्देन्दुमिते सुवर्षे कृष्णोदयं श्रीदयया गुरूणाम् ॥ २ ॥
श्रीकृष्णचन्द्राभ्युदयाह्वयं नाटकमर्प्यते । मया श्रीकृष्णचन्द्राय महेश्वरपरात्मने ३ ॥
श्रीकृष्णचन्द्राभ्युदयं दृष्ट्वा दृष्ट्या दयार्द्रया।श्रीकृष्णचन्द्रो भूयान्नः सर्वदाभ्युदयप्रदः
आहिच्छत्रकुलैकभूषणमणेः पुत्रो महेशस्य यः
श्रीमत्केशवशास्त्रिसद्गुरुकृपालोकैकपात्रं च यः ॥
यस्यात्मैव वपुर्हरः प्रियसुहृद्रत्नं जटाशङ्कर-
स्तस्येयं कृतिराशु तुष्यतु तया श्रीशैलजावल्लभः ॥ ५ ॥

---

विधास्तु; नृपाश्च श्रिया सुखिनः सन्तु, तदीया प्रजा च भूपालभक्ता सती सुखिनी भवतु, प्रजायाः सुखित्वे परमं कारणं राजभक्तिरिति सैवात्र पुरस्कृता; सर्वेषां शिवमस्तु, अखिलं विश्वं सदा हृष्टं पुष्टं चास्तु, करुणामृतसागरौ च हरिहरौ नोऽस्माकमानन्ददौ स्तां भूयास्तामित्याशीरर्थनान्तोऽपवर्गः ।

इति श्रीसद्गुरुवर्यकेशवकृपाकल्पवल्लरीपल्लवायमानश्रीकृष्णचन्द्राभ्युदय-
नाम्नो नाटकस्य टीकायां ज्योत्स्नाभिधायां परममाहेश्वरहरिशङ्करात्मज-
पण्डितहाथीभाईप्रणीतायां पञ्चमोऽङ्कः समाप्तः ॥

संवद्गुणाश्वनन्देन्दौ माघशुक्लाष्टमीदिने । श्रीजामनगरेटीका भौमवारे समापिता ॥

यः ख्यातो हरिशङ्करात्मज इति त्रैविद्यमोढद्विजो
यश्चाऽकारि नरेन्द्रजामरणजित्सिंहैः सभापण्डितः ॥
सम्राट्पञ्चमजोर्जतोऽपि लभते यः सत्क्रियां मानदां-
हाथीभाइपदाभिधः कृतिरियं तस्याऽस्तु शर्वार्पिता ॥

